

श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितं

# श्रीमद् ब्रह्मसूत्रभाष्यम्

महामहोपाध्याय-श्रीमुष्णं-व्याकरण-सुब्बरायाचार्यविरचितया

## भाष्यार्थसहितसूत्रार्थमणिमञ्जरी

व्याख्यया सहितम्

(तृतीय-चतुर्थाध्यायौ)






अनुग्राहकसम्पादकाः

**श्रीविद्येशतीर्थश्रीपादाः**

श्रीभण्डारकेरिमठः, उडुपि.

सम्पादकः

**डा. ए.वि. नागसम्पिगे**

निर्देशकः, पूर्णप्रज्ञसंशोधनमन्दिरम्, बेङ्गलूरु



प्रकाशनम्

श्री ऐतरेयशोधप्रकाशनपीठम्,

श्रीभागवताश्रमः, श्रीभण्डारकेरिमठः,

गिरिनगरम्, बेङ्गलूरु

श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितं

# श्रीमद् ब्रह्मसूत्रभाष्यम्

महामहोपाध्याय-श्रीमुष्णं-व्याकरण-सुब्बरायाचार्यविरचितया

## भाष्यार्थसहितसूत्रार्थमणिमञ्जरी

व्याख्यया सहितम्

(तृतीय-चतुर्थाध्यायौ)


अनुग्राहकसम्पादकाः

**श्रीविद्येशतीर्थश्रीपादाः**

श्रीभण्डारकेरिमठः, उडुपि.

सम्पादकः

**डा. ए.वि. नागसम्पिगे**

निदेशकः, पूर्णप्रज्ञसंशोधनमन्दिरम्, बेङ्गलूरु



प्रकाशनम्

श्री ऐतरेयशोधप्रकाशनपीठम्,

श्रीभागवताश्रमः, श्रीभण्डारकेरिमठः,

गिरिनगरम्, बेङ्गलूरु

# श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितं श्रीमद् ब्रह्मसूत्रभाष्यम्

## महामहोपाध्याय-श्रीमुष्णं-व्याकरण-सुब्बरायाचार्यविरचितया भाष्यार्थसहितसूत्रार्थमणिमञ्जरीव्याख्यया सहितम् (तृतीय-चतुर्थाध्यायौ)

(श्रीविद्यामान्यतीर्थजन्मशतमानोत्सव-श्रीविद्येशतीर्थषष्टिपूर्तिमहोत्सवस्मारकप्रकाशनम्)


अनुग्राहकसम्पादकाः **श्रीविद्येशतीर्थश्रीपादाः**, श्रीभण्डारकेरिमठः, उडुपि.

सम्पादकः **डा. ए.वि. नागसम्पिगे**
निदेशकः, पूर्णप्रज्ञसंशोधनमन्दिरम्, बेङ्गलूरु

प्रकाशनम् **श्री ऐतरेयशोधप्रकाशनपीठम्,**
**श्रीभागवताश्रमः, श्रीभण्डारकेरिमठः,**
**गिरिनगरम्, बेङ्गलूरु**

प्रथममुद्रणम् २०१५

पृष्टसङ्ख्या ४२ + ४३५

मूल्यम् ३०० रूप्यकाणि

मुद्रणम् पवन् प्रिण्टर्स्, बेङ्गलूरु

# किञ्चिन्निवेदनम्

प्रथमाध्याये गुणपूर्णत्वसिद्ध्यर्थं सकलवैदिकशब्दसमन्वयः विहितः । तदुक्तम्- 'अतोऽनन्तगुणं ब्रह्म यच्छब्दा योगवृत्तयः' इति । द्वितीयाध्याये विष्णोर्गुणपूर्णत्वदृढीकरणाय युक्ति-समय-श्रुति-न्यायोपेतश्रुतिविरोधाभाव उपपादितः । इदमिदानीं तृतीय-तुरीयाध्यायसारः निरूप्यते ।

**तृतीयाध्यायसारः**

विदितमेवेदं समेषां विदुषां यत् साधनजातमवलम्ब्यैव बद्धो जीवः संसाराद् अपारात् मुच्यत इति । बद्धानां जीवानां मुक्तिः साधनानुष्ठानेन भवतीति निश्चप्रचम् । तत्र तु कानि साधनानि सम्पादनीयानि इति अवश्यं विचारणीयम् । अस्ति हि दार्शनिकेषु बहोः कालात् विप्रतिपत्तिः साधनस्वरूपविषये । केचन ब्रुवते ज्ञानेन केवलेन भवति मुक्तिरिति । अपरे तु यागादिवेदोक्तकर्मणा मुक्तिर्जायत इति सङ्गिरन्ते । अन्ये केचन रथस्य चक्रद्वयमिव ज्ञानं कर्म च उभयमपि आवश्यकमिति मन्वते । भगवान् बादरायणस्तु श्रौतीं प्रतिपत्तिं मानयानः कर्म ज्ञानसाधनं, ज्ञानेनैव परं पदमिति स्वाशयमाविश्चकार सूत्रेषु । सूत्रव्याख्यातार अपि तत्तत् समयसंस्कारवशात् दर्शनान्तरवासनया च भिन्नामेव विचारप्रणालीं प्रदर्शयामासुः । अतः साधनानि किंलक्षणकानि कथं च सम्पादनीयानीति माध्वीं विचारप्रणालीमनुसृत्य विमर्शोऽत्र विधीयते ।

**वैराग्यपादः**

ब्रह्मसूत्रेषु तृतीयाध्याये प्रथमपादे वैराग्यजनकसामग्रीविशेषनिरूपणं कृतम् । द्वितीये पुनर्भक्तिजननार्थम् अपेक्षिता सामग्री विव्रियते । तृतीये पुनरुपासनायाः स्वरूपं सविस्तरमुपवर्ण्यते । तुरीये पादे ज्ञानमाहात्म्यमिति चतुर्ष्वपि पादेषु चतुरङ्गं साधनं सूक्ष्मेक्षिकया विमृश्यते ।

अत्रेदं न विस्मर्तव्यं यत् वैराग्यं नोपदेशेन सम्पादयितुं शक्यत इति । अतः यस्य संसारे वैराग्यमभिलषितं तेन संसारे विद्यमाना असह्याः दोषा अनुसन्धेयाः । तेन च संसारे जिहासा प्रजायते । न हि मुक्तिर्नाम भूतबन्धात् कादाचित्कात् विनिर्मुक्तिः । अपि तु भौतिकात् परमसूक्ष्माच्च लिङ्ग-शरीरादपि । सा च न मरणमात्रेण सम्भवति अपि तु ज्ञानजनकविरक्त्यैकसाध्या । तस्मात् मृतिसमनन्तरं जनिपर्यन्तमपि संसारस्वरूपं कथं क्लेशावहमिति विवेचनीयम् । उक्तं हि भगवता बादरायणेन- 'तदन्तरप्रतिपत्तौ रंहति सम्परिष्वक्तः प्रश्ननिरूपणाभ्याम्' (ब्र.सू. ३.१.१) इति ।

अस्य चायमाशयः- न कदाचित् देहवियोगे भूतानां विनिवृत्तिर्भवति। अपि तु देहिनः देहान्तरप्राप्तावपि सूक्ष्मरूपेण भूतानि अनुवर्तन्त एव। तस्माद् आमुक्ति न तेषां भवति वियुक्तिः। अतः अनादिबन्धस्य विनिवृत्तये सम्पादनीया असारेऽस्मिन् संसारे विरक्तिः। न हि जननमरणचक्रात् अनादिकालादपि प्रवर्तमानात् वैराग्यमन्तरा विनिवृत्तिः कल्पयितुमपि शक्यते। जीवस्य चास्मात् शरीरात् विनिर्गतस्य यथाकर्म स्वर्गनरकादिप्राप्तिः भविष्यति। प्रायः अस्माभिः बहूनि पापकर्माणि क्रियन्त इति तु विदितमेव। तेषां तु अनुभवेन विनाशः अत्यन्तमसम्भावितः। उदाहृतं हि भगवता मध्वदेवेन व्यासवचनम्-

'आचतुर्दशमात् वर्षात् कर्माणि नियमेन तु।
दशावराणां देहानां कारणानि करोत्ययम्॥' (ब्र.सू.भा. ३.१) इति।

अनेन चेदं विज्ञायते- रक्तबीजासुरसन्ततिरिव कर्मसन्ततिरपि नितान्तं प्रवर्धतैव। न हि तस्या भोगेन क्षयः सम्भवति। सन्ति हि महापातकसुमहत्तरपातकादीनि आमन्वन्तरमादिनकल्पं च नरकप्रदायीनि नृणाम्। सति चैवं कथं कर्मणा जीवस्य विमुक्तिरिति सन्देहः शिष्यत एव। पापं ह्यनुतापवतः ज्ञानपूर्वं प्रायश्चित्तविधिमाचरतः कथञ्चिन्निवर्तेताऽपि। तथाऽपि अनन्तजन्मसु कृतं पापं न केवलं प्रायश्चित्तविधिनाश्यं किन्तु विरागजातात् सुदृढात् ज्ञानादेवेति निर्विवादम्। सहस्रलक्षाधिकवत्सरपर्यन्तं नरके वसन् जीवः पुण्यपापशेषवानेव मातृशरीरं प्रविशति। तत्रापि गर्भे जन्मशतदुःखं स्मरन् नानाविधयातनामनुभवंश्च नितान्तं क्लिश्यति। उपरमश्चैवंविधात् संसारकूपारात् वैराग्यमन्तरा नैव सम्भवतीति वैराग्यजननार्थं संसारस्य असारता दुःखप्रचुरता च जिज्ञासूनां प्रथमे पादेऽत्र विविच्यते।

**भक्तिपादः**

यथा विरक्तिः वस्तुदोषविज्ञानाज्जायते तथैव कापि प्रीतिरपि भक्त्यपरनामिका वस्तुसौन्दर्यगुणविज्ञानसापेक्षा जायते। अत एवेह न भक्तिलक्षणं विस्तरेण विमृष्टमपि तु भक्तिजननोपायः विस्तरेण निरूपितः। यस्मिन् पुरुषे भक्तिरभिलषिता तस्य गुणाः ज्ञातव्याः। यावन्तः गुणाः विज्ञायन्ते तावती भक्तिरभिवर्धत इत्यनुभवसिद्धम्। अत एव भगवती श्रुतिः परमपुरुषे नारायणे समादरजननाय गुणततिं ब्रवीति- 'यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति। यत् प्रयन्ति अभिसंविशन्ति। तद्विजिज्ञासस्व। तद् ब्रह्म' इति। (तै.उ. ३.१) 'सत्यं ज्ञानमनन्तं ब्रह्म' (तै.उ. २.२.)। 'यः सर्वज्ञः स सर्ववित्' (आथर्व.उ. १.९)। 'कविर्मनीषी परिभूः स्वयम्भूः याथातथ्यतोऽर्थान् व्यदधात्

# किञ्चिन्निवेदनम्

प्रथमाध्याये गुणपूर्णत्वसिद्ध्यर्थं सकलवैदिकशब्दसमन्वयः विहितः । तदुक्तम्- 'अतोऽनन्तगुणं ब्रह्म यच्छब्दा योगवृत्तयः' इति । द्वितीयाध्याये विष्णोर्गुणपूर्णत्वदृढीकरणाय युक्ति-समय-श्रुति-न्यायोपेतश्रुतिविरोधाभाव उपपादितः । इदमिदानीं तृतीय-तुरीयाध्यायसारः निरूप्यते ।

**तृतीयाध्यायसारः**

विदितमेवेदं समेषां विदुषां यत् साधनजातमवलम्ब्यैव बद्धो जीवः संसाराद् अपारात् मुच्यत इति । बद्धानां जीवानां मुक्तिः साधनानुष्ठानेन भवतीति निश्चप्रचम् । तत्र तु कानि साधनानि सम्पादनीयानि इति अवश्यं विचारणीयम् । अस्ति हि दार्शनिकेषु बहोः कालात् विप्रतिपत्तिः साधनस्वरूपविषये । केचन ब्रुवते ज्ञानेन केवलेन भवति मुक्तिरिति । अपरे तु यागादिवेदोक्तकर्मणा मुक्तिर्जायत इति सङ्गिरन्ते । अन्ये केचन रथस्य चक्रद्वयमिव ज्ञानं कर्म च उभयमपि आवश्यकमिति मन्वते । भगवान् बादरायणस्तु श्रौतीं प्रतिपत्तिं मानयानः कर्म ज्ञानसाधनं, ज्ञानेनैव परं पदमिति स्वाशयमाविश्चकार सूत्रेषु । सूत्रव्याख्यातार अपि तत्तत् समयसंस्कारवशात् दर्शनान्तरवासनया च भिन्नामेव विचारप्रणालीं प्रदर्शयामासुः । अतः साधनानि किंलक्षणकानि कथं च सम्पादनीयानीति माध्वीं विचारप्रणालीमनुसृत्य विमर्शोऽत्र विधीयते ।

**वैराग्यपादः**

ब्रह्मसूत्रेषु तृतीयाध्याये प्रथमपादे वैराग्यजनकसामग्रीविशेषनिरूपणं कृतम् । द्वितीये पुनर्भक्तिजननार्थम् अपेक्षिता सामग्री विव्रियते । तृतीये पुनरुपासनायाः स्वरूपं सविस्तरमुपवर्ण्यते । तुरीये पादे ज्ञानमाहात्म्यमिति चतुर्ष्वपि पादेषु चतुरङ्गं साधनं सूक्ष्मेक्षिकया विमृश्यते ।

अत्रेदं न विस्मर्तव्यं यत् वैराग्यं नोपदेशेन सम्पादयितुं शक्यत इति । अतः यस्य संसारे वैराग्यमभि-लषितं तेन संसारे विद्यमाना असङ्ख्याः दोषा अनुसन्धेयाः । तेन च संसारे जिहासा प्रजायते । न हि मुक्तिर्नाम भूतबन्धात् कादाचित्कात् विनिर्मुक्तिः । अपि तु भौतिकात् परमसूक्ष्माच्च लिङ्ग-शरीरादपि । सा च न मरणमात्रेण सम्भवति अपि तु ज्ञानजनकविरक्त्यैकसाध्या । तस्मात् मृतिसमनन्तरं जनिपर्यन्तमपि संसारस्वरूपं कथं क्लेशावहमिति विवेचनीयम् । उक्तं हि भगवता बादरायणेन- 'तदन्तरप्रतिपत्तौ रंहति सम्परिष्वक्तः प्रश्ननिरूपणाभ्याम्' (ब्र.सू. ३.१.१) इति ।

अस्य चायमाशयः- न कदाचित् देहवियोगे भूतानां विनिवृत्तिर्भवति । अपि तु देहिनः देहान्तरप्राप्तावपि सूक्ष्मरूपेण भूतानि अनुवर्तन्त एव । तस्माद् आमुक्ति न तेषां भवति वियुक्तिः । अतः अनादिबन्धस्य विनिवृत्तये सम्पादनीया असारेऽस्मिन् संसारे विरक्तिः । न हि जननमरणचक्रात् अनादिकालादपि प्रवर्तमानात् वैराग्यमन्तरा विनिवृत्तिः कल्पयितुमपि शक्यते । जीवस्य चास्मात् शरीरात् विनिर्गतस्य यथाकर्म स्वर्गनरकादिप्राप्तिः भविष्यति । प्रायः अस्माभिः बहूनि पापकर्माणि क्रियन्त इति तु विदितमेव । तेषां तु अनुभवेन विनाशः अत्यन्तमसम्भावितः । उदाहृतं हि भगवता मध्वदेवेन व्यासवचनम्-

'आचतुर्दशमात् वर्षात् कर्माणि नियमेन तु ।
दशावराणां देहानां कारणानि करोत्ययम् ॥' (ब्र.सू.भा. ३.१) इति ।

अनेन चेदं विज्ञायते- रक्तबीजासुरसन्ततिरिव कर्मसन्ततिरपि नितान्तं प्रवर्धतैव । न हि तस्या भोगेन क्षयः सम्भवति । सन्ति हि महापातकसुमहत्तरपातकादीनि आमन्वन्तरमादिनकल्पं च नरकप्रदायीनि नृणाम् । सति चैवं कथं कर्मणा जीवस्य विमुक्तिरिति सन्देहः शिष्यत एव । पापं ह्यनुतापवतः ज्ञानपूर्वं प्रायश्चित्तविधिमाचरतः कथञ्चिन्निवर्तेताऽपि । तथाऽपि अनन्तजन्मसु कृतं पापं न केवलं प्रायश्चित्तविधिनाश्यं किन्तु विरागजातात् सुदृढात् ज्ञानादेवेति निर्विवादम् । सहस्रलक्षाधिकवत्सरपर्यन्तं नरके वसन् जीवः पुण्यपापशेषवानेव मातृशरीरं प्रविशति । तत्रापि गर्भे जन्मशतदुःखं स्मरन् नानाविधयातनामनुभवंश्च नितान्तं क्लिश्यति । उपरमश्चैवंविधात् संसारकूपारात् वैराग्यमन्तरा नैव सम्भवतीति वैराग्यजननार्थं संसारस्य असारता दुःखप्रचुरता च जिज्ञासूनां प्रथमे पादेऽत्र विविच्यते ।

**भक्तिपादः**

यथा विरक्तिः वस्तुदोषविज्ञानाज्जायते तथैव कापि प्रीतिरपि भक्त्यपरनामिका वस्तुसौन्दर्यगुणविज्ञानसापेक्षा जायते । अत एवेह न भक्तिलक्षणं विस्तरेण विमृष्टमपि तु भक्तिजननोपायः विस्तरेण निरूपितः । यस्मिन् पुरुषे भक्तिरभिलषिता तस्य गुणाः ज्ञातव्याः । यावन्तः गुणाः विज्ञायन्ते तावती भक्तिरभिवर्धत इत्यनुभवसिद्धम् । अत एव भगवती श्रुतिः परमपुरुषे नारायणे समादरजननाय गुणततिं ब्रवीति- 'यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति । यत् प्रयन्ति अभिसंविशन्ति । तद्विजिज्ञासस्व । तद् ब्रह्म' इति । (तै.उ. ३.१) 'सत्यं ज्ञानमनन्तं ब्रह्म' (तै.उ. २.२.) । 'यः सर्वज्ञः स सर्ववित्' (आथर्व.उ. १.९) । 'कविर्मनीषी परिभूः स्वयम्भूः याथातथ्यतोऽर्थान् व्यदधात्

शाश्वतीभ्यः समाभ्यः'(ईश.उ.८)। 'सत्यकामः सत्यसङ्कल्पः' (छा.उ.८.५.१) इत्यादिना। भगवति गुणगणान् विदितवतः पुरुषस्य स्वारसिकी प्रीतिः तत्र जायते। इयमेव हि भक्तिशब्देन व्यवह्रियमाणास्ति। लक्षणं च भगवता मध्वदेवेन इत्थं निरटङ्कि-

'माहात्म्यज्ञानपूर्वस्तु सुदृढः सर्वतोऽधिकः।
स्नेहो भक्तिरिति प्रोक्तः तया मुक्तिर्न चान्यथा॥' (म.ता.नि. अ.१-८५) इति।

अस्य चाशयविशेषः प्रादर्शि सर्वज्ञकल्पैः श्रीमट्टीकाकृत्पादैः- 'परमेश्वरभक्तिर्नाम अनन्तानवद्य-कल्याणगुणत्वज्ञानपूर्वकः स्वात्मात्मीयसमस्तवस्तुभ्योऽनेकगुणाधिकः अनन्तरायसहस्रेणापि अप्रतिबद्धः निरन्तरप्रेमप्रवाहः' (न्या.सु. १.१.१) इति।

भगवति आदरजननोपयोगितया आदाविह भगवान् बादरायणः स्वप्नकर्तृत्वरूपमाहात्म्यं हरेः प्रज्ञापयति- 'सन्ध्ये सृष्टिराह हि' (ब्र.सू. ३.२.१), 'निर्मातारं चैके पुत्रादयश्च' (ब्र.सू. ३.२.२), 'मायामात्रं तु कात्स्न्र्येन अनभिव्यक्तस्वरूपत्वात्' (ब्र.सू. ३.२.३) इत्यादिना। न केवलं हरिः जाग्रत्सुषुप्त्यवस्थाप्रेरकोऽपि तु स्वप्नावस्थाया अपि स एव नियन्ता। स्वप्नसुषुप्त्यवस्थयोः कात्स्न्र्येन पारतन्त्र्यमनुभवन् जीवः जाग्रदवस्थायां तु स्वातन्त्र्यमस्तीति यद्विजानाति तदतीव मन्दमिति प्रज्ञापयति सूत्रकारः। एवं चावस्थात्रयेऽपि जीवस्य भगवानेव प्रेरक इति विज्ञाय तत्र प्रज्ञां कुर्वीत।

## सन्ध्याधिकरणम्

क्षीरादौ स्वादुत्वादिगुणविशेषज्ञानवतः यथा भवति स्वीकार्यत्वबुद्धिः तथा भगवति गुणज्ञानवतः प्रीतिर्जायते। अत एवावस्थात्रयप्रवर्तकत्वरूपमाहात्म्यं ब्रह्मसूत्रेषु निरूप्यते। तत्रापि स्वप्नाव-स्थायां जीवस्य व्यापाराभावेऽपि मनसा नानाविधवस्तुदर्शनरूपः स्वप्नः सर्वैरनुभूयत एव। तादृशस्वाप्नवस्तुनिर्मातृत्वरूपमहिमातिशय ईश्वरकर्तृकोऽस्मिन्नधिकरणे निरूप्यते। तत्र शङ्कर-रामानुज-माध्वभाष्यरीत्या सन्ध्याधिकरणविमर्शः क्रियते।

जीवस्य जाग्रत्स्वप्नसुषुप्तिभेदेन त्रयः अवस्थाः वेदान्तेषु प्रथिताः। तत्र जाग्रत्सुषुप्त्यवस्थयोः नास्ति स्वरूपे काचन विप्रतिपत्तिः। अस्ति च विप्रतिपत्तिः स्वप्नस्वरूपविषये। केचित् स्वप्नस्य सत्यत्वं समर्थयन्ति। अपरे पुनः तन्निराकुर्वते। पुनरन्ये विमृशन्तोऽपि तत्स्वरूपमविजानन्तः मायामयोऽयं स्वप्न इति सङ्गिरन्ते। स्वप्नावस्था च सर्वेषां जीवानाम् अनुभवसिद्धा एव। स्वप्ने

**अविद्यमानानेव गजतुरगादीन्** पश्यति शारीरः । न च **स्वप्नावस्थायां** एतेषां **दर्शनं चक्षुषा** सम्भावयितुमपि शक्यते । चक्षुरादीन्द्रियाणां स्वप्नावस्थायामुपरतत्वात् । अपि च रथान् रथयोगान् पश्यन् अपि जीवः प्रबोधानन्तरम् अविद्यमानानामेव तेषां दर्शनम् संस्मरति ।

न च तदानीमेव तेषां सृष्टिः तिरोधानश्चेति वाच्यम् । उपादाननिमित्तकारणादीनां वक्तुम् अशक्यत्वात् । तथा हि घटं प्रति मृद इव यस्य कस्याप्युपादानत्वे विनाशानन्तरम् उपादानस्य उपलब्धिप्रसङ्गः । मृदाद्युपादानकस्य घटस्य यथा सर्वाध्यक्षसिद्धत्वम् अविप्रतिपन्नं तथैव स्वाप्नपदार्थानामपि सोपादानकानां सर्वाध्यक्षविषयत्वं वक्तव्यमेव । स्वप्नद्रष्टॄणाम् अनुभूतार्थानाम् अन्यैरननुभूतत्वेन **'एकस्य प्रतिभातन्तु कृतकान्न विशिष्यते'** इति न्यायेन मिथ्यात्वमेव अङ्गीकार्यम् । अत्र शाङ्कर-रामानुज-माध्वविचारपद्धतयः निरूप्यन्ते -

**शाङ्करमते सन्ध्याधिकरणम् ।**

**'सन्ध्ये सृष्टिराह हि'** (ब्र.सू.३.२.१)

**'स यत्र प्रस्वपिति'** (बृ.४.३.९) इत्युपक्रम्य **'न तत्र रथा न रथयोगा न पन्थानो भवन्त्यथ रथान् रथयोगान् पथः सृजते'** (बृह. ४.३.१०) इति श्रूयते । तत्र संशयः - किं प्रबोध इव पारमार्थिकी सृष्टिः उत मायामयी ? इति । **'रथान् रथयोगान् पथः सृजते'** इति स्वाप्नार्थसृष्टिमभिधाय **'स हि सर्वस्य कर्ता'** इत्युपसंहाराच्च स्वाप्नसृष्टिः पारमार्थिकी इति ।

**निर्मातारं चैके पुत्रादयश्च** (ब्र.सू. ३.२.२)

प्राज्ञकर्तृकेऽयं सृष्टिरिति चैके शाखिनः पठन्ति । **'य एषु सुप्तेषु जागर्तीति'** (कठ. ५.८) ईश्वरलिङ्गश्रवणात् । **'तदेव शुक्रं तद् ब्रह्म तदेवामृतमुच्यते'** (कठ.५.८) इति वाक्यशेषाच्च । **इमौ पूर्वपक्षसूत्रौ ।**

सिद्धान्तमाह बादरायणः -

**'मायामात्रं तु कात्स्न्येंनानभिव्यक्तस्वरूपत्वात्'** (ब्र.सू.३.२.३) इति ।

तु शब्दः पूर्वपक्षं व्यावर्तयति - मायेत्यनादिरनिर्वाच्या अविद्योच्यते । मायैव सन्ध्ये सृष्टिः । न परमार्थगन्धोऽप्यस्ति । कुतः ? कात्स्न्र्येनानभिव्यक्तस्वरूपत्वात् । देशकालनिमित्त-सम्पत्तिरबाधश्च कात्स्न्र्यम् । तेनाभिव्यक्तस्वरूपत्वाभावात् इत्यर्थः । कात्स्न्र्यं नाम १. देशसम्पत्तिः २. कालसम्पत्तिः ३. निमित्तसम्पत्तिः ४. अबाधश्च ।

१. न तावत् रथादीनां समुचितो देशः स्वप्ने विद्यते । न हि संवृते देशे रथादयोऽवकाशं लभेरन् ।

२. कालसम्पत्तिरपि नास्ति । रजन्यां सुप्तो वासरं भारते वर्षे मन्यते । तथा मुहूर्तमात्रवर्तिनि स्वप्ने कदाचिद् बहुवर्षपूगानतिवाहयति ।

३. निमित्तानि च स्वाप्नपदार्थज्ञानकरणानि चक्षुरादीनि न विद्यन्ते । तेषामुपरतत्वात् । स्वाप्नपदार्थनिर्माणकारणमपि निमित्तकारणम् उपादानकारणं वा नास्ति ।

४. स्वाप्नदृष्टार्थानां बाधात् न स्वप्नः पारमार्थिकः ।

उक्तोऽयमाशयः शाङ्करभाष्ये - 'मायामय्येव सन्ध्ये सृष्टिर्न परमार्थगन्धोऽप्यस्ति । कुतः ? कात्स्न्र्येनानभिव्यक्तस्वरूपत्वात् । न हि कात्स्न्र्येन परमार्थवस्तुधर्मेणाभिव्यक्तस्वरूपः स्वप्नः । किं पुनरत्र कात्स्न्र्यमभिप्रेतम् ? देशकालनिमित्तसम्पत्तिरबाधश्च । न हि परमार्थवस्तुविषयाणि देशकालनिमित्तान्यबाधाश्च स्वप्ने सम्भाव्यन्ते । न तावत्स्वप्ने रथादीनामुचितो देशः सम्भवति । न हि संवृते देहदेशे रथादयोऽवकाशं लभेरन्' (ब्र.सू.शां.भा. -पृ४५१) इति ।

**रामानुजमते -**

**सन्ध्ये सृष्टिराह हि-**

'न तत्र रथा न रथयोगा न पन्थानो भवन्त्यथ रथान् रथयोगान् पथः सृजते' इत्यत्र स्वप्नसृष्टिः प्रतीयते । इयं स्वाप्नसृष्टिः जीवकर्तृका वा परमात्मकर्तृका वा इति संशये 'स्वप्नं पश्यति' इति प्रकृतो जीवः स्रष्टा इत्युच्यते । ननु स्वप्नस्रष्टुः सत्यकामत्वसत्यसङ्कल्पादि श्रूयते । तत्कथं जीवकर्तृकेऽयं सृष्टिरिति चेत् न, जीवस्य सत्यसङ्कल्पत्वं प्रजापतिवाक्येऽभिहितम् । प्रतिबन्धकसत्वादिदानीं तिरोहितमिति । तस्मात् जीव एव स्वाप्नार्थस्रष्टा । **सन्ध्ये** = स्वप्ने श्रूयमाणा **सृष्टिः** जीवकृता **आह हि** 'स हि सर्वस्य कर्ता' इति परामर्शात् इति सूत्रार्थः ।

**निर्मातारं चैके पुत्रादयश्च**

एके शाखिनो जीवं स्वप्ननिर्मातारं पठन्ति - 'य एषु सुप्तेषु जागर्ति कामं कामं पुरुषो निर्मिमाणः' इति पुत्रादीन् (काम्यमानतया पुत्रादयः कामशब्देनोच्यन्ते) जीवः सृजति इति ।

**मायामात्रं तु**

स्वप्ने पुष्करिण्याद्यर्थजातम्, **मायामात्रम्** = परमपुरुषसृष्टमित्यर्थः । **'मायाशब्दो ह्याश्चर्यवाची'** 'जनकस्य कुले जाता देवमायेव निर्मिता' (वा.रामायणम्) इत्यादिषु तथा दर्शनात् ।

'कामं कामम्' इत्यत्र 'तदेव शुक्रं तद्ब्रह्म तदेवामृतमश्नुते' इति अमृतत्वादिब्रह्मलिङ्गश्रवणात् 'स हि सर्वस्य कर्ता' इति स्वप्नस्रष्टृत्वमपि भगवत एव ।

तदुक्तं श्रीभाष्यवार्तिके –

'न रथास्तत्र न रथयोगा इत्यादिवाक्यतः ।
रथादिसृष्टिं किं जीवः करोतीश्वर एव वा ।
युक्तं स्वप्ने जीव एव सृष्टेः कर्ता हि स्वप्नदृक् ।
एकेऽत्र शाखिनो जीवं निर्मातारं वदन्ति हि ।
एवं प्राप्ते समाधानं मायामात्रेति सूत्रतः ।
जनकस्य कुले जाता देवमायेव निर्मिता ॥
इत्यादिवचनान्मायाशब्दो ह्याश्चर्यवाचकः ।
अतो रथाद्यर्थजातं स्वप्नद्रष्ट्रैव दृश्यते ।
तत्कालामात्रसत्ताकं परमाश्चर्यरूपकम् ।
करोति परमात्मैव सत्यसङ्कल्पतो हरिः ।
न तु जीवेऽनभिव्यक्तस्वरूपत्वात् कृत्स्नतोऽपि हि ॥' (श्री.भा.वा.- पृ९६)

**माध्वमते** (न्यायसुधा)

'योनेः शरीरम्' इत्येतदवसानैः सूत्रैर्जीवस्य जन्मावगतम् । जातस्य स्वप्नाद्यवस्थासम्बन्धः प्रसिद्धः । तत्र स्वप्नावस्थाप्रवर्तकत्वलक्षणमाहात्म्यं भगवतोऽत्राधिकरणे निरूप्यते ।

पूर्वपक्षः -

१. अर्थज्ञानोभयात्मकः स्वप्नः । तत्र स्वाप्नार्थानां करितुरगादीनां परमेश्वरायत्तता नोपपद्यते । स्वाप्नार्थानामविद्यमानत्वात् ।

२. न तावदिमे अनादिनित्याः प्रागूर्ध्वं चोपलब्धिप्रसङ्गात् ।

३. नाप्युत्पत्तिविनाशवन्तः । तथात्वेऽपि प्रागूर्ध्वमुपलम्भप्रसक्तेः ।

४. न च वाच्यं विद्युदादिवत्तदैवोत्पत्तिर्विनाशश्चेति । प्रमाणाभावात् ।

५. न चैतेषामर्थानां निमित्तकारणमुपादानं वा पश्यामः ।

६. न तावज्जीवः कर्ता । द्रष्टुर्निर्व्यापारत्वात् ।

७. नापीश्वरः प्रमाणाभावात् ।

८. 'स्वप्नमायासरूपेति'(माण्डूक्योपनिषनित् १.१३) 'अविद्यमानो ह्यवभाति हि द्वयो ध्यातुर्धिया स्वप्नमनोरथो यथा' (भाग.११.२.३८) इति श्रुतिस्मृत्या असत्त्वमवगम्यते ।

**सिद्धान्तः-**

१. अर्थज्ञानोभयात्मकस्वप्नसत्यत्वमभ्युपेयम् । स्वप्ने प्रतीयमाना अर्था अनादिमनसि स्थितवासनोपादानकाः । संस्कारैः भगवान् नानाविधं जगत् सृष्ट्वा जीवाय प्रदर्शयति । अतः स्वाप्नार्थानां वासनोपादानकत्वम् ईश्वरेच्छानिमित्तत्वं चास्तीति न मिथ्यात्वप्रसक्तिः ।

२. दर्शनसाधनं मन एव । दर्शनं चानुभवो विवक्षितः ।

३. यथा मनोरथे ध्याने वा संस्कारयोनीनर्थान् मनसा अनुभवत्येवं स्वप्नेऽपीति किमनुपपन्नम् । इयांस्तु विशेषः मनोरथादौ प्रयत्नपूर्विका पदार्थसृष्टिः स्वप्ने पुनरीश्वराधीनैवेत्येव भेदः ।

४. स्वप्ने स्वशरीरच्छेदादयोऽपि प्रतीयन्ते । न च तादृशस्वप्नोत्पत्तौ उपादानमस्ति । अननुभूतत्वेन संस्कारोदयाऽयोगात् इत्यप्यसाधु । संसारस्यानादित्वेन कस्मिंश्चिज्जन्मनि स्वशिरच्छेदादेरप्यनुभवसम्भवेन संस्कारोपपत्तेः ।

स्वप्ने एतद्देहच्छेददर्शनं तु तदीयदुरालोचनया वा 'त्वदीयं शिरच्छिन्नं भवतु' इति कस्यचिद्वचनश्रवणजनितसंस्कारेण वेति न दोषः। तदुक्तं - 'अदृष्टे चाश्रुते भावे न भाव उपजायते' (१.ब्र.सू.अनु.३.२.३, पृ.४२१) इति ।

५. भवान्तरेऽपि शशविषाणाभावेन सामानाधिकरण्यप्रतीतिः स्वप्ने कथमुपपाद्यत इति चेत्, शब्दादिना भ्रान्तिसम्भवेन संस्कारोपपत्तेः । न केवलं जाग्रत्वं स्वप्ने भ्रमः किन्तु यत्र यस्योपादानं नास्ति बाधश्चास्ति तत्र सामानाधिकरण्यस्यापि भ्रमत्वमेव ।

६. वासनामयानां मेरुमन्दरादीनां शरीरादनिर्गत्यैव मनसः अनुपरतेन दर्शनसम्भवात् ।

७. **'त्रिगुणात्मिकार्थज्ञानं विष्णुशक्तिस्तथैव च । मायाशब्देन भण्यन्ते' 'महामायेत्यविद्येति नियतिर्मोहिनीति च । प्रकृतिर्वासनेत्येव तवेच्छाऽनन्त कथ्यते'** इति स्मृत्युक्तेः मायाशब्दस्य इच्छायां प्रसिद्धेः, मायामात्रमित्यस्य ईश्वरेच्छाविनिर्मितमित्यर्थः सम्पद्यते । यत्र क्वचित् श्रुतिस्मृत्यादौ विश्वस्य स्वप्नसाम्यमुच्यते चेत् तस्य, नेदं विश्वं नित्यम् अपि तु अनित्यमेव, विकारि परतन्त्रञ्च । अतोऽत्र आस्थां परित्यज्य भगवति भक्तिः कर्तव्येति प्रबोधनार्थं स्वप्नसाम्यमुच्यते ।

ईश्वरप्रज्ञाविनिर्मितत्वादेव क्वचिदिदं 'मायामयम्' उच्यते । अनेन परमात्मना ऋतमवगतमिति 'अनृतम्' उच्यते ।

'अ' इत्युक्तः विष्णुः । 'सत्यं' तदधीनं विश्वमिति हेतोः 'असत्यम्' इत्युच्यते ।

आपाततः प्रतीत एव न वाक्यार्थ इति विपश्चितां विदितमेवेति इहापि निरवकाशप्रमाणानुरोधेन विश्वसत्यत्वं न निराकृतमिति समेषामागमानां तात्पर्यमनुसन्धेयम् । तदुक्तं भगवत्पादाचार्यैः तत्त्वविनिर्णये-

'अनित्यत्वविकारित्वपारतन्त्र्यादिरूपतः ।
स्वप्नादिसाम्यं जगतो न तु बोधनिवर्त्यता ॥
सर्वज्ञस्य यतो विष्णोः सर्वदैतत् प्रतीयते ।
बोधाऽसहं ततो नैतत् किन्त्वाज्ञावशमस्य हि' ॥ इति परमोपनिषदि ॥

'प्रज्ञाविनिर्मितं यस्मादतो मायामयं जगत् ।
अनेनानुगतं यस्मादनृतं तेन कथ्यते ॥

बोधाऽनिवर्त्यमपि तु नित्यमेव प्रवाहतः ।
अ इत्युक्तः परो देवस्तेन सत्यमिदं जगत् ॥

तदधीनस्वरूपत्वादसत्यं तेन कथ्यते ।
सत्यस्य सत्यः स विभुरिन्द्रचापस्य सूर्यवत्' ॥ इति च ।

'तस्योपनिषत्सत्यस्य सत्यमिति प्राणा वै सत्यं तेषामेष सत्यम्' ॥ इति च ।

भगवदिच्छायाः पर्यायपदानि महामायेत्यादीनि । प्रकृष्टकार्यकरणात् हरेरिच्छा प्रकृतिरुच्यते । वास्यते अनयेति वासना । वासयेत् भावयेत् उत्पादयेत् इति वासना - इच्छा ।

'अ' इत्युक्तः हरिः । तस्य विद्या- अविद्येति सञ्ज्ञिता । हरेरिच्छा प्रकृष्टत्वान्मायेत्युच्यते । तदुक्तम्-

'महामायेत्यविद्येति नियतिर्मोहनीति च ।
प्रकृतिर्वासनेत्येवं तवेच्छानन्त कथ्यते ॥
प्रकृतिः प्रकृष्टकरणाद् वासना वासयेद् यतः ।
अ इत्युक्तो हरिस्तस्य विद्याऽविद्येति संज्ञिता ॥
मायेत्युक्त्वा प्रकृष्टत्वात् प्रकृष्टं हि मयाभिधम् ।
विष्णोः प्रज्ञप्तिरेवैका शब्दैरेतैरुदीर्यते ।
प्रज्ञप्तिरूपो हि हरिः सा च स्वानन्दलक्षणा'(**.वि.वि. पृ.६५५**) ॥ इति च ।

**मायाशब्दार्थनिरूपणम्**

किञ्च मायाशब्दः अर्थपञ्चकयुत इति श्रीमद्वादिराजतीर्थश्रीमच्चरणैः युक्तिमल्लिकायां निरूपितम् । तदिह प्रस्तूयते - मायाशब्दः हरेरिच्छायां, जडप्रकृतौ, भ्रमहेतुभूताऽविद्यायां, हरेश्शक्तौ, तेजसि च प्रवर्तते । श्रीमद्भागवतादौ भगवति विपर्ययकारणीभूतायाः मायायाः अभावः स्फुटमुपपादितः । तेन ज्ञायते न तदीया सृष्टिः अद्वैत्युक्तदिशा मायामयीति । तथा हि युक्तिमल्लिकावचनानि -

१. 'हरेरिच्छापि मायाख्या २. मायाख्या प्रकृतिर्जडा ।
३. भ्रमहेतुश्च मायैका मायेयं त्रिविधा मता ।
४. हरेः शक्तिश्च ५. तेजश्च तथा मायापदोदिते ॥' (२.यु.म. पृ.१२५) इति ।

एवं च विश्वं मायामयमित्युक्ते ईशेच्छापूर्वकमित्यर्थः ।

१. 'इच्छादिरूपा या माया तया मायामयोऽस्त्वयम्' - (युक्तिमल्लिका, श्लो.सं. ३२७१)

'महामायेत्यविद्येति नियतिर्मोहिनीति च ।
प्रकृतिर्वासनेत्येवं तवेच्छाऽनन्त कथ्यते ॥' इति मायाशब्द इच्छावाचकः श्रूयते ।

मायामयं विश्वमित्यस्य जडप्रकृत्युपादानकमित्यत्यर्थः सम्भवति ।

२. 'मायां तु प्रकृतिं विद्यात् मायिनं तु महेश्वरम् ।
इति श्रुतौ तु या मायेत्युक्ता सा प्रकृतिर्जडा ॥'

'सर्गादौ मायया विश्वं सृजति' इति वचोऽपि तु ।
मायाख्यां प्रकृतिं प्राह याऽस्योपादानकारणम् ॥' इत्यादौ मायाशब्दः प्रकृतौ प्रयुक्तः ।

मायापदस्य मोहकारणीभूता वृत्तिरित्यर्थः । निन्दितेयं माया परात्मनि नास्तीत्यपि पुराणेषु स्फुटं प्रतीयते ।

३. 'विलज्जमानया यस्य स्थातुमीक्षापथेऽमुया ।
विमोहिता विकत्थन्ते ममाहमिति दुर्धियः ॥' (भाग.१.५.१३)

'नमस्तुभ्यं भगवते ब्रह्मणे परमात्मने ।

न यत्र श्रूयते माया लोकदृष्टिविकल्पना (जीवयथार्थज्ञाननाशिका इत्यर्थः)' ।

'त्वमाद्यः पुरुषः साक्षात् ईश्वरः प्रकृतेः परः ।
**मायां व्युदस्य** चिच्छक्त्या कैवल्ये स्थित आत्मनि ॥'

इत्यादौ निन्दितमनोवृत्तौ मायाशब्दः प्रयुक्तः । प्रकृते मायाशब्दस्यैषोऽर्थः न विवक्षितः ।

मायाशब्दस्य ईशशक्तिरित्यर्थः ध्रुवकृतस्तुतौ लभ्यते-

४. 'मायाख्याया स्वशक्त्येति मायाख्यां शक्तिमाह हि ।' तथा भागवते ध्रुवः -

'एकस्त्वमेव भगवन्निदमात्मशक्त्या मायाख्ययोरुगुणया महदाद्यशेषम् ।
सृष्ट्वानुविश्य पुरुषस्तदसद्गुणेषु नानेव दारुषु विभावसुवद्विभासि' ॥ (४.१०.९)

वैष्णवं तेज इत्यर्थेऽपि मायाशब्दः प्रयुक्तः -

५. 'अन्तस्थः सर्वभूतानामात्मा योगेश्वरो हरिः ।
स्वमाययाऽवृणोद् गर्भं वैराट्याः कुरुतन्तवे ॥'
'यद्यप्यस्त्रं ब्रह्मशिरस्त्वमोघं चाप्रतिक्रियम् ।
**वैष्णवं तेज** आसाद्य समशाम्यद् भृगूद्वह ॥' (श्रीमद्भा.१.८.१७-१८- पृ.१०२)

'इति भागवते सूतो मायेत्युक्त्वा पुनश्च ताम् ।
वैष्णवं तेज इत्याह स्वमाया किल सा हरेः ॥'

एवं च मायामात्रमिदं जगत् इत्यस्य ईश्वरेच्छानिर्मितम् ईश्वरेणोत्पादितम् इत्याद्यर्थः भवति । न तु मिथ्येति ।

८. न स्वप्ने दृश्यमानसर्वपदार्थानां मिथ्यात्वम् । तथात्वे आत्मनोऽपि मिथ्यात्वप्रसक्तिः ।

९. अभ्युपगतं च शङ्कराचार्यैः स्वाप्नार्थानां वासनोपादानकत्वं यथा - 'तद्वासनामात्रं, वेशान्तादीन् सृजते वासनामात्ररूपान्' (बृ.भा. ४.३.१०) इति ।

१०. यद्यपि शाङ्करभाष्ये 'सूचकश्च हि श्रुतेराचक्षते च तद्विदः' (ब्र.सू.३.२.४) इति सूत्र-व्याख्यानावसरे सूचकस्य स्त्रीदर्शनादेर्मिथ्यात्वेऽपि सूच्यमानस्य साधुफलस्य सत्यत्वमुक्तम् । तथाहि भाष्यवचनानि- 'मायामात्रत्वात्तर्हि न कश्चित् स्वप्ने परमार्थगन्धोऽस्तीति । नेत्युच्यते । सूचकश्च स्वप्नो भवति । भविष्यतोः साध्वसाधुनोः । तथा हि - 'यदा कर्मसु काम्येषु .....', 'पुरुषं कृष्णं कृष्णदन्तं पश्यति' .... तत्रापि सूच्यमानस्य भवतु सत्यत्वम्, सूचकस्य तु स्त्री-दर्शनादेर्भवत्येव वैतथ्यम्' (ब्र.सू.शां.भा.-पृ.४५३) इति । तथापि सूचकस्य मिथ्यात्वे सूच्य-मानस्य सत्यत्वं कथमपि न सम्भावयितुं शक्यते । अतः सूचकस्यापि स्वप्नदृष्टस्त्रीब्राह्मणादेः सत्यत्वमङ्गीकार्यमेव । असतोऽपि साधकत्वं तद्दर्शनमात्रसिद्धमपि न युक्तिसहम् । तत्रापि ज्ञानस्यैव साधकत्वमिष्यतेऽस्माभिः, ज्ञानं च सत्यमिति सत्यस्यैव साधकत्वमवधेयम् ।

अत्र कात्स्न्येन अनभिव्यक्तस्वरूपत्वादिति स्वाप्नपदार्थानां सूक्ष्मत्वमभिदधता भगवता

बादरायणेन अद्वैत्यभिमतं स्वाप्नार्थानां निःस्वरूपत्वं निपुणतरं निराकृतमिति श्रीमद्वादिराजतीर्थ-श्रीमच्चरणैः तत्त्वप्रकाशिकागुर्वर्थदीपिकायां निरूपितम् -

'अत्राहुर्मायावादिनः मायामात्रपदेन स्वाप्नपदार्थानां मिथ्यात्वमेव सूत्रकृता प्रतिज्ञातमिति । तदतीव हास्यम् । 'कार्त्स्न्येनानभिव्यक्तस्वरूपत्वात्' इति हेतौ सस्वरूपत्वमनुपलम्भ-बाधपरिहाराय कार्त्स्न्येनानभिव्यक्तत्वापरपर्यायमतिसूक्ष्मत्वं च वदन् सूत्रकारस्तद्विरुद्धं निस्स्वरूपत्वरूपं मिथ्यात्वं कथं प्राक् प्रतिजानीयात् । 'सन्ध्ये सृष्टिः' इति प्राक् सृष्टिकथनात् उपरि सूचकश्चेति सत्त्वे युक्तिकथनाच्च न मध्ये मिथ्यात्वं सिषाधयिषितम् । न हि कश्चित् शुक्तौ रजतं पश्यतीतिवद्रजतं सृजतीति ब्रूते । यदि चाद्यसूत्रस्यैव विश्वतोमुखत्वादिपूर्वपक्षसूत्रता तर्हि सूत्रलक्षणाभावेन सूत्रत्वमेव न स्यात् । श्रुत्युपबृंहितसूत्रस्य पूर्वपक्षतायां श्रुत्युपोद्बलितं भवदैक्यं च न सिद्धान्तः स्यात् । अपि चोक्तविधया मायामात्रमिति सूत्रे हेतुविरोधेन मिथ्यात्वे तात्पर्याभावे किं बलेन अस्य पूर्वपक्षता कल्पते । किं च परानुकूलसूत्रस्य त्वया पूर्वपक्षत्वकल्पने सोऽपि त्वदनुकूलसूत्रस्य पूर्वपक्षतां कुतो न कल्पयेत् । अतो ब्राह्मणे वध्यावध्यविभागवत्सूत्रेषु नायं विभागः प्रेक्षावतां कर्तुमुचितः ।' (तत्त्वप्रकाशिका-गुर्वर्थदीपिका -पृ.१३२)

ज्ञानानन्दस्वरूपोऽपि शारीरः तस्याभिव्यक्त्यर्थं कुर्यादेव भक्तिम् । अव्यक्तोऽपि भगवान् जैवभक्त्या प्रसन्नः स्वात्मानमादर्शयति । साक्षात्कारप्रदो विष्णुर्हि लोकविलक्षणज्ञानानन्दादिगुणपूर्णः, स्वगतभेदविवर्जितः । ध्यानकाले च प्रतीयमानं न तद्रूपम् । यतो हि मानसवासनामयं ध्यानकालीनं रूपमिति तदन्तः अप्राकृतगुणः भगवान् विचिन्तनीयः ।

एवं न केवलं भगवान् विष्णुः स्थितिकर्ता अपि तु सृष्टिलयावपि तेनैव भवतः । य एवं भगवतः जडजीवादत्यन्तविलक्षणं वेदैकसमधिगम्यं गुणात्मकं स्वरूपं पश्यति सदा संसारान्मुच्यते तदुक्तम्-

'यदा पश्यः पश्यते रुग्मवर्णं कर्तारमीशं पुरुषं ब्रह्मयोनिम् ।

तदा विद्वान् पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति ॥' (आथर्व.उ. ५.३)

इति 'तमेवं विद्वान् अमृत इह भवति । नान्यः पन्था अयनाय विद्यते' (तै.आ. ३.१२) इति च ।

**उपासनापादः**

तृतीये पादे उपासनायाः स्वरूपमुपवर्णितम् । उपासना च ध्यानरूपा शास्त्राभ्यासरूपा चेति द्विविधा । तदुक्तं भगवत्पादाचार्यैः-

'सोपासना च द्विविधा शास्त्राभ्यासस्वरूपिणी ।
ध्यानरूपा परा चैव' (अनुव्या. ३.३.५५) इति ।

ध्याने हि भवति भगवतः साक्षात्कारः । तच्च ध्यानं मननवत एव सम्भवति । मननं च निरन्तरं शास्त्राध्ययनशीलस्य जिज्ञासोरेव सम्भवति । तदर्थं 'स्वध्यायोऽध्येतव्यः' इति विधिमनुस्मरन् सर्वदाऽपि वेदाध्ययनं कुर्वीत । नात्राध्ययनं गुरूच्चारणानूच्चारणरूपमपि तु वेदार्थज्ञानपर्यन्तमेव विवक्षितम् । उक्तं च-

'वेदः कृत्स्नोऽधिगन्तव्यः सरहस्यो द्विजन्मना ।' (अनुभाष्योदाहृता श्रुतिः)

'अद्यापि तेन देवाद्याः शृण्वते मन्वते सदा ।' (अनु. ३.३.७४)

'श्रवणादि विना नैव क्षणं तिष्ठेदपि क्वचित् ।' (अनु. ३.३.७८)

'अत्यशक्ये तु निद्रादौ पुनरेव समभ्यसेत् ।' (अनु. ३.३.७९) इति ।

एवं च यावच्छक्ति निखिलान् वेदानधीत्य भगवतः गुणान् विज्ञाय ध्यानं कर्तव्यम् । तदुक्तम्- 'सर्ववेदान्तप्रत्ययं चोदनाद्यविशेषात्' (ब्र.सू. ३.३.१) इति । तत्रापि देवोत्तमो चतुराननः सकलवेदोक्तगुणोपासनायोग्यः । देवास्तु यथायोग्यं बहुगुणोपासकाः । मनुष्योत्तमास्तु सत्-चित्-आनन्द-आत्मेति चतुर्गुणोपासकाः । तत्रापि अवराः स्वामित्वरूपैकगुणोपसकाः भवन्ति । तदुक्तम्-

'आत्मेत्येव परं देवमुपास्य हरिमव्ययम् ।
केचिदत्रैव मुच्यन्ते नोत्क्रामन्ति कदाचन ॥' (ब्र.सू.भा. ४.४.) इति ।

उपासनावैचित्र्येण साधनतारतम्यानुगुण्येन च मुक्तावानन्दातिशयो भवति जीवानाम् । नित्यमुक्ता अपि श्रीः भगवतः गुणगणान् उपासती निजममन्दमानन्दमनुभवतीति स्मृतय उद्धोषयन्ति । अतः भगवान् यथायोग्यं सर्वैरुपास्य इति स्थितम् ।

**अनुबन्धाधिकरणम्**

यद्यपि तृतीयाध्याय-द्वितीयपादे भक्तेः महत्त्वमुपवर्णितम् । तस्य साक्षात्कारसाधनत्वमपि सुष्ठूपपादितं सूत्रकारेण । तृतीयेऽस्मिन् पादे द्वेषादिदोषविरहिता निर्मलाऽविच्छिन्ना च भक्तिः ब्रह्म-साक्षात्कारसाधनीभूता इति निरूप्यते । यद्यप्यत्र 'अनुबन्धात्' इति पदविन्यासादपि 'भक्तेः' इति पदप्रयोगेऽल्पाक्षरत्वं संरक्षितं भवेत् । तथापि यौगिकमनुबन्धपदं प्रयुञ्जानेन भगवता बादरायणेन भक्तेरेव मोक्षसाधनत्वं द्वेषादीनां मोक्षप्रतिबन्धकत्वं च स्फुटमुपपादितम् । श्रीमद्भागवतादौ काम-भय-द्वेषादयोऽपि भगवत्साक्षात्कारसाधनानीति प्रतीयते । तथाहि भागवतवचनानि -

'वैरेण यं नृपतयः शिशुपालपौण्ड्रसाल्वादयो गतिविशेषविलोकनाद्यैः ।
ध्यायन्त आकृतिधियः शयनासनादौ तत्साम्यमापुरनुरक्तधियः पुनः किम् ॥'

'गोप्यः कामाद् भयाद् कंसः द्वेषात् चैद्यादयो नृपाः ॥ (भाग. ७.१.२)

अस्य श्लोकस्याशयविशेषः भगवत्पादाचार्यैः ब्रह्मसूत्रानुव्याख्याने, भागवततात्पर्ये च सुष्ठूपवर्णितः । यदि द्वेषादयः मुक्तिसाधनानि भवेयुः तर्हि भगवति दोषसञ्चय उपपादनीयः । परं तु 'भक्त्या त्वनन्यया शक्यः' इति गीतायां 'द्वेषादयस्तु नैवम्' इति नारदभक्तिसूत्रे च द्वेषादीनां मुक्तिसाधनत्वं खण्डितम् । तेन च भक्तेरेव मोक्षसाधनत्वं स्फुटमभिहितं भवति । चैद्य-कंसादिषु जीवद्वयावेश आसीदिति भगवत्पादैः निरूपितम् । तथा चैकस्मिन्नेव देहे सुरासुरयोर्विद्यमानत्वेऽपि शापवशाद् असुरदेहे विद्यमानस्य सुरप्रवरस्य ऋषेर्वा स्वारसिकीं भक्तिं सम्मान्य, अस्वारसिकीं चाप्रीतिं द्वेषादिकं वाऽविगणय्य भगवताऽनुग्रहो विहित इति शास्त्रपरमार्थः । तस्माद् भयद्वेषादिभिर्न मुक्तिः ।

**बिम्बसाक्षात्कारः किं मोक्षसाधनम् ?**

प्रज्ञान्तराधिकरणे उपासनासाध्यज्ञाने विशेषतारतम्यं समर्थितम् । अत्र तु अवताररूपसाक्षात्कारस्य मुक्तिकारणत्वं भगवत्पादाचार्यैः प्रतिपादितम् । अध्यात्मवचनं चोदाहृतम्-

'दृष्ट्वैव ह्यवताराणां मुच्यन्ते केचिदञ्जसा ।
दर्शनेनान्तरेणान्ये देवाः सर्वत्र दर्शनात् ॥' इति ।

यद्यपि शास्त्रेषु सर्वत्र बिम्बसाक्षात्कारस्य मोक्षसाधनत्वं प्रतिपादितं प्रतीयते । तथा हि प्रमाण-वचांसि -

१. 'न भगवद्रूपाणां साम्येन सामान्यतो दर्शनेन सर्वेषां मुक्तिः । किं नाम स्वबिम्बदर्शनादेव' (ब्र.सू.भा. ३.३.५३) ।

२. 'तद्बिम्बरूपमस्य मुक्त्यर्थं साक्षात्कारविषयो भवति' (तत्त्वप्रकाशिका २.३.५०)

३. 'योग्या - स्वबिम्बविषया' (न्यायदीपिका, पृ. २१३)

कुत्रचिदाकरे स्वयोग्यभगवद्रूपसाक्षात्कार एव मुक्तिनिदानमित्यपि श्रूयते । तथा हि तद्वचनानि-

१. 'स्वयोग्योपासनया तन्वा तत्तद्योग्यतया तथा ।' (म.ता.नि. १.९१)

२. 'योग्यं तु दर्शनं नैव तया हीनं भविष्यति' (तन्त्रसारसङ्ग्रहः, ४.१७४)

अत्रेदमवधेयम्- ये बिम्बदर्शनयोग्या ऋषयो भवन्ति तेषामेव बिम्बसाक्षात्कारेण मोक्षः । येषां मनुष्योत्तमानां तु अवताररूपसाक्षात्कारः मोक्षकारणीभूतः तेषां तद्रूपसाक्षात्कारेणैव भवति मोक्षः । देवाः व्याप्तोपासकाः । तेषां व्याप्तभगवद्रूपापरोक्षज्ञानेन मोक्षः । एवं च यत्र यत्र बिम्बसाक्षात्कारस्य मोक्षसाधनत्वमुच्यते तत्र सर्वत्र योग्यापरोक्षस्य मोक्षसाधनत्वमवगन्तव्यम् । तदेतद् श्रीमद्भावबोधकारैः श्रीरघूत्तमतीर्थश्रीमच्चरणैः निरूपितम् -

'नायं नियमः सर्वेषाम् । किन्तु ये बिम्बदर्शनयोग्या ऋष्यादयः तेषामेव । सर्वेषां बिम्बदर्शनायोग्यत्वात् । यथोक्तम्- ''न उपासात्रैविध्यादाश्रितत्वादिह तद्योगात्'' इति ।'

एवं मनसा ब्रह्मसाक्षात्कारो वा साक्षिणा वा इत्यपि विमर्शनीयः । प्रमाणवचनानि तु आकरे उभयथा प्रतीयन्ते । विवक्षाभेदेन तानि व्याख्येयानि । मनसा साक्षात्कारप्रतिपादकवचनानि मनःसहकृतसाक्षिणा साक्षात्कारप्रतिपादकानीति विज्ञेयम् । ज्ञानेनापरोक्षप्रतिपादकवचनानां ज्ञानसाध्यभक्तिपर्यन्तानुधावनवत् । एवं च साक्षिणाऽपरोक्षोऽवश्यमङ्गीकार्य एव भवति । इतोऽप्यत्र विमर्शनीयांशाः विद्वद्भिः टिप्पण्यादिषु द्रष्टव्याः ।

**साक्षात्कारनिरूपणम्**

उपासनापरिपाकात् भगवतः साक्षात्कारो भवति । तेन च जीवः इह विशिष्टमानन्दमनुभवति परत्र चामन्दमानन्दमनुभवति । उक्तं च भगवता व्यासेन-'पुरुषार्थोऽतःशब्दात् इति बादरायणः' (ब्र.सू. ३.४.१)इति । उक्तं चाथर्वणे-

'यं यं लोकं मनसा संविभाति विशुद्धसत्त्वः कामयते यांश्च कामान् ।
तं तं लोकं जयते तांश्च कामान् तस्माद् आत्मज्ञं ह्यर्चयेत् भूतिकामः ॥' (आथर्व.उ. ५.१०)

इति । अपरोक्षज्ञानानन्तरमपि वर्णाश्रमोचितकर्माणि श्रीशतुष्टये कर्तव्यानि । हरितुष्टये पूर्वमनुष्ठितानि विहितकर्माणि अपरोक्षज्ञानोत्पादकानि । अनन्तरं च क्रियमाणानि मुक्तौ यावद्योग्यानन्दाभिव्यञ्जकानि । अत एव जीवन्मुक्तोऽपि मुक्तावानन्दातिशयार्थं लोकसङ्ग्रहार्थं च कर्म कुर्यादेव । तदुक्तम्-

'अतीतानागतज्ञानी त्रैलोक्योद्धरणक्षमः ।
एतादृशोऽपि नाचारं श्रौतं स्मार्तं परित्यजेत् ॥' (ब्र.सू.भा. ३.४) इति ।

तत्रापि उत्तमाधिकारिणां पदमधमैः नाकाङ्क्ष्यं न प्राप्यते च । नियतगुरूपदेशानुसारेण यथायोग्यम् उपासना कर्तव्या । अनुष्ठितेऽपि कर्मणि महत्फलं प्रेरकाणां तत्त्वाभिमानिदेवानामेव भवति । तदुक्तम्- 'स्वामिनः फलश्रुतेरित्यात्रेयः' इति यथायोग्यफलं च साधकानां लभ्यते । असति प्रतिबन्धे शीघ्रमेव भवत्यापरोक्ष्यम् । तच्छरीरपातानन्तरमेव भवति मोक्षः । 'केचिदत्रैव मुच्यन्ते' इत्युक्तेः ।

**उपसंहारः -**

एवं पादचतुष्टयात्मकेऽस्मिन् तृतीयेऽध्याये वैराग्य-भक्ति-उपासना-ज्ञानयोगाः प्रतिपादं निरूपिताः ।

**फलाध्यायसारः**

ब्रह्मसूत्रभाष्ये चतुर्थेऽध्याये फलं निरूप्यते । वैराग्य-भक्ति-उपासना-ज्ञानेन मुक्तिरूपं फलं साधकस्य भवति । तत्र मुक्तिर्नाम कीदृशीति श्रीमद्भागवते तत्स्वरूपं प्रतिपादितम् -

'मुक्तिर्हित्वाऽन्यथारूपं स्वरूपेण व्यवस्थितिः' (भाग. २.१०.६) इति ।

सात्त्विको जीवः ज्ञानानन्दवीर्यादिगुणरूपः । यद्यपि संसारावस्थायां ज्ञानानन्दादयो जीवगुणा नानुभूयन्ते अनाद्यविद्याऽऽवृतत्वाद् अदृष्टाश्रुतवस्तुत्वाच्च । तदुक्तम्-

अतः परं यदव्यक्तमव्यूढगुणबृंहितम् ।
अदृष्टाश्रुतवस्तुत्वात् स जीवो यः पुनर्भवः ॥ (भाग.१.३.७२) इति ।

जीवस्वरूपावरणानि षडुक्तानि शास्त्रे । तानि च यथा-

**१. अविद्या-**

सत्त्वादिगुणात्मिका भावरूपाविद्या । 'बध्नन्ति नित्यदा मुक्तं मायिनं प्रकृतिं गुणाः' इति भागवतोक्तेः ।

**२. कामः-**

'आवृतं ज्ञानमेतेन ज्ञानिनो नित्यवैरिणा ।
कामरूपेण कौन्तेय' इति गीतोक्तेः ।

'तथा कामनिरुद्धोऽयम् उच्चावचतया भ्रमन् ।' इति भागवतोक्तेश्च ।

**३. प्रारब्धकर्म -**

'अनादिकर्मणा बद्धो जीवः संसारमण्डले ।
वासुदेवेच्छया नित्यं भ्रमतीति हि तद्वचः ॥'

**४. स्वगुणाच्छादिका -**

**५. परमाच्छादिका -**

'अथान्ये प्रकृती दुष्टे नृषु प्रातिस्विकं स्थिते ।
स्वगुणाच्छादिका त्वेका परमाच्छादिका परा ॥' (भाग.ता. १०.९४.१५) इत्युक्तेः ।

**६. लिङ्गशरीरम्-**

एकं पञ्चविधं लिङ्गं त्रिवृत् षोडशविस्तरम् ।
एष चेतनया युक्तो जीव इत्यभिधीयते ॥
अनेन पुरुषो देहान् उपादत्ते विमुञ्चति ॥ (४.२९.७६) इति भागवतोक्तेः ।

एकं लिङ्गशरीरं षोडशविस्तरम् । प्राणेन्द्रियान्तःकरणभेदेन त्रिवृत् । कथं पञ्चविधम् ? त्रिधा भिन्नया पञ्चविधया युतम् । पञ्चप्राणाः पञ्चज्ञानेन्द्रियाणि पञ्च कर्मेन्द्रियाणि मनसा सह षोडश-विधम् ।

एवं, 'न ऋते त्वत्क्रियते' (ब्र.सू.अ.- पृ. २६१) इत्यनुव्याख्यानव्याख्यावसरे 'परमेश्वरो अचिन्त्याद्भुतया स्वशक्त्या जीवस्वरूपचैतन्यमाच्छादयति' (न्या.सु.- पृ. २६६) इति सुधोक्तेः ईश्वरेच्छाऽपि सप्तमी प्रतिबन्धिकाऽऽवरणरूपा विद्यत इत्यवगन्तव्यम् ।

एवं चैतादृशावरणैः बद्धो जीवः स्वीयमप्राकृतमानन्दं विद्यमानमपि अभुञ्जन् संसरति अनुभवति च दुःखम् । विद्यया चावरणानि हित्वा भगवत्प्रसादेन मुक्तिमाप्नुयात् ।

**मुक्तिस्वरूपम्**

मुक्तिस्वरूपं भारतीयदर्शनेषु बहुधोपवर्णितम् । सङ्क्षेपेण तत्तन्मतरीत्या मुक्तिस्वरूपमुत्तरत्र निरूप्यते ।

**जैनमते**

ज्ञानात्केषाञ्चित् कर्मणां क्षयो भवति । केषाञ्चित् भोगात् । ततः कर्मक्षयात् पक्षिणः पञ्जरादिव आत्मनो देहान्मोक्षो भवेत् । देहावस्थानस्य कर्मनिमित्तत्वात् । अत्र मानानि-

१. 'नित्यमूर्ध्वं व्रजत्येव पुद्गलो हस्तपादवान् । पञ्जरोन्मुक्तखगवदलोकाकाशगोचरः ॥' (ब्र.सू.अनु.)

२. 'अवकाशदानयोग्यं जीवादीनां विजानीहि आकाशम् ।
धर्माधर्मौ कालः पुद्गलर्जीवाश्च सन्ति यावति ।
आकाशे स लोकः ततः परत आलोक उक्तः ॥' (द्रव्यसङ्ग्रहः, १९-२१)

३. 'कर्ममलनिप्रमुक्त ऊर्ध्वं लोकस्यान्तमधिगम्य ।
स सर्वज्ञानदर्शी लभते सुखमतीन्द्रियमनन्तम् ॥ (पञ्चा. श्लो.२८)

४. 'विसस्रोर्ध्वगतिः' (द्रव्यसङ्ग्रहः, श्लो.१)

५. 'सहजोर्ध्वगमुक्तस्य धर्मस्य नियमं विना ।
कदाऽपि गगनेऽनन्ते भ्रमणं न निवर्तते ॥' (भोजकविरचितद्रव्यानुयोगतर्कणा १०.६)

वेदादिप्रमाणानुक्तत्वात् कल्पितस्य जैनागमस्याप्रमाणकत्वात् नायं मोक्ष अभ्युपगमार्हः ।

‘गतिरूर्ध्वा च दुःखेता गतित्वाल्लौकिकी यथा ।
इत्युक्ते चानुमानैकशरणस्य किमुत्तरम् ॥’

इति श्रीमदाचार्यैः गतिरेव दुःखेता किमु सन्ततोर्ध्वगतिरिति निराकृतः मोक्षवादः । दृष्टान्तश्च विषमः । पञ्जरोन्मुक्तखगस्य क्वचिद् विश्रान्तेः सत्त्वात् । अविच्छिन्नमूर्ध्वगमनं दुःखासहकृतं न भवति । ‘अध्वा जरा मनुष्याणाम्’ इत्युक्तेः’ ।

यद्ययनन्तचतुष्टयावाप्तिर्मुक्तस्योच्यते जिनेन । तदुक्तम्-

‘आनन्दो ज्ञानमैश्वर्यं वीर्यं परमसूक्ष्मता ।
एतदात्यन्तिकं यत्र स मोक्षो जिनशासने ॥’ (तत्त्वार्थाधिगमसुखबोधिनी) इति ।

एषा वेदपुराणाद्युक्तैव विचारधारेति सूपादेया ।

**बौद्धदर्शनम्**

**वैभाषिकाः सौत्रान्तिकाश्च मोक्षस्वरूपमेवं व्याचक्षते** -

‘ज्ञानमेवात्मा । तच्च ज्ञानं स्वभावेनैव भङ्गुरम् । अत एव क्षणिकम् । तत्सन्तानस्तु नित्यः । तस्यानादिवासनावशात् यः विषयोपरक्तस्योत्पादः स संसारः । भावनाप्रकर्षवशेन वासनायाम् उत्सन्नायां यो विषयोपप्लवं विना शुद्धस्यैवोदयः स मोक्षः । क्षणिक-दुःख-शून्य-स्वलक्षणरूप-चतुर्विधभावनापरिपाकवशेन वासनायामुत्सन्नायां यो विषयोपप्लवं विना शुद्धस्यैव उदयः सः भावनाप्रकर्षपरिलब्धविषयानुप्लुतज्ञानसन्तानोत्पादः मोक्ष इति यावत् ।

वैभाषिकसौत्रान्तिकमते ज्ञानमेव आत्मा इत्युक्तम् ।

तच्च ज्ञानम् आलय-प्रवृत्तिभेदेन द्विविधम् । तत्र आलयज्ञानं प्रवृत्तिविज्ञान-दुःख-संस्कारास्पदं ‘पुमान्’ उच्यते । प्रवृत्तिविज्ञानं नीलादिविषयकम् । तदुक्तम्-

तत् स्यादालयविज्ञानं यद्भवेदहमास्पदम् ।
तत् स्यात् प्रवृत्तिविज्ञानं यन्नीलादिकमुल्लिखेत् ॥ (स.द.सं. पृ.३७) इति ।

उक्तं च लङ्कावतारे (१.९९.१००) -

'तरङ्गा उदधेर्यद्वत् पवनप्रत्ययेरिताः ।
नृत्यमानाः प्रवर्तन्ते व्युच्छेदश्च न विद्यते ।
आलयौधस्तया नित्यं विषयपवनेरितः ।
चित्रैस्तरङ्गविज्ञानैर्नृत्यमानः प्रवर्तते ॥'

विज्ञानवादिमते वैभाषिकसौत्रान्तिकमते च 'प्रदीपस्येव निर्वाणं विमोक्षस्तस्य तायिनः' इति न्यायेन बोधसन्तानस्य निवृत्तिः मुक्तिः । तैलापगमे दीपनाशवत् । ज्ञानस्यैवात्मत्वात् ज्ञाननाशे आत्मनाश एव । एतादृशमोक्षे कस्य वा स्पृहा स्यात् ?

शून्यवादिनः आहुः - अनादिवासनावशात् सम्पन्नस्य बोधसन्तानस्य यदा निवृत्तिः तदा क्षणिकमेव यद् ज्ञानमवशिष्टं भवति तादृशावस्था मुक्तिरिति ॥

इमामेव प्रक्रियाम् अवलम्ब्य अद्वैतिनः निर्विशेषचिन्मात्रावस्थितिं मुक्तिं मन्यन्ते ।

बौद्धनये ज्ञानं क्षणिकं अद्वैतनये नित्यमिति भेदः । तदेतन्निराचकारि शान्तरक्षितेन

तत्वसङ्ग्रहे-

'नित्यज्ञानविवर्तोऽयं क्षितितेजोजलात्मकः ।
तेषामल्पापराधं तु दर्शनं नित्यतोक्तितः ॥'

अयं मोक्षवादोऽपि न विदुषां मोदप्रदः ।

'आत्माभावे पुमर्थः क : इष्टस्यात्मावधिर्यतः ।' इत्यनुव्याख्यानोक्तदिशा को वाऽऽत्मनाशम् अभिलषति ? न कोऽपि ।

ज्ञानमात्रं क्षणभङ्गुरमवशिष्यत इति न चारु । मोक्षकालः, अद्वितीयज्ञानवान्न भवति कालत्वात् सम्प्रतिपन्नवत् इत्यनुमानेन कालस्याङ्गीकार्यत्वात् । ततश्चा द्वितीयज्ञानमात्रमवशिष्यत इति रिक्तं वचः ।

**साङ्ख्य-योग-न्याय-वैशेषिकदर्शने मुक्तिरेवंविधा -**

'त्रिविधदुःखात्यन्तनिवृत्तिरत्यन्तपुरुषार्थः' (साङ्ख्यसूत्रम्)

'बाधनालक्षणं दुःखम्' 'तदत्यन्तविमोक्षोऽपवर्गः' इति गोतमसूत्रम् ।

तत्र दुःखानि, शरीरं, षडिन्द्रियाणि षड्विषयाः, षड्बुद्धयः सुखं दुःखं चेत्येकविंशतिः ।

'अशेषविशेषगुणोच्छेदो मोक्षः' इति वैशेषिकाः ।

'रूपं गन्धो रसः स्पर्शः स्नेहः सांसिद्धिको द्रवः ।
बुद्ध्यादिभावनान्ताश्च शब्दो वैशेषिको गुणः ॥'

इच्छाद्वेषप्रयत्नादेरपि सर्वात्मना लयम् तत्राह' (अनुव्या...)

अत्रोच्यते आचार्यपादैः -

'...........नैतदप्यत्र शोभनम् श्रुतयो यतः ।
महानन्दं च भोगं च नियमेन वदन्ति हि ॥
बलमानन्द ओजश्च सहो ज्ञानमानाकुलम् ।
स्वरूपाण्येव जीवस्य व्यज्यन्ते परमाद् विभोः ॥'

यतः श्रुतयः, जीवस्य सत्कर्मसु आदरातिशयवतः, जीवस्वरूपभूतानामेवानन्दादीनां व्यक्तिमाचक्षते । तस्मान्न न्याय-वैशेषिका वादा उपादेयाः ।

ननु 'अशरीरं वा न सन्तं न प्रियाप्रिये स्पृशतः' इत्युक्तेः 'न प्रेत्य सञ्ज्ञास्ति' इत्युक्तत्वेन च मुक्तौ ज्ञाननाश इष्ट इति चेन्न ।

'सञ्ज्ञा नास्तीत्यपि ह्यस्य नामुक्तज्ञेयतेति हि ।' इत्यनुव्याख्याने भगवत्पादाचार्योक्तदिशा अमुक्तानां मुक्तविषयकं ज्ञानं न भवतीत्याह श्रुतिः ।

मुक्तस्य स्वस्वरूपज्ञानाभावे सर्वथाऽज्ञेयत्वेन असत्त्वापत्तिः ।

शास्त्रेण नारदादिभिश्च ज्ञेयः मुक्त इति ज्ञापयितुं 'सं'शब्दप्रयोगः ।

'अविनाशी वाऽऽरे अयमात्मा' इत्यनेन बौद्धमतनिरासः । ज्ञानं क्षणभङ्गुरम् । सन्तानस्तु नित्यः । दीपनाश इवात्मनोऽपि ज्ञानसन्तानस्य नाश इति वादः 'अविनाशी' इत्युक्त्या निराकृतः । अनुच्छित्तिधर्मा इत्यनेन न्याय-वैशेषिकनिरासः । तार्किका एव हि अशेषविशेषगुणोच्छेदं मोक्षमाहुरिति । 'यत्र हि द्वैतमिव' इत्यादिना द्वितीयवस्तुसत्तामभिधायाद्वैतं निरस्तम् ।

**अङ्गचतुष्टययुक्तो मोक्षः**

कर्मक्षयः, उत्क्रान्तिः, मार्गः, भोग इति चत्वारि मुक्तिसोपानानि । तदुक्तम्- 'कर्मक्षयः तथोत्क्रान्तिः मार्गो भोगचतुष्टयम् ।' (अनु. ४.१.१) इति । अत्र प्रथमपादे प्रथमेऽधिकरणे सर्वदा श्रवणादेः कर्तव्यता समर्थ्यते । ब्रह्म गुणपूर्णमिति सर्वदा स्वामी इति च सर्वदोपास्यम् । भगवदङ्गोत्पन्नदेवैः तत्तदङ्गाश्रितत्वेनोपासना कार्या । ध्यानादिकं मनस एकाग्रतासाधके पवित्रे देशे आसीनेन कार्यमिति समर्थ्यते ।

**कर्मक्षयः-**

अपरोक्षज्ञानोत्तरं प्रथमतः कर्मक्षयो भवति । तदुक्तम्-

'तदधिगमे उत्तरपूर्वाघयोरश्लेषविनाशौ तद्व्यपदेशात्' (ब्र.सू. ४.१.१३) इति ।

अयमाशयः- मोक्षयोग्यैः क्रियमाणं कर्म द्विविधम् । पुण्यं पापं चेति । पुण्यमपि प्रवृत्तनिवृत्तभेदेन द्विविधम् । प्रवृत्तं स्वर्गादिफलकम् । ज्ञानात्पूर्वभावि निवृत्तं कर्म अपरोक्षज्ञाननिदानम् । तदुत्तरं तु मुक्तावानन्दातिशयकारणम् । अपरोक्षज्ञाने जाते सञ्चितपापस्य नाशो भवति । तदुक्तम्-

'ज्ञानाग्निः सर्वकर्माणि भस्मसात् कुरुतेऽर्जुन' (भ.गी.) इति ।

अत्र पापनाशो नाम द्विषतां प्रदानमेव । केषाञ्चित्स्वरूपतोऽपि नाशः विद्यते । एवमनिष्टपुण्यस्य कूपतटागादिनिर्माणजस्य सुहृद्भ्यः प्रदानम् । तदुक्तम्-

'अतोऽन्यदपीत्येकेषामुभयोः'(ब्र.सू. ४.१.१७) इति ।

प्रारब्धकर्मणस्तु भोगेनैव क्षयः । तदुक्तम्- 'प्रारब्धकर्मणोऽन्यस्य ज्ञानादेव परिक्षयः' (स.शा.सं.) इति । प्रारब्धस्यापि संविदा उपमर्दो भवति । तदुक्तं भागवते- 'न वै जनो जातु कथञ्चनाव्रजेत् मुकुन्दसेवी अन्यवदङ्ग संसृतिम्' (भाग. १.५.१९) इति ।

**उत्क्रान्तिः-**

उत्क्रान्तिमार्गौ प्रायेण देवकक्ष्याबहिर्भूतानामेव । तदुक्तम्- 'उत्क्रान्तिमार्गौ देवानां न प्रायेण भविष्यतः ।' (ब्र.सू.अनु.) इति । देवेतराणां ब्रह्मनाड्या चरमशरीरादुत्क्रान्तिः । देवानां तु स्वोत्तमेषु प्रविश्य देहत्यागेन चतुर्मुखद्वारा परमात्मनि प्रवेशः ।

प्रारब्धानुभवानन्तरं हृदिस्थहरेः तेजसा हृदयाग्रे प्रकाशो जायते । प्राणाद्यशेषपरिवारविशिष्टः हृदयस्थो भगवान् तदा जीवमादाय प्रकाशद्वारेण ब्रह्मनाडीं प्रविशति । मूलाधारं समारभ्यामूर्धानमृजुस्थिता सुषुम्नानाड्येव पञ्चप्रभेदिनी ब्रह्मनाडीत्युच्यते । तत्राप्रतीकालम्बनानां देवादिव्यतिरिक्तानां सुषुम्नानाडीमध्यादुत्क्रमणम् । तदा हृदयाग्रं प्रद्योतते । तत्र वायुः पुरतो गच्छति । तमनु जीवमादाय परमात्मा । तदुक्तम्-

'तदोकोग्रज्वलनं तत्प्रकाशितद्वारो विद्यासामर्थ्यात् तच्छेषगत्यनुस्मृतियोगाच्च हार्दानुगृहीतः शताधिकया ।' (ब्र.सू. ४.२.१७) इति ।

देवानां स्वोत्तमेषु लय इत्युक्तम् । तत्र द्वौ मार्गौ गरुडमार्ग-शेषमार्गभेदेन । तत्रत्यः क्रम एतद्ग्रन्थकर्त्रा सुष्ठूपपादितः-

मनुष्योत्तमानां निर्ऋतेश्च **यमे**
यमस्य पितृवैवस्वतादीनां **स्वायम्भुवमनौ**
अग्नेः **सूर्ये**
सूर्याकाशपृथिवीनां **गुरौ**
मनु-गुरु-दक्ष-शचीनाम् **इन्द्रे**
इन्द्रस्य **सौपर्ण्याम्**
सौपर्ण्यर्याः **गरुडे**
**गरुडमार्गः**
गरुडस्य सरस्वत्याम्

गन्धर्वाणां **कुबेरे**
शतस्थानामश्विनोश्च **वरुणे**
कुबेर-वरुणयोः **सोमे**
सोमस्य विष्वक्सेनादीनां च **अनिरुद्धे**
रत्यनिरुद्धसनकादीनां **कामदेवे**
कामदेवस्य **वारुण्याम्**
वारुण्याः **शेषे**
**शेषमार्गः**
शेषस्य सरस्वत्याम्

सरस्वत्याः **विरिञ्चे**
विरिञ्चस्य लक्ष्मीद्वारा **नारायणे** लयः

तदेतत्सर्वमुक्तम्- 'वाङ्मनसि दर्शनात् शब्दाच्च' (ब्र.सू. ४.२.१) अत एव च सर्वाण्यनु (४.२.३) सोऽध्यक्षे तदुपगमादिभ्यः (४.२.४) 'भूतेषु तच्छ्रुतेः' (४.२.५) इत्यादिसूत्रेषु ।

**मार्गः**

आदौ शरीरादुत्क्रान्तोऽर्चिर्लोकं गच्छति । अर्चिर्लोके चार्चिर्नामाग्निसुतोऽग्निर्ज्योतिरिति रूपद्वयेन तिष्ठति । तत्रादावग्निनामकं द्वितीयं रूपमेति । प्रत्युद्गमादिभिर्भगवत्पूजा च पूर्ववदेव सर्वलोकेषु भवति । एवमर्चिर्लोके द्विरूपेण संस्थितमग्नेः सुतमर्चिर्नामानं देवं प्राप्य तत आतिवाहिकलोकं गच्छति । तत्रातिवाहिकलोकनामानं वायुपुत्रं ततोऽहरभिमानिलोकं ततः शुक्लपक्षाभिमानिलोकं तत उत्तरायणाभिमानिलोकं ततः संवत्सराभिमानिलोकं ततो विद्युदभिमानिलोकं ततो वरुणलोकं ततः प्रजापतिलोकं ततः सूर्यलोकं ततः सोमलोकं ततो वैश्वानरलोकं तत इन्द्रलोकं ततो ध्रुवलोकं ततो भारतीलोकं ततो वायुलोकं गच्छति । तत्र च वायुदेवप्रसादेन भगवद्ध्यानादिसुखसम्भृतमनाः जीवः बहुकालं तिष्ठति ।

तदुक्तम्-

उत्क्रान्तस्तु शरीरात् स्वात् गच्छत्यर्चिषमेव तु ।
ततो हि वायोः पुत्रं च योऽसौ नाम्नाऽतिवाहिकः ॥
ततोऽहः पूर्वपक्षं चाप्युदक्संवत्सरं तथा ।
तटितं वरुणं चैव प्रजापं सूर्यमेव च ॥
सोमं वैश्वानरं चेन्द्रं ध्रुवं देवीं दिवं तथा ।
ततो वायुं परं प्राप्य तेनैति पुरुषोत्तमम् ॥ (ब्र.सू.भा. ४.३.५) इति ।

एवं जीवः चतुर्मुखब्रह्मणा सह विरजायां कृतस्नानः त्यक्तलिङ्गशरीरश्च स्वरूपशरीरेण भगवदुदरे ध्यानङ्गतः तिष्ठति । सृष्टिकाले भगवदुदरस्थितलक्ष्म्यात्मकश्वेतद्वीपानन्तासनवैकुण्ठलोकानां भगवदुदरात् पुनः ब्रह्माण्डे स्थापिते तत्र श्वेतद्वीपपतिं परवासुदेवं दृष्ट्वा अपसृतभगवदिच्छारूपसप्तमावरणः स्वरूपशरीरेण अमन्दमानन्दमनुभवन् यथायोग्यं भूमौ अन्तरिक्षे स्वर्गे श्वेतद्वीपादौ तिष्ठति ।

**भोगः -**

मुक्तिरियं सालोक्य-सामीप्य-सारूप्य-सायुज्यभेदेन चतुर्विधा ।

**१. सालोक्यम्-**

भगवल्लोकावस्थानं विना भूम्यादिषु स्थित्वा परमात्मसन्निधाननिमित्तेन (दर्शनेन वा) भोगः सालोक्यमुच्यते । अत्र मनुष्योत्तमा अधिकारिणः । तदुक्तम्- 'केचिदत्रैव मुच्यन्ते नोत्क्रामन्ति कदाचन' इति ।

**२. सामीप्यम् -**

भगवत्सामीप्यविशेषाद् भोगविशेषवन्तः ऋष्यादयः सामीप्यभाजः । तदुक्तं भाष्ये- 'तत्रापि क्रमयोगेन ज्ञानाधिक्यात् समीपगाः' इति ।

बृहद्भाष्ये च-

'उपासनाबलान्मुक्तो भोगान् कर्मफलान् सदा ।
भुङ्क्ते विष्णोः समीपस्थो सर्वदोषविवर्जितः ॥' इति ।

**३. सारूप्यम् -**

'सर्वे चतुर्बाहव उन्मिषन्मणिप्रवेशनिष्काभरणाः सुपेशसः ।' (भाग. २.९.११) इति द्वितीयभागवतोक्तदिशा विष्णोरिव चतुर्बाहवः शङ्खचक्रायुधसमलङ्कृताः शोभन्ते । सारूप्यपदयोग्याश्च जय-विजयादयो द्वारपालाः ।

**४. सायुज्यम् -**

स्वोत्पत्त्यङ्गेषु प्रविश्य तत्रैव स्थित्वा भगवच्छरीरे भोगानुभवः सायुज्यमुच्यते ।

'आदत्ते हरिहस्तेन हरिदृष्ट्यैव पश्यति ।
गच्छेच्च हरिपादाभ्यां मुक्तस्यैषा स्थितिर्भवेत् ॥' (ब्र.सू.भा. ४.४.५) इति ।

अत्र देवानां स्वस्वोत्तमप्रवेशेन परमात्मशरीरेण च भोगः । चतुर्मुखस्य तु परमात्मशरीरप्रवेशेनैव भोगः । तदुक्तम् अणुभाष्ये-

'उत्तरेषूत्तरेष्वेवं यावद्वायुं विमुक्तिगाः ।
प्रविश्य भुञ्जते भोगान् तदन्तर्बहिरेव वा ॥
वायुर्विष्णुं प्रविश्यैव ॥' (स.शा.सं.) इति ।

एतत्तु प्रायिकम् । हरिशरीराद् बहिः भोगस्यापि प्रमितत्वात् ।

एवं माध्वभाष्यानुसारेण चतुर्थाध्यायसारः सङ्क्षेपेण निरूपितः ।

**विकारित्वेऽपि जीवोऽविनाशी**

उभयविधभोगाधिकरणे (४.४.१०) जीवानां मुक्तौ जडदेहाभावेऽपि स्वरूपभूतशरीरस्य विद्यमानत्वेन भोगानुभव उपपन्न इत्युक्तम् ।

अपि च मुक्ताः शुद्धसत्त्वात्मकजडदेहमपि यदृच्छया स्वीकुर्वन्ति । तेन च भुञ्जते सकलान् भोगान् । यदृच्छया त्यजन्त्यपि । एवं च भोगानुभवप्रतिबन्धकस्य कस्याप्यभावात् सर्वदा तेषां भोगानुभवोऽस्तीति प्रतिपादितम् । तदुक्तम्-

'स्वेच्छया वा शरीराणि तेजोरूपाणि कानिचित् ।
स्वीकृत्य जागरितवद् भुक्त्वा त्यागः कदाचन ॥' (ब्र.सू.भा. ४.४.२४) इति ।

यद्यपि संसारावस्थायां जीवः अणुरेव । तथाऽपि मुक्तावीश्वरः तदीयं तेजः स्वरूपमपि सुमहत् करोति । तदुक्तम्-

'अल्पतेजस्तथैवाल्पं जीवरूपं हि संसृतौ ।
तदेव सुमहत्तेजः करोति भगवान् महत् ।
अतो नवतरं चैतत् ब्रह्मादीनां करोत्यजः ॥'(बृ.भा. ६.४.५) इति ।

अत्र स्वरूपशरीरस्य महत्त्वं न स्वस्वचरमशरीरसमत्वेन तूलपिण्डात् प्रचय एव क्रियत इति समाहितम् । न चात्र प्रचयाङ्गीकारे विकारित्वेन जीवस्यानित्यत्वप्रसक्तिः । 'ईश्वरशक्त्या तदुपपत्तेः' इति गीताभाष्यप्रमेयदीपिकोक्तरीत्या सर्वं समञ्जसम् ।

नैकस्मिन्नसम्भवात् (२.२.३३) इति सूत्रानुव्याख्यानसुधायामपि इयमाशङ्का समाहिता । यथा-

जीवस्वरूपे किञ्चिद्विकाराङ्गीकारेऽपि नानित्यत्वप्रसक्तिः । अनित्यत्वं हि तदैव भवति यदा जैवयावद्द्रव्यभाविधर्मेषु विकारोऽभ्युपेयते । न चैवं प्रकृते । तस्मात् स्वरूपदेहेन बाह्यशुद्धसत्त्वात्मकदेहेनापि मुक्तौ भोगसम्भवात् सर्वं समञ्जसम् इति समाहितम् ।

यावच्छक्ति ग्रन्थस्यास्य शोधने प्रयत्नो विहितः । तत्त्वाभिमानिदेवानां मुख्यप्राणप्रियस्य भगवतः श्रीकृष्णस्य च परमानुग्रहेण कार्यमिदं सम्पन्नम् । श्रीप्राणाराध्यस्य कृष्णस्य चरणनलिनयोः कृतिरेषा समर्प्यते ।

श्रीमन्न्यायसुधादिग्रन्थपाठनेन अनुग्राहकेभ्यः श्रीपेजावरमठाधीशेभ्यः श्रीमद्विश्वेशतीर्थश्रीमच्चरणेभ्यः सभक्तिश्रद्धं प्रणतिततयः समर्प्यन्ते ।

वात्सल्यातिशयेन मामस्मिन् कर्मणि नियोज्य अनुग्रहं कृतवद्भ्यः श्रीभण्डारकेरिमठाधीशेभ्यः श्रीमद्विद्येशतीर्थश्रीमच्चरणेभ्यः सभक्तिश्रद्धं प्रणतिततयः समर्प्यन्ते । तेषामेव कृपातिशयेन नैकवारं भाष्य-टिप्पणीपारायणं विहितमिति तेषामधमर्णोऽयं जनः । उभयोरपि गुरुचरणयोः 'भूयिष्ठां नम उक्तिं विधेम' इति वैदिकीमुक्तिं संस्मरन् मुहुर्मुहुः प्रणतिततिभिरेव केवलाभिः कार्तज्ञं व्याहरामि ।

विद्वज्जनैकसाध्याक्षरदोषपरिमार्जनकर्मणि साह्यं विहितवन्तं बि.एस्.हयवदनाचार्यं साधुवादप्रदानेन समभिनन्दामि । अहोरात्रं श्रममविगणय्य गुरुसेवायां बद्धादरं श्रीव्यासराजजोशिनामधेयं श्रीकृष्णः आचार्यचरणाश्च समनुगृह्णन्त्विति प्रार्थये ।

अज्ञानेन, अनवधानेन वा दोषा अत्र भवेयुः, हंसक्षीरन्यायेन विद्वज्जनाः सुजनाश्च मामनुगृह्णन्त्विति सप्रश्रयं सम्प्रार्थ्य विरमामि विस्तरात् ।

*इति सुजनविधेयः*

**डा. ए.वि. नागसम्पिगे**

निदेशकः, पूर्णप्रज्ञसंशोधनमन्दिरम्, बेङ्गलूरु

यावच्छक्ति ग्रन्थस्यास्य शोधने प्रयत्नो विहितः । तत्त्वाभिमानिदेवानां मुख्यप्राणप्रियस्य भगवतः श्रीकृष्णस्य च परमानुग्रहेण कार्यमिदं सम्पन्नम् । श्रीप्राणाराध्यस्य कृष्णस्य चरणनलिनयोः कृतिरेषा समर्प्यते ।

श्रीमन्न्यायसुधादिग्रन्थपाठनेन अनुग्राहकेभ्यः श्रीपेजावरमठाधीशेभ्यः श्रीमद्विश्वेशतीर्थश्रीमच्चरणेभ्यः सभक्तिश्रद्धं प्रणतिततयः समर्प्यन्ते ।

वात्सल्यातिशयेन मामस्मिन् कर्मणि नियोज्य अनुग्रहं कृतवद्भ्यः श्रीभण्डारकेरिमठाधीशेभ्यः श्रीमद्विद्येशतीर्थश्रीमच्चरणेभ्यः सभक्तिश्रद्धं प्रणतिततयः समर्प्यन्ते । तेषामेव कृपातिशयेन नैकवारं भाष्य-टिप्पणीपारायणं विहितमिति तेषामधमर्णोऽयं जनः । उभयोरपि गुरुचरणयोः 'भूयिष्ठां नम उक्तिं विधेम' इति वैदिकीमुक्तिं संस्मरन् मुहुर्मुहुः प्रणतिततिभिरेव केवलाभिः कार्तज्ञं व्याहरामि ।

विद्वज्जनैकसाध्याक्षरदोषपरिमार्जनकर्मणि साह्यं विहितवन्तं बि.एस्.हयवदनाचार्यं साधुवादप्रदानेन समभिनन्दामि । अहोरात्रं श्रममविगणय्य गुरुसेवायां बद्धादरं श्रीव्यासराजजोशिनामधेयं श्रीकृष्णः आचार्यचरणाश्च समनुगृह्णन्त्विति प्रार्थये ।

अज्ञानेन, अनवधानेन वा दोषा अत्र भवेयुः, हंसक्षीरन्यायेन विद्वज्जनाः सुजनाश्च मामनुगृह्णन्त्विति सप्रश्रयं सम्प्रार्थ्य विरमामि विस्तरात् ।

*इति सुजनविधेयः*

**डा. ए.वि. नागसम्पिगे**
निदेशकः, पूर्णप्रज्ञसंशोधनमन्दिरम्, बेङ्गलूरु

# विषयानुक्रमणिका

| विषयाः | पृ.सं. |
|---|---|

## तृतीयाध्यायस्य चतुर्थः पादः

## चतुर्थाध्यायस्य प्रथमः पादः

| विषयाः | पृ.सं. |
|---|---|

## अथ चतुर्थाध्यायस्य चतुर्थः पादः



* * * *

# श्रीमद्ब्रह्मसूत्रभाष्ये तृतीयोऽध्यायः

## ॥ प्रथमः पादः ॥

### १. तदन्तराधिकरणम्

**(देहनाशेऽपि जीवस्य भूतसम्बन्धः न निवर्तते)**

॥ श्री गुरुभ्यो नमः ॥

## सूत्रार्थमणिमञ्जरी

### (भाष्यम्)

**साधनविचारोऽयमध्यायः । वैराग्यार्थे गत्यादिनिरूपणा प्रथमपादे ।**

'अथाऽतो ब्रह्मजिज्ञासा' (ब्र.सू.१.१.१) इति सूत्रे मोक्षार्थं ब्रह्मविचारः कर्तव्य इत्युक्तम् । तत्र किं लक्षणकं ब्रह्मेति शङ्कायां द्वितीयसूत्रेण लक्षणमभिधाय, प्रथमेनाऽध्यायेन स्वरूपभूतं लक्षणं समर्थ्य सा शङ्का परिहृता । ततो विरोधशङ्का प्राप्ता । सा च द्वितीयेन(अध्यायेन) निराकृता । (ततः) तादृशब्रह्मप्राप्ति-रूपमोक्षार्थं किं मया कार्यमिति शङ्कायां तन्निवारणार्थम् अथपद-जिज्ञासापदाभ्यां सूचितसाधनानि विचारयितुमेतदध्यायप्रवृत्तिरिति बोधयन्ति- **साधनविचार इति ॥** साधनानि मुक्तिसाधनविरक्ति-भक्त्युपासनाज्ञानानि विचार्यन्तेऽस्मिन्नित्यधिकरणे घञ् । वैराग्यादीनां विचारश्चैतादृश इति भाष्य एवाग्रे 'वैराग्यार्थे' इत्यादौ स्फुटीभविष्यति । एतदध्यायोपाधिः साधनविचार इति भावः । ननु भगवत्प्रसादस्यापि साधनत्वात्तद्विचारः कुतोऽत्र न कृतः ? इति चेन्न, मुमुक्षुनिष्ठसाधनस्यैव विचार्यत्वप्रसक्तेः प्रसादस्याऽतथा-त्वात् । एतत्पादोपाधिं दर्शयन्ति- **वैराग्येति ॥** प्रकृते वैराग्यं नाम विष्णुलोकेतरेष्वसाराऽनित्यत्वज्ञानपूर्वकं तेषु, तत्साधनेषु च, रागाभावः । अर्थशब्दोऽर्थनीयपर आङ्पूर्वश्च । आङ आवश्यकत्वमर्थः । विशेषणस्यार्थशब्दस्य परनिपातः । तादर्थ्ये विषये सप्तमी । अवश्यमपेक्ष्यमाणवैराग्यार्थमित्यर्थः । यद्वा-वैराग्यार्थ इति स्वार्थे सप्तमी । **गत्यादीति ॥** परलोकगत्यागतिस्वर्गनरकगर्भवासादीत्यर्थः । **निरूपणेति ॥** क्रियत इति शेषः । 'वैराग्यं कुरु' इति वैराग्यं न साक्षाद्विधेयं तस्य विषयदुस्सहत्वासारत्वानित्यत्वादि-ज्ञानाधीनत्वेन पुरुषप्रयत्नागोचरत्वात्, किन्तु तत्कारणविषयदुस्सहत्वादिकमेव ज्ञापनीयमिति भावः । **प्रथमे इति ॥** यद्यप्यधिकारिनिष्ठमोक्षसाधनेषु ज्ञानं प्रधानम् । अतस्तदेव प्रथमं निरूपणीयम् । तथापि- ज्ञान-

साधनजिज्ञासां प्रति भक्तिस्साधनम् । **भक्तेर्जिज्ञासाधिकारितावच्छेदकत्वात्** भक्तिं प्रति वैराग्यं साधनम् । माहात्म्यज्ञानपूर्वकसुदृढस्नेहस्य भक्तित्वेन तद्घटकदार्ढ्यस्य भगवतीवाऽन्यत्रापि रागसत्त्वेऽयोगेन वैराग्यस्य भक्तिं प्रति कारणत्वेन सर्वसाधनापेक्षया प्राथम्यात् । तदर्थं गत्यादिनिरूपणं प्रथमे पादे क्रियत इति भावः । अत्र पादे आपादसमाप्तिनयेषु वैराग्यस्यावश्यकत्वसमर्थनम् । अन्यथा जिज्ञासानये अथशब्दोक्तवैराग्यं न स्यादित्याक्षेपिकी जिज्ञासानयेन (१.१.१) सङ्गतिः । मोक्षसाधनवैराग्यं विषयः । मुमुक्षुणाऽनुष्ठेयं नवेति संशयः । जिज्ञासासूत्रम् अन्वयव्यतिरेकादर्शनं च तद्बीजम् । नानुष्ठेयमिति पूर्वपक्षः । अनुष्ठेयमिति सिद्धान्तः। तदर्थचिन्तायां विशेषविषयादिकं तत्र तत्र वक्ष्यते । अत्र नये मुमुक्षोर्वैराग्यार्थं मृतजीवस्य निःशेषभूत-वियोगाभावसमर्थनम् । अन्यथा निःशेषभूतवियोगस्यैव मोक्षत्वात् तस्य च स्वाभाविकमरणेनैव सिद्धौ वैराग्यं न स्यादिति भूतवियोगः साधनीयः[१] । निःशेषभूतवियोगो विषयः । भवति न वेति सन्देहः, पूर्वोत्तरपक्ष-प्रापकमानद्वयं तद्बीजम् । भवतीति पूर्वपक्षः । पूर्वपक्षमाहुः- **भूतबन्धो हीति ॥** तत्र मानमाहुः- [२]**भूतबन्धस्त्विति ॥ वाराह इति ॥** तत्रेत्युक्तेः भूतबन्ध एव बन्धपदार्थ इत्यर्थः । हिरेवार्थे । **तच्च**= भूतविमोचनं च । **मरणे**= प्रसिद्धमरणे । तत्र मानमाहुः- [३]**भूतानामिति ॥ भारत इति ॥** तत्रेत्युक्तेः मरणे भवतीत्यन्वयः । **अत इत्यादि ॥** भूतविमोचनरूपमोक्षस्य स्वाभाविकत्वेन साधनैर्वैराग्यादिभिः किं प्रयोजनमित्यर्थः ॥

**भूतबन्धो हि बन्धः । 'भूतबन्धस्तु संसारो मुक्तिस्तेभ्यो विमोचनम्' इति च वाराहे । तच्च मरणे भवति ।**

---

१. (जिज्ञा.न.) सङ्गतिः २. **भूतबन्ध इति ॥** भूतबन्ध एवेत्यर्थः । शिष्टं स्पष्टम् ।

३. **भूतानामिति ॥** निवृत्तिर्वियोग इत्यर्थः । **स्पष्टमन्यत् ॥ वेत्थेति ॥** (छा.५.३.३.) श्वेतकेतुर्नामा कश्चित् पण्डितंमन्यः प्रवाहणस्य राज्ञः सभां जगाम । स राजा पञ्चविषयानेनं श्वेतकेतुमप्राक्षीत्, तेष्विदं पञ्चमप्रश्न-वाक्यम् । अस्यार्थः- हे श्वेतकेतो **यथा** येन प्रकारेण येन क्रमेण च योषाग्नौ **पञ्चम्यामाहुतौ** हुतायाम् **आपः** अद्भिः परिष्वक्तो जीवो लब्धदेहः **पुरुषवचसः** तन्नामको भवन्ति **भवति** तं प्रकारं, क्रमं च वेत्थ किमिति । तदनन्तरं श्वेतकेतुर्नवेदेत्युक्त्वा ततः पितरमेत्य तत्समीपे सर्वमवोचत् । ततः पिता उद्दालकः स्वयमिदं वेदितुं राजानमेत्य एतद्विद्यां मे ब्रूहीति प्रार्थयामास । ततो राजा तस्मै सर्वमुपदिदेश । तत्र पञ्चमप्रश्नस्य परिहार-वाक्यमेतत् 'इति तु पञ्चम्याम्' इति । (छा.५.३.२) अस्यार्थः- इति तु इत्येवंप्रकारेण रेतोरूपायां पञ्चम्यामाहुतौ योषाग्नौ प्रक्षिप्तायां मरणानन्तरं जीवेन सह गताः पुनरागताः आपो भूतत्रयात्मिका आपः पुरुषवचसः तन्नामका भवन्ति । पुरुषो देह इति ॥ १ ॥ अ.१ ॥

'भूतानां विनिवृत्तिस्तु मरणं समुदाहृतम् ।
भूतानां सम्प्रयोगश्च जनिरित्येव पण्डितैः ॥' इति च भारते ।

अतः किं साधनैरित्यत आह—

॥ ॐ तदन्तरप्रतिपत्तौ रंहति सम्परिष्वक्तः प्रश्ननिरूपणाभ्याम् ॐ ॥ १ ॥

तच्छब्दः सञ्ज्ञामूर्तीत्यत्र प्रसक्तशरीरपरः । जीवो, भूतैरित्यर्थाल्लभ्यते । अयमर्थः- जीवः **तदन्तरप्रतिपत्तौ** शरीरान्तरप्राप्त्यर्थम्, पूर्वदेहत्यागकाले वा, भूतैः पृथिव्यादिभूतैः **सम्परिष्वक्तः** आलिङ्गितः सन्नेव, **रंहति** पूर्वदेहं त्यक्त्वा गच्छति, **प्रश्ननिरूपणाभ्यां** 'वेत्थ यथा' इति प्रश्नः, 'इति तु पञ्चम्याम्' इति प्रतिवचनमाभ्यामिति ॥ ज्ञाप्यत्वं पञ्चम्यर्थः । रंहतीत्यत्रान्वेति ॥

**शरीरान्तरप्रतिपत्तौ भूतसम्परिष्वक्त एव गच्छति । 'वेत्थ ! यथा पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ति' (छां.उ. ५.३.२) । 'इति तु पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ति' (छां.उ.५.९.१) इति प्रश्नपरिहाराभ्याम् ॥**

॥ इति तदन्तराधिकरणम् ॥

भा.॥ सूत्रं व्याचक्षते- **शरीरेति** ॥ **भूतेति** ॥ जीव इति शेषः । प्रश्नादिबोधकश्रुतिमाहुः- **वेत्थ** इति ॥ १ ॥ अ. १ ॥

॥ इति तदन्तराधिकरणम् ॥ १ ॥

## २. त्र्यात्मकत्वाधिकरणम्

### (समस्तभूतविशिष्ट एव जीवः गच्छति)

**अत्र नये जीवस्य समस्तभूतैः सह गतिसमर्थनम् । अन्यथा उक्तश्रुतावपामेव गतिश्रवणादेकस्य भूतस्य देहानारम्भकत्वात्तद्गमनं व्यर्थमिति पूर्वनयेन (३.१.१) सङ्गतिः । भूतानि विषयः । सर्वाणि सह गच्छन्ति कानिचिदेवेति सन्देहः । भूतसम्परिष्वक्तो गच्छतीति सामान्योक्तिः तद्बीजम् । आप एव गच्छन्तीति पूर्वपक्षः ॥ ('आपः पुरुषवचसो भवन्ति' इति प्रश्नव्याख्यानयोरपामेव गतिश्रवणात् । अतो मृतस्य सकलभूतसम्परिष्वङ्गाभावात् मरणमात्रेण मोक्षसिद्धेः न वैराग्याद्यपेक्षितमिति ।)**

## ॥ ॐ त्र्यात्मकत्वात्तु भूयस्त्वात् ॐ ॥ २ ॥

**पूर्वसूत्रम्, आर्थिकं जीव इत्यादि च, वर्तते । तुः इत्यङ्गीकारेऽपीत्यर्थे । अर्थादाप इति लभ्यते । यथायथमावृत्तिविपरिणामौ । युज्यन्त इति शेषः । अयमर्थः- जीवः तदन्तरप्रतिपत्तौ भूतैः सर्वभूतैः सम्परिष्वक्तो रंहतीत्यङ्गीकारेऽपि प्रश्ननिरूपणयोः प्रश्नवाक्ये, निरूपणवाक्ये च, आपः अप्शब्दः युज्यते । अपां त्र्यात्मकत्वात् पृथिव्यादिभूतत्रयात्मकत्वात् । त्र्यात्मके समुदाये अपां भूयस्त्वात् अब्भागस्याधिक्यात्, सर्वशरीरेषु सम्भूयाऽब्भागस्याधिक्याद्वेति । सम्भूयाधिक्यं नाम पार्थिवतैजसशरीरेषु प्रत्येकमपां भागत्रयम्, आप्ये शरीरे भागचतुष्टयं सङ्कलनयाऽपां भागा दश । पार्थिवभागाः सङ्कलनया अष्टौ । तैजसभागाः सङ्कलनया षडिति (बोध्यम्)। एतच्च पूर्वपादान्ते स्पष्टं निरूपितम् ।**

**अप्छब्दस्तु त्र्यात्मकत्वाद्युज्यते । भूयस्त्वाच्चापाम् । 'तापापनोदो भूयस्त्वमम्भसो वृत्तयस्त्विमाः' इति च भागवते । (३.२७.४५)**

॥ इति त्र्यात्मकत्वाधिकरणम् ॥

**भा.॥** अपां त्र्यात्मकत्वेऽपि अप्छब्दप्रयोगे विशेषकारणमाहुः- **भूयस्त्वादिति** ॥ अपां भूयस्त्वे मानमाहुः- **तापेति** ॥[1] **भागवत इति** ॥ तत्रेत्युक्तेः भूयस्त्वादित्यन्वयः ॥ २ ॥ अ. २ ॥

॥ इति त्र्यात्मकत्वाधिकरणम् ॥ २ ॥

---

१. **तापेति** ॥ (३.२७.४५) 'क्लेदनं पिण्डनं तृप्तिः प्राणनाप्यायनोन्दनम् । तापापनोदो भूयस्त्वमंभसो वृत्तयस्त्विमाः' इति पठ्यते । क्लेदनमार्द्रीकरणं पिण्डनं पिण्डीकरणम् । तृप्तिः तर्पकत्वं, प्राणनं चेष्टाकारणत्वम्, आप्यायनं सुखकरत्वम् उन्दनम् बिन्दुभावः । तापापनोदनः तापनिवर्तकत्वं भूयस्त्वम् अन्येभ्यो भूतेभ्यः कार्येषु भागाधिक्यम् । इमा अष्टौ अम्भसो जलस्य वृत्तयः स्वरूपलक्षणभूता धर्मा इत्यर्थः । (एवं च न केवलमद्भिरपि तु सर्वैर्भूतैस्सह गमनं जीवस्य भवतीति मरणमात्रेण सर्वभूतवियोगाभावाद् अपेक्षितमेव वैराग्यादीति स्थितम्।।)

## ३. प्राणगत्यधिकरणम्

**(भूतानां जीवेन सह गमनम्)**

अत्र नयेऽनुमानेन भूतैः सह गमनसमर्थनम् । अन्यथा विशेषप्रमाणाभावेन सर्वभूतावियोगो न सम्भवतीति 'तदन्तर' (३.१.१) नयेन सङ्गतिः, भूतानि विषयः, सह गच्छन्ति न वेति संशयः, द्विधापि सम्भवस्तद्बीजम्, नेति पूर्वपक्षः ॥

**॥ ॐ प्राणगतेश्च ॐ ॥ ३ ॥**

रंहति परिष्वक्तो, भूतैः जीव इति वर्तते । चो भूताविनाभावार्थकः । अयमर्थः- जीवो भूतैस्सह रंहति **प्राणगतेश्च** प्राणानां 'यत्र वाव' इति श्रुतिसिद्धभूताविनाभाववदिन्द्रियाणां गतेः 'करणैर्वाव न वियुज्यते' इति श्रुतिसिद्धजीवसहगमनादिति ॥ एवं चाऽनुमानमुक्तं भवति । तत्प्रयोगश्च- 'भूतानि जीवेन सह गच्छन्ति जीवेन सह गन्तृप्राणाविनाभूतत्वात् । यत् येन सह गन्त्रविनाभूतं तत् तेन सह गच्छति, यथा राज्ञा सह गन्त्रमात्याविनाभूतो भृत्यो राज्ञा सह गच्छति' इति ॥

**'यत्र वाव भूतानि तत्र करणानि नित्यानि ह वा एतानि भूतानि करणानि च । नैतानि कदाचिद्वियुज्यन्ते न च विलीयन्ते' इति भाल्लवेयश्रुतेः प्राणगतेर्भूतान्यपि गच्छन्तीति[1] सिद्धम् ।**

इति प्राणगत्यधिकरणम्

भा.॥ श्रुत्युपन्यासपूर्वं सूत्रं व्याचक्षते- **यत्रेति**[2] ॥ श्रुतेः **प्राणगतेरिति** ॥ श्रुतिसिद्ध-भूताऽविनाभाववदिन्द्रियाणां सहगमनादित्यर्थः ॥ ३ ॥ अ. ३ ॥

॥ इति प्राणगत्यधिकरणम् ॥ ३ ॥

---

१.'सन्तीति' पा.

२. **यत्रेति** ॥ यत्र देशे **भूतानि** पृथिव्यादीनि **तत्रैव करणानि** चक्षुरादीनि इति दैशिकव्याप्तिः कालतोव्याप्तिमाह- **नित्यानीति** ॥ एतानि भूतानि करणानि चेत्यर्थः । मोक्षपर्यन्तमिति शेषः । शिष्टं स्पष्टम् ॥ ३ ॥ अ.३ ॥

## ४. अग्न्याद्यधिकरणम्

**(प्राणाः जीवेन सह भागतः गच्छन्ति)**

अत्र नये जीवेन सह प्राणगतिसमर्थनम् । अन्यथा पूर्वोक्तप्राणगतिहेतुरसिद्ध इति 'प्राणगति' (३.१.३) नयेन सङ्गतिः, प्राणा विषयः । सह गच्छन्ति न वेति संशयः । अनिर्णयस्तद्बीजम्, नेति पूर्वपक्षः ॥

**॥ ॐ अग्न्यादिगतिश्रुतेरिति चेन्न भाक्तत्वात् ॐ ॥ ४ ॥**

प्राणगतेः, जीव इति वर्तते । प्राणेति लुप्तविभक्त्यन्तं पृथक्पदम् । यथायथमावृत्तिविपरिणामौ । अयमर्थः- **प्राणानाम्** इन्द्रियाणाम् **अग्न्यादिगतिश्रुतेः** अग्न्यादीन् प्रति 'यत्राऽस्य पुरुषस्य' इति श्रुतौ गमनश्रवणात् न जीवेन सह **गतिरिति चेन्न- अग्न्यादिगतिश्रुतेः** अग्न्यादीन् प्रति गमनबोधकोक्तश्रुतेः **भाक्तत्वात्** एकदेशेन गमनबोधकत्वादिति ॥

**'यत्रास्य पुरुषस्य मृतस्याग्निं वागप्येति वातं प्राणः' (बृ.उ.५.२.१३)**

**इत्यादिश्रुतेर्न प्राणानां जीवेन सह गतिरिति चेन्न । भागतोऽग्न्यादिप्राप्तेः ।**

**'पुरुषस्य मृतौ ब्रह्मन् प्राणा भागत एव तु ।**
**अधिदैवं प्राप्नुवन्ति भागतोऽनुव्रजन्ति तम् ।**
**पुनः शरीरसम्प्राप्तौ तमेवानुविशन्ति च' ॥ इति ब्राह्मे ।**

**ब्रह्माण्डे च–**

**'मृतिकाले जहात्येनं प्राणा भूतानि पञ्च च ।**
**भागतो भागतस्त्वेनमनुगच्छन्ति सर्वश ॥' इति ।**

॥ इत्यग्न्याद्यधिकरणम् ॥

**भा.॥** श्रुत्युपन्यासपूर्वं सूत्रार्थमाहुः- **यत्राऽस्येति ॥**[१] भाक्तत्वे मानमाहुः- **पुरुषस्येति**[२] ॥ भूतानामप्यंशतो गमने मानमाहुः- **मृतिकाल इति ॥**[३] ब्राह्म इत्युक्तेः, ब्रह्माण्ड इत्युक्तेश्च, भागतोऽग्र्यादिप्राप्तेरित्यन्वयः ॥ ४ ॥ अ. ४ ॥

**॥ इत्यग्न्याद्यधिकरणम् ॥ ४ ॥**

---

१. **यत्रास्येति ॥** (बृ.उ.५.२.१३) आदिना 'चक्षुरादित्यं मनश्चन्द्रमसं दिशः श्रोत्रम्' इत्यादि गृह्यते । **यत्र** यदा मरणकाले **मृतस्य** म्रियमाणस्य **अस्य पुरुषस्य** जीवस्य **वाक्** वागिन्द्रियम्, **अग्निमप्येति** । **वातं** वायुं **प्राणः** श्वासरूपो जडवायुः तदभिमानी मुख्यवायुश्चेत्यर्थः । शिष्टं स्पष्टम् । अत्रेन्द्रियाणामेकांशेन स्वमूलरूप प्रति गमनम् अन्यांशेन जीवेन सह गमनमिति विवेकः । पूर्वपक्षे तु सामस्त्येनेन्द्रियाणां स्वस्वमूलरूपे गतिरित्यर्थ इति ज्ञेयम् ।

२. **पुरुषस्येति ॥** हे ब्रह्मन् ज्ञानवृद्ध नारद ! **पुरुषस्य** जीवस्य **मृतौ** सत्यां **प्राणा** इन्द्रियाणि तद्देवाश्च **भागत एव** न तु सामस्त्येन **अधिदैवम्** अग्र्यादीन् **तं** जीवं **पुनः शरीरान्तरसम्प्राप्तौ** भूलोके शरीरान्तरप्राप्तौ **तमेव** स्वाविनाभूतजीवमेवानुसृत्य **विशन्ति** पुनःप्राप्तमेव देहं प्रविशन्ति । भागतः सहगतभागेनेत्यर्थः । स्पष्टमन्यत्।

३. मृतिकाले इति ॥ प्राणा इन्द्रियाणि भूतानि च पृथिव्यादीनि चेत्यर्थः । स्पष्टमन्यत् ॥ ४ ॥ अ.४ ॥

## ५. प्रथमेऽश्रवणाधिकरणम्

### (भूतानां जीवेन सह गमनविषये आक्षेपपरिहारः)

शङ्कान्तरवारणायाऽत्र नये भूतैस्सह गतिसमर्थनम्। पूर्वनयेन (३.३.४) आक्षेपिकी सङ्गतिः, भूतानि विषयः, सह गच्छन्ति न वेति संशयः, द्विविधवस्तुदर्शनं तद्बीजम्, नेति पूर्वपक्षः ॥

**॥ ॐ प्रथमेऽश्रवणादिति चेन्न ता एव ह्युपपत्तेः ॐ ॥ ५ ॥**

भूतैः, रंहति, जीव इति वर्तते । अर्थाच्छ्रद्धाशब्देनेति लभ्यते । उच्यन्त इति शेषः । यथायथमावृत्तिविपरिणामौ । अयमर्थः- **प्रथमे** प्रथमाग्नौ 'तस्मिन्नेतस्मिन्नग्नौ' इति श्रुतिबोधिते द्युलोकस्थे (नारायणे) उपक्रम इति यावत्। तासामपाम् **अश्रवणात्** होम्यतया श्रवणाभावात् जीवो **भूतैः सह न रंहतीति चेन्न- हि** यतः **ता एव** आपः प्रथमेन प्रथमाग्निहोम्यबोधकेन श्रद्धाशब्देनोच्यन्ते **उपपत्तेः** 'आपः पुरुषवचसो भवन्ति' इत्युपसंहारोपपत्त्यर्थमत इति ॥ एवं चोपसंहारानुरोधेन उपक्रमेऽर्थो वक्तव्य इति भावः ॥

**तस्मिन्नेतस्मिन्नग्नौ देवाः श्रद्धां जुह्वति (छां.उ. ५.४.२) इति प्रथमाग्नौ श्रूयते न भूतानि जुह्वतीति । अतो नेति चेन्न ।**

**ता एव प्रस्तुता आपः श्रद्धारूपेण हूयन्ते । 'इति तु पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ति' (छां.उ.५.९.२) इत्युपसंहारोपपत्तेः ॥**

भा.॥ श्रुत्युपन्यासपूर्वं सूत्रार्थमाहुः- **तस्मिन्नित्यादिना** ॥[1] **अत इति** ॥ उक्तमिति शेषः । उक्तं भूतानां जीवेन सह गमनं नेत्यर्थः । **श्रद्धारूपेण**- श्रद्धाशब्दार्थत्वेन । युक्ता इति शेषः । अजहल्लक्षणया श्रद्धयाऽद्भिश्च सहितस्य जीवस्य श्रद्धाशब्दार्थत्वेन तस्यैव होम्यत्वमिति भावः । **हूयन्त इति** ॥ इति कल्प्यन्त इति भावः । **उपपत्तेरिति** ॥ उपपत्त्यर्थमित्यर्थः ॥ ५ ॥ अ. ५॥

॥ इति प्रथमेऽश्रवणाधिकरणम् ॥

---

१. **तस्मिन्निति** ॥ (छा.५.४.२) **तस्मिन्** द्युलोकस्थे, **एतस्मिन्** आदित्यादिसमिदादिविशिष्टे, **अग्नौ** अग्निस्थानीये नारायणाख्ये भगवद्रूपे, **देवाः** तल्लोकाधिपतयो देवाः **श्रद्धां** श्रद्धया अद्भिश्च सम्परिष्वक्तजीवम् आहुतिरूपं **जुह्वति** प्रक्षिपन्तीत्यर्थः । पूर्वपक्षे तु - श्रद्धासहितजीवमित्यर्थो न तु अप्सहितमित्यर्थः ॥ ५ ॥ अ.५ ॥

## ६. अश्रुतत्वाधिकरणम्

**(भूतानां जीवेन सह गमनविषये प्रत्यक्षश्रुतिः, नास्तीत्याक्षेपपरिहारः)**

**अत्र नये प्रत्यक्षवचनेन भूतैः सह गमनसमर्थनम् । सङ्गत्यादिकं पूर्वनयवत् ॥**

**॥ ॐ अश्रुतत्वादिति चेन्नेष्टादिकारिणां प्रतीतेः ॐ ॥ ६ ॥**

जीवो, भूतैः, रंहति, गतेरिति वर्तते । अश्रवणादित्यनुवर्तमाने पुनरश्रुतत्वादिति ग्रहणं प्रत्यक्षाश्रवणपरम् । यथायथमावृत्तिः । अयमर्थः- गतेर्भूतसहगमनस्य **अश्रुतत्वात्** प्रत्यक्षाश्रवणात् **जीवो भूतैः सह न रंहतीति चेन्न- इष्टादिकारिणाम्** इष्टापूर्तादिकर्तॄणां विषये गतेः भूतसहगतेः **प्रतीतेः** 'अथैनं यजमानम्' इति श्रुतौ प्रत्यक्षश्रवणादिति ॥

**अग्न्यादिगतिः प्रत्यक्षतः श्रूयते । अतः प्रत्यक्षाश्रवणान्न युक्तमिति चेन्न । 'अथैनं यजमानं किं न जहाति भूतान्येव भूतैरेव गच्छति भूतैर्भुङ्क्ते भूतैरुत्पद्यते भूतैश्चरति भूतैर्विचरति' इति कौण्ठरव्यश्रुतौ (कौण्डिन्य) प्रतीतेः ॥**

॥ इत्यश्रुतत्वाधिकरणम् ॥

**भा.॥** सूत्रं व्याचक्षते- **अग्न्यादीति** ॥ वागादीनामग्न्यादीन् प्रति गतिरित्यर्थः । यथेत्यादौ शेषः । **प्रत्यक्षत इति** ॥ शब्दवाच्यत्वेनेत्यर्थः । **अत इति** ॥ तथेत्यर्थः । **न युक्तमिति** ॥ पूर्वोक्तं न युक्तमित्यर्थः । श्रुतिमाहुः- **अथैनमिति** ॥[१] **प्रतीतेरिति** ॥ इष्टादिकारिणामिति लभ्यते उपस्थितत्वात् । ननु 'तदन्तरप्रतिपत्तौ रंहति सम्परिष्वक्तः श्रुतेः' इत्येव सूत्रमस्तु, **'श्रुतेः'** अथैनमिति श्रुतेरित्यर्थः । अन्ततोऽस्याः श्रुतेरवश्यमुपन्यसनीयत्वात् । एवं चैतदतिरिक्त-पञ्चाधिकरणी व्यर्थेति चेन्न- छान्दोग्यव्याख्यानार्थं तत्प्रवृत्तेः । अन्यथा छान्दोग्यवाक्यमप्रमाणमिति शङ्का स्यात् तद्विरोधेनेदमधिकरणमसङ्गतमिति वा शङ्का स्यादिति ॥ ६ ॥ अ. ६ ॥

**॥ इत्यश्रुतत्वाधिकरणम् ॥ ६ ॥**

---

१. **अथैनमिति ॥ यजमानं** यष्टारं **किं न जहातीति** प्रश्नः । उत्तरमाह- भूतान्येवेति ॥ न जहति, भुङ्क्ते पुण्यपापफलम्, उत्पद्यते भूमौ, चरति संचरति सत्कर्म करोति वा **विचरति** विरुद्धदुष्टं कर्माचरतीत्यर्थः ॥ ६ ॥ अ. ६ ॥

## ७. भाक्ताधिकरणम्

**(कर्मणा जायमानः मोक्षः गौणः)**

**अत्र नये वैराग्यानुष्ठानस्यावश्यकत्वसमर्थनम् । 'जिज्ञासा' (१.१.१) नयेन सङ्गतिः, अथशब्दोक्तं वैराग्यं विषयः । आवश्यकं न वेति सन्देहः । पूर्वोत्तरपक्षप्रापकमानद्वयं तद्बीजम् । नाऽवश्यकं, कर्मणैव मोक्षसिद्धेरिति पूर्वपक्षः ॥ १ सू. अ. ॥**

**अपामेति ॥[1](पूर्वपक्षप्रापिकेयम् ।) एवं चेदिति शेषः । मोक्षकारणज्ञानफलवैराग्यार्थं गत्यादिनिरूपणं चेदिति तदर्थः ॥ विरोध इति ॥ अप्रामाण्यमित्यर्थः ॥**

### ॥ ॐ भाक्तं वाऽनात्मवित्त्वात्तथा हि दर्शयति ॐ ॥ ७ ॥

**इष्टादिकारिणाम्** इति वर्तते । श्रुतिरमृतत्वं मुख्यमिति शेषः । वाशब्दो व्यवस्थितविकल्पे तद्बलात् ज्ञानद्वारकं वा, मोक्षेऽतिशयरूपं वेति लभ्यते । यथायथमावृत्तिः । आवर्तितानात्मवित्त्वादित्यत्र न, आत्मवित्त्वादिति छेदः । अयमर्थः- इष्टादिकारिणां कर्मिणाम् **अमृतत्वम्** 'अपाम सोमम्' इति श्रुत्या कर्मसाध्यत्वेनोक्तमामुष्मिक-सुखानुभवरूपममृतत्वं **भाक्तं** भागे एकदेशे किञ्चित्कालवर्ति वा, ज्ञानद्वारकं नित्यामृतत्वं वा, मोक्षेऽतिशयरूपं वा, स्यात् । न तु मुख्यसाक्षात्फलभूतं मोक्षरूपं स्यात् **इष्टादि-कारिणामनात्मवित्त्वात्** ब्रह्मज्ञानित्वाभावात् । **आत्मवित्त्वात्** ज्ञानित्वात् । केषाञ्चिदज्ञानित्वात्, केषाञ्चिज्ज्ञानित्वादिति यावत् । यतः श्रुतिः 'अमृतो वाव सोमपः, कर्मणा ज्ञानमातनोति, स एनमविदितः' इत्यादिश्रुतिः । **तथा** उक्तप्रकारेण दर्शयति- **अत इति** ॥ अयं भावः- कर्म द्विविधं काम्यमकाम्यं चेति । यदि काम्यं कर्म श्रुत्यर्थतया विवक्षितं तर्हि तस्यानित्यस्वर्गादिकमेव फलम् । 'अमृतो वाव सोमपो भवति' इत्यादिश्रुते[illegible] यदि ह वा अप्यनेवंविन्महत्पुण्यं कर्म करोति' इत्यादिश्रुतेश्च । न तु मोक्षः । 'नान्यः पन्था' इत्यादिश्रुतेः । यदि च अकाम्यं कर्म विवक्षितं जिज्ञासुश्चाधिकारी तर्हि तत्कर्मफलं ज्ञानमेव न तु मोक्षः 'कर्मणा ज्ञानमातनोति ज्ञानेनैवाऽमृतीभवति अथाऽमृतानि कर्माणि' इत्यादिश्रुतेः । यदि चाकाम्यं कर्म विवक्षितं ज्ञानी चाधिकारी तदा ज्ञानेन मोक्षस्य सिद्धत्वात् मोक्षेऽतिशय एव फलम् । 'आत्मानमेव लोकमुपासीत' इत्यादिश्रुतेः । एवं च कर्मणः साक्षात्फलं मोक्षो न भवतीति ॥

---

१. **अपामेति** ॥ (ऋ.८.४८.३) इष्टशेषं **सोममपाम** अपिबाम **अतोऽमृता मुक्ता** अभूमेत्यर्थः पूर्वपक्षे । सिद्धान्ते तु- यस्मात्सोमं सोमरसमपाम सोमादिकर्मणा चान्तःकरणशुद्धिद्वारा विष्ण्वादिदेवान् तारतम्येन विदाम व्यजिज्ञासिष्म । अतो ज्योतिः ब्रह्म अगन्म अद्राक्ष्म तस्मादमृता अभूमेत्यर्थः ॥

**'अपाम सोमममृता अभूम' (ऋ.८.४८.३)इत्यादिश्रुतिविरोध इत्यतो वक्ति–**

**भागतस्तदमृतत्वम् । 'नान्यः पन्था अयनाय विद्यते' (तै.आ.३.१३) इति श्रुतेरात्मविद एव हि मुख्यम् । वाशब्दात् पारम्पर्येणाऽत्मविदपेक्षया वा ।**

**तथाहि श्रुतिः –**

**स एनमविदितो न भुनक्ति यथा वेदो वाऽननूक्तोऽन्यद्वा कर्माकृतं यदि ह वा अप्यनेवंविन्महत्पुण्यं कर्म करोति तद्धास्यान्ततः क्षीयत एवाऽत्मानमेव लोकमुपासीत स य आत्मानमेव लोकमुपास्ते न हास्य कर्म क्षीयतेऽस्माद्ध्येवाऽत्मनो यद्यत्कामयते तत्तत्सृजते ।(बृ.उ. ३.४.१५)**

**'अमृतो वाव सोमपो भवति यावदिन्द्रो यावन्मनुर्यावदादित्यः ।' 'कर्मणा ज्ञानमातनोति ज्ञानेनामृतीभवति अथामृतानि कर्माणि यत एनममृतं नयन्ति' इति च ॥**

॥ इति भाक्ताधिकरणम् ॥

**भा.** सूत्रं व्याचक्षते- **भागत इति** ॥ भागे एकदेशे किञ्चित्काले इति यावत् । आद्यादित्वात् सप्तम्यन्तात्तसिः । वर्त्तीति शेषः । काम्यकर्मिणामिति भावः । ननु मुख्यामृतत्वमेव काम्यकर्मिविवक्षया श्रुत्यर्थः किं न स्यादित्यत आहुः- [1]**नान्यः पन्था इति** ॥ **मुख्यमिति** ॥ मुख्याऽमृतत्वमित्यर्थः । अथाऽकाम्यं कर्म श्रुत्यर्थतया विवक्षितं तदा जिज्ञासूनां ज्ञानिनां चाऽकाम्यं कर्म न साक्षान्मोक्षसाधनमित्याहुः- **वाशब्दादिति** ॥ **पारम्पर्येणेति** ॥ हेतौ तृतीया । परम्पराहेतुकं ज्ञानद्वारकं तदमृतत्वमित्यर्थः । **आत्मविदपेक्षयेति** ॥ अपेक्षेति 'गुरोश्च हल' इत्यप्रत्ययान्तं नित्यस्त्रीलिङ्गम् । अभेदस्तृतीयार्थः । आत्मना ज्ञानेन विदि लब्धे मोक्षे अपेक्ष्यमाणातिशयरूपं वा तदमृतत्वमित्यर्थः । **वेति** ॥ इति सूचितमिति शेषः । 'अपाम सोमम्' इति श्रुत्यर्थामृतत्वस्योक्तत्रैविध्ये श्रुतीरुदाहरन्ति- **तथा हीति** ॥ ज्ञानिन एव मुख्यामृतत्वे श्रुतिः- **स**

१. नान्यः पन्था इति ॥ व्या. (सं.१,पृ. ३९)

**एनमिति**[१] ॥ आत्मविदपेक्षयेत्यत्र श्रुतिः- **आत्मानमेवेति**[२] ॥ भामतस्तदमृतत्वमित्यत्र श्रुतिः- **अमृतो वावेति**[३] ॥ पारम्पर्येणेत्यत्र श्रुतिः- कर्मणेत्यादिः[४] ॥ ७ ॥ अ. ७ ॥

**॥ इति भाक्ताधिकरणम् ॥ ७ ॥**

---

१. स एनमिति ॥ (बृ.३.४.१५) 'यो हवा अस्माल्लोकात्स्वं लोकमदृष्ट्वा' इति पूर्ववाक्यम् । योऽग्निविप्रार्चकोऽधिकारी स्वं स्वदेहस्थितं लोकं परमात्मानमदृष्ट्वा अस्माल्लोकाद्देहात् प्रैति तमेनं स हरिः अविदितः तेनादृष्टः न भुनक्ति नामृतत्वं भोजयति न पालयति च । यथा अननूक्तः यथावदनधीतो वेदः एनं श्रोत्रियं न भुनक्ति ईश्वरः ज्ञानादिजननेन । अन्यद्वा निदर्शनं यथावा अकृतं यथावदननुष्ठितं कर्म न फलदं तथेति पूर्वेणान्वयः । यदा अनेवंवित् उक्तप्रकारेण परमात्माऽनपरोक्षज्ञानी महदपि पुण्यं पुण्यसाधनमश्वमेधादिकर्म करोति तदा अस्याज्ञानिनः तत्कर्म अन्ततः अन्ते स्वर्गादिभोगावसाने, स्वल्पफलदानान्ते वा, क्षीयते [illegible] हि निश्चितम् ।

२. **आत्मानमेवेति** ॥ तस्मान्मुमुक्षुः लोकं सर्वाश्रयं ज्ञानरूपं वा, आत्मानं विष्णुमुपासीत जानीयाच्च सः प्रसिद्धः यो जिज्ञासुः आत्मानं परमात्मानमुपास्ते तस्य कर्म अकाम्यं पुण्यं न क्षीयते अक्षयमोक्षातिशयाय भवति । मुक्तो यदि चाभीष्टं कामयते अस्मादेव आत्मनःसकाशात् तत्तत्सृजते उत्पादयति कर्मेत्यर्थः ।

३. **अमृतो वाव सोमप इति** ॥ सोमपः सोमयाजी अमृतो भवति अमुख्यामृतत्ववान् भवति । इन्द्रः स्वपदे यावत्कालमास्ते एवं मनुः सूर्यश्च तावदमृतो भवतीति पूर्वेणान्वयः ।

४. **कर्मणेति** ॥ अधिकारी अकाम्येन कर्मणा ज्ञानमातनोति उत्पादयति ज्ञानेनामृतो मुक्तो भवतीत्यर्थः । **अथेति** ॥ यतः कर्माणि एनं जिज्ञासुम् अमृतत्वं मोक्षं नयन्ति प्रापयन्ति अथ तस्मादमृतानीत्युच्यन्ते इत्यर्थः ॥ ७ ॥*) अ ७ ॥

## ८. कृतात्ययाधिकरणम्

**(कर्म अनुभवेन निश्शेषं न नश्यति)**

अत्र नये कर्मशेषाभावेन स्वत एव मोक्षसिद्धेरिति शङ्कान्तरपरिहारद्वारा वैराग्यावश्यकत्वसमर्थनम् । सङ्गत्यादिकं पूर्वनयवत् । पूर्वपक्षमाहुः- **कृतस्येति ॥ मुक्तिरिति ॥** ततश्च वैराग्यानुष्ठानं व्यर्थमिति भावः ॥

**कृतस्य कर्मणो भोगेन क्षयान्मुक्तिरित्यत आह–**

**॥ ॐ कृतात्ययेऽनुशयवान्दृष्टस्मृतिभ्याम् ॐ ॥ ८ ॥**

**दृष्टं** श्रुतिः । अयमर्थः- **कृतात्यये** कृतस्य कर्मणो भोगेन क्षये सति **अनुशयवान्** कर्मशेषवानेव **आयाति** । जीव इति शेषः । **दृष्टस्मृतिभ्यां** 'ततः शेषेण' इति श्रुतेः, 'भुक्तशेषेण' इति स्मृतेश्चेति ॥

**'ततः शेषेणेमं लोकमायाति पुनः कर्म कुरुते पुनर्गच्छति पुनरागच्छति' इति श्रुतेः–**

**'भुक्तशेषानुशयवानिमां प्राप्य भुवं पुनः ।**
**कर्म कृत्वा पुनर्गच्छेत्पुनरायाति नित्यशः ॥**
**आचतुर्दशमाद्वर्षात्कर्माणि नियमेन तु ।**
**दशावराणां देहानां कारणानि करोत्ययम् ।**
**अतः कर्मक्षयान्मुक्तिः कुत एव भविष्यति ॥' इत्यादिस्मृतेश्च शेषवानेवाऽयाति ।**

॥ इति कृतात्ययाधिकरणम् ॥

**भा.॥** श्रुतिस्मृत्युपन्यासेन सूत्रं व्याचक्षते- [1]**तत इत्यादिना ॥ शेषवानेवेति ॥** कर्मशेषवानेवेत्यर्थः । ततश्चात्यन्तिककर्मक्षयार्थं वैराग्याद्यावश्यकमेवेति भावः ॥ ८. अ. ८ ॥

॥ इति कृतात्ययाधिकरणम् ॥ ८ ॥

१. **तत इति ॥** कर्मीति शेषः ॥ **शेषेण** कर्मशेषेण तद्युक्त एव **इमं लोकं** भूलोकं प्रति **ततः** स्वर्गादेः सकाशादायाति । **पुनः** भूमौ **कर्म** कुरुते, **पुनर्गच्छति** स्वर्गादिकं, पुनरायाति भूमिमित्यर्थः। **भुक्तेति ॥ अनुशयः** कर्म । पुनर्गच्छेत्स्वर्गादिकमिति शेषः । आयाति भुवं, **नित्यशः** सदा, **आचतुर्दशमात्** चतुर्दशमात् वर्षादारभ्य **अयं** बद्धजीवः **नियमेन** तु नियमेनैव **दशावराणां** दशैव देहा अवराः न्यूनसङ्ख्याका येषां तेषां नवत्वसङ्ख्योपरितनसङ्ख्याकानामिति यावदित्यर्थः । शिष्टं स्पष्टम् ॥ ८ ॥ अ.८ ॥

## ९. यथेताधिकरणम्

**(स्वर्गादिकं प्रति येन पथा गमनं तेनैवागमनं न)**

**अत्र नये स्वर्गगमनक्रमभिन्नक्रमेण आगतिप्रकारनिरूपणम् । अन्यथा मार्गे क्लेशाभावेन तत्र वैराग्यं न स्यादिति (जिज्ञासानयेन) सङ्गतिः, स्वर्गादागमनं विषयः, गतिक्रमेण अन्यथा वेति संशयः, लोके उभयथापि दर्शनं तद्बीजम्, गतिक्रमेणेति पूर्वपक्षः ॥ पूर्वपक्षे श्रुतिमाहुः- '[1]यथेतमिति ॥ (आगतिरिति) तथा च गमनागमनयोरेकमार्गत्वान्न क्लेश इति भावः ॥**

**'यथेतमेव गच्छति यथेतमागच्छति स भुङ्क्ते स कर्म कुरुते परिवर्तते स प्रतिवर्तते ।' इति गतिप्रकारेणागतिः प्रतीयते । अतो ब्रूते-**

**॥ ॐ यथेतमनेवं च ॐ ॥ ९ ॥**

**इतमिति करणे क्तः । इतं मार्गः । यथेतमित्यव्ययीभावः । जीवः, आयाति, श्रुतिः, तथा हि, दर्शयति, इति वर्तते । अयमर्थः-जीवः यथेतं स्वर्गं प्रति गमनमार्गमनतिक्रम्य अनेवं च अतिक्रम्य च आयाति । हि यतः श्रुतिः 'धूमादभ्रम्' इति श्रुतिः तथा उभयथा च दर्शयत्यत इति ॥ एवं चाकाशपर्यन्तं गतमार्गेणागच्छति ततो मार्गान्तरेण भुवमागच्छतीत्यङ्गीकारेण 'यथेतमागच्छति' इति श्रुतिविरोधो नेति भावः ॥**

**'धूमादभ्रमभ्रादाकाशमाकाशाच्चन्द्रलोकं यथेतमाकाशमाकाशाद्वायुं वायुर्भूत्वा धूमो भवति धूमो भूत्वाऽभ्रं भवत्यभ्रं भूत्वा मेघो भवति मेघो भूत्वा प्रवर्षति' इति काषायण-श्रुतेर्यथागतमन्यथा च ।**

॥ इति यथेताधिकरणम् ॥

भा.॥ सूत्रोपात्तश्रुतिमाहुः- '[2]**धूमादिति ॥ अन्यथा चेति** ॥ आयातीति वर्तते । ९. अ. ९ ॥

॥ इति यथेताधिकरणम् ॥ ९ ॥

---

१. **यथेतमिति ॥ यथा** येन मार्गेण स्वर्गादिमं लोकं प्रति स्वेन **इतम्** आगतं, तथा तेन स्वर्गं प्रति गच्छति । यथा अस्माल्लोकात्स्वर्गमितः गतः तथा भुवमागच्छति । भुङ्क्ते कर्मफलं परिवर्तत इत्यर्थः । स्पष्टमन्यत् ।

२. **धूमादभ्रमिति ॥ धूमात्** धूमदेवतालोकात् **अभ्रम्** अभ्रदेवतालोकं गच्छति, **अभ्रादाकाशम् आकाशाच्चन्द्रलोकं** गच्छति, **यथा** येनपथा **इतम्** आकाशात्स्वर्गं प्रति गतं **तथा** तेनैव पथा, आकाशमित्यत्राङः प्रश्लेषः, तावत्पर्यन्तं गतिप्रकारेणैवागच्छति । आकाशलोकादनन्तरमागमने प्रदेशविशेषे अन्यथात्वमाह- **आकाशाद्वायुमिति ॥** अभ्रमेघयोरवान्तरविशेषोऽस्ति प्रवर्षति प्रवर्षणान्तर्गतो भवतीत्यर्थः । स्पष्टमन्यत् ॥ ९ ॥ अ.९ ॥

## १०. चरणाधिकरणम्

**(जीवस्य गमनागमने कर्मणैव न आचारमात्रेण)**

अत्र नये गतागतस्य कर्मफलत्वसमर्थनम् । अन्यथा गतागतस्याचारजन्यत्वेन कर्मणाऽपुनरावृत्तिस्वर्गसिद्धिरिति (जिज्ञासानयेन) आक्षेपिकी सङ्गतिः । गतागतं विषयः । यज्ञादिकर्मजन्यमाचारजन्यं वेति संशयः । द्वयोः सहभावस्तद्बीजम् । आचारजन्यमिति पूर्वपक्षः ॥

**॥ ॐ चरणादिति चेन्न तदुपलक्षणार्थेति कार्ष्णाजिनिः ॐ ॥ १० ॥**

इतम्, च, तु, हि, श्रुतिः, इति वर्तते । **तत्** चरणमुपलक्षणं यस्य स तदुपलक्षणः सोऽर्थो यस्याः सा तदुपलक्षणार्था । अजहल्लक्षणया चरणकर्मोभयपरेति यावत् । श्रुतिशब्दस्यावृत्तिविपरिणामौ । अयमर्थः- इतं गमनं चादागतं **चरणात्** तु कर्माङ्गाचारहेतुकमेव न तु कर्महेतुकं श्रुतेः 'रमणीयचरणा' इति श्रुतेरिति चेन्न । हि यतः श्रुतिः उक्तश्रुतिः तदुपलक्षणार्था इति कार्ष्णाजिनिर्मन्यतेऽत इति ॥

**'तद्य इह रमणीयचरणा रमणीयां योनिमापद्यन्ते कपूयचरणाः कपूयाम्'** (छां.उ. ५.१०.७) **इति श्रुतेश्चरणफलमेव गमनागमनं न यज्ञादिकृतः ।**

**'आचार इति सम्प्रोक्तः कर्माङ्गत्वेन शुद्धिदः ।**
**अशुद्धिदस्त्वनाचारश्चरणं तूभयं मतम् ॥' इति स्मृतेरिति चेन्न ।**

**यज्ञाद्युपलक्षणार्था चरणादिश्रुतिरिति कार्ष्णाजिनिर्मन्यते ।**

भा.॥ पूर्वपक्षे श्रुति(मुदाहृत्य सूत्रं व्याचक्षते)- [1]**तद्य इहेति** ॥ स्मृत्या चरणशब्दस्याऽर्थमाहुः-

---

१. **तद्य इति** ॥ (छा.५.१०.७) 'रमणीयचरणा' इत्यनन्तरम् 'अभ्याशो ह यत्ते' इति वाक्यमस्ति एवं कपूयचरणा इत्यनन्तरमपि । यद्यपि श्रुतौ आपद्येरन्निति पठ्यते तथापि तदर्थानुवादः आपद्यन्ते इत्यदोषः । तत् तत्र कर्मिषु मध्ये **ये रमणीयचरणाः** सदाचारपूर्वकसाधुयज्ञादिमन्तः ते **इह** भूमौ संसारे **रमणीयां** साध्वीं **योनिं** ब्राह्मणादिजन्म आपद्येरन् प्राप्नुवन्तीति यत् तत् **अभ्याशः** समीपकाले एव न तु विलम्बकाले, यद्वा रमणीयचरणा अभ्याश एव रमणीयां योनिमापद्येरन्नित्यन्वयः । कपूयचरणाः असाधुयज्ञादिमन्तः कपूयां योनिं श्वादिजन्मेत्यर्थः । अन्यत्समम् ।

[1] **आचार इतीति ॥ स्मृतेरिति ॥** आचाराऽनाचारोभयं चरणपदार्थ इति शेषः । **यज्ञाद्युप-लक्षणार्थेति ॥** यज्ञादीनामुपलक्षणमुपलक्षकोऽर्थो यस्याः सेति विग्रहः । **मन्यत इति ॥** यतो मन्यते अत इति नेन्नेत्यन्वयः ॥ १० ॥

**उक्तमाक्षिप्य समाधानाय सूत्रम्-**

## ॥ ॐ आनर्थक्यमिति चेन्न तदपेक्षत्वात् ॐ ॥ ११ ॥

**चरणादिति वर्तते । यथायथमावृत्तिविपरिणामौ । (तदिति लुप्तषष्ठ्यन्तं पृथक् पदं च) अयमर्थः- आनर्थक्यम् इति चेत् चरणशब्दस्य यज्ञाद्युपलक्ष(क)त्वं चेत् चरणस्य श्रुतिस्थचरणशब्दस्य आनर्थक्यं वैयर्थ्यम् इति चेत् न । तस्य रमणीयत्वादेः तदपेक्षत्वात् चरणापेक्षत्वादिति ॥ रमणीयाः कपूया इत्येतावतै(वालं) रमणीयादिपदेन लक्षणया रमणीययज्ञादिकर्तृग्रहणसम्भवादिति पूर्वपक्षी । सिद्धान्ती तु- यागादौ रमणीयत्वादिकमाचारकृतमिति ज्ञापयितुं श्रुतौ चरणशब्दग्रहणमिति मन्यते ॥**

**तर्हि रमणीयाः कपूया इत्येव स्यात् । चरणशब्दस्यानर्थक्यमिति चेन्न । चरणापेक्षत्वाद्रमणीयत्वादेस्तज्ज्ञापानार्थत्वेनोपपत्तेः ॥**

**भा.॥** सूत्रं व्याचक्षते- **तर्हीति ॥** चरणशब्दस्य लाक्षणिकत्वे स्वीकृते इत्यर्थः । **तज्ज्ञापनार्थत्वेन-** कर्मनिष्ठरमणीयत्वादिकं चरणापेक्षमिति ज्ञापनार्थत्वेन । **उपपत्तेः-** चरणशब्दोपपत्तेरित्यर्थः ॥११॥

**प्रकारान्तरेण चरणशब्दप्रयोजनकथनाय सूत्रम्-**

## ॥ ॐ सुकृतदुष्कृते एवेति तु बादरिः ॐ ॥ १२ ॥

**चरणादित्यनुवर्त्य विपरिणम्यते । इति हेतौ च । अयमर्थः- सुकृतदुष्कृते एव साध्वसाधुकर्मणी एव चरणे चरणशब्दवाच्ये इति धर्मं कुरुते इत्यर्थे चरत इति प्रयोगाद्धेतोः इति बादरिर्मन्यत इति ॥ तुशब्देन स्वसिद्धान्तोऽपि स एवेति सूचयति सूत्रकार इति ॥**

**'धर्मं चरत माऽधर्मम्' इत्यादिप्रयोगात् सुकृतदुष्कृते एव चरणशब्दोक्ते इति बादरिर्मन्यते ।**

---

१. **आचार इति ॥** यः कर्माङ्गत्वेन प्रोक्तः स आचार इति प्रोक्तः । स शुद्धिदः क्रियाद्रव्यतत्कर्तृशुद्धिदः । अनाचारस्तु अशुद्धिदः । उभयं तु आचारानाचाररूपमुभयमपि चरणं चरणशब्दवाच्यं मतमित्यर्थः ॥१०-११॥

**तुशब्दात् स्वसिद्धान्तोऽपि स एवेति सूचयति । 'तुशब्दस्तु विशेषे स्यात् स्वसिद्धान्तेऽवधारणे' इति च नाममहोदधौ ॥**

॥ इति चरणाधिकरणम् ॥

भा.॥ (सूत्रार्थमाहुः- **धर्ममिति** ॥) तुशब्दस्योक्तार्थे मानमाहुः- [1]**तुशब्दस्त्विति** ॥ **नाममहोदधाविति** ॥ इत्युक्तार्थकादिति शेषः । उदधावित्युक्तार्थकात्तुशब्दादित्यन्वयः ॥ १२ ॥ अ. १० ॥

॥ इति चरणाधिकरणम् ॥

१. **तुशब्द इति** ॥ स्पष्टम् ॥ १२ ॥ अ.१०

## ११. अनिष्टादिकार्यधिकरणम्

**(पापकर्मकृतामपि गमनागमने)**

अत्र नयेऽनिष्टादिकारिणामपि गतागतादिदुःखसमर्थनम् । अन्यथा पापकृतां गतागतं नेति पापे वैराग्यं न स्यादिति पूर्वनयवत् सङ्गतिः । गतागतं विषयः । इष्टादिकारिणामेव वा, सर्वाज्ञानिनां वेति संशयः। विशेषोक्तिः अज्ञानित्वं च तद्बीजम् । इष्टादिकारिणामेवेति पूर्वपक्षः ॥ पूर्वपक्षयन्ति- **पुण्येति ॥**

**पुण्यकृतामेव गमनागमने नेतरेषामित्यत आह—**

**॥ ॐ अनिष्टादिकारिणामपि च श्रुतम् ॐ ॥ १३ ॥**

इतमागतमिति वर्तते । अयमर्थः- **अनिष्टादिकारिणामपि** इष्टापूर्ताद्यकर्तॄणामपि इष्टापूर्तादि-विरुद्धकर्मकर्तॄणामपि **इतमागतं च श्रुतं** 'तद्य इह' इति भाल्लवेयश्रुतावुक्तमिति । चो वक्ष्यमाणदुःखस्य समुच्चये । तस्य सूत्रार्थे नान्तर्भावः उत्तरसूत्रविषयत्वात् ॥

**तद्य इह [1]शुभकृतो ये वाऽशुभकृतस्तेऽशुभमनुभूयाऽवर्तन्ते पुनः कर्म कुर्वन्ति पुनर्गच्छन्ति पुनरागच्छन्तीति भाल्लवेयश्रुतौ ॥**

भा.॥ श्रुतशब्दबोधितश्रुतिमाहुः- [2]**तद्य इहेति** ॥ **श्रुताविति** ॥ अस्य सौत्रश्रुतमित्यत्राऽन्वयः ॥१३॥

अनिष्टादिकारिणां दुःखं चाऽस्मीाते प्रतिपादनाय सूत्रम्-

**॥ ॐ संयमने त्वनुभूयेतरेषामारोहावरोहौ तद्गतिदर्शनात् ॐ ॥ १४ ॥**

अनिष्टादिकारिणामिति वर्तते । तुरेवार्थे । इतरशब्दो नीचार्थकः । 'इतरस्त्वन्यनीचयोः' इति कोशात् । यथायथमावृत्तिविपरिणामौ । अयमर्थः- **संयमनं** यमशासनम् **अनुभूय तु** अनुभूयैव अनिष्टादिकारिणाम् इष्टापूर्ताद्यकर्तॄणाम् इतरेषां नीचानां तमोयोग्यानामिति यावत् । संयमनात् **आरोहावरोहौ** यथाक्रमं नरकाद्व्युत्थानम् अवरोहो नित्यनरके पतनं भवतः । **तद्गतिदर्शनात्**

---

१. 'शुभाकृतः' इत्यपि पाठोऽस्ति ।

२. **तद्य इहेति** ॥ **इह** भूमौ ये **शुभकृतः** पुण्यकर्मकारिणः ये **चाऽशुभकृतः** पापकर्मकारिणः ते लोकान्तरे शुभफलमशुभफलं चाऽनुभूय आवर्तन्ते इत्यर्थः । स्पष्टमन्यत् ॥ १३ ॥

तेषामुक्तचेतनानां गतिदर्शनात् आरोहावरोहबोधक'सर्वे वाव एते' इति श्रुतेरिति ॥ अनिष्टादिकारिणामित्यनुवृत्त्या सिद्धे इतरेषां ग्रहणेन यथासङ्ख्यबोधनद्वारा आरोहावरोहयोर्भिन्नविषयता सिद्धा ॥

**संयमनमनुभूय केषाञ्चिदारोहः केषाञ्चिदवरोहः । तुशब्दोऽवधारणे । 'सर्वे वा एतेऽशुभकृतः संयमने प्रपतन्ति तत्र ये परद्विषो गुरुद्विषः श्रुतिद्विषस्तदवमन्तारः शठा मूर्खा इति ते वै ततोऽवरुह्य तमसि प्रपतन्ति नैवैत उत्तिष्ठन्तेऽपि कर्हिचिद्वव्रं वा एतदित्याहुरथ येऽन्ये ब्रह्मद्विषः स्तेनाः सुरापा इति ते वै तदनुभूयेमं लोकमनुव्रजन्तीति कौण्ठरव्यश्रुतेः ॥**

भा.॥ सूत्रं व्याचक्षते- **संयमनमिति** ॥ किं तद्दर्शनमित्यत आहुः- [1]**सर्वे वा इति** ॥ १४ ॥

स्मृत्याऽप्युक्तार्थसमर्थनाय सूत्रम्-

**॥ ॐ स्मरन्ति च ॐ ॥ १५ ॥ (इति)**

च इत्यर्थे, समुच्चये च । अयमर्थः- च पूर्वोक्तप्रकारेण **स्मरन्ति च** 'गच्छन्ति पापिनः सर्वे' इत्यादिस्मृतिभिः बोधयन्ति च स्मर्तार इति ॥ स्मरन्तीति बहुवचनं तु स्मृतिबाहुल्यात् ॥

**'गच्छन्ति पापिनः सर्वे नरकं नात्र संशयः ।**
**तत्र भुक्त्वा पतन्त्येव ये द्विषन्ति जनार्दनम् ॥**
**महातमसि मग्नानां न तेषामुत्थितिः क्वचित् ।**
**इतरेषां तु पापानां व्युत्थानं विद्यतेऽपि च ॥**

---

१. **सर्वे इति** ॥ **संयमने** नरके तत्र अशुभकृन्मध्ये **परद्विषः** विष्णुद्विषः 'जीवाभेदो निर्गुणत्वम्' इत्याद्युक्तनवविधद्वेषवन्तः **गुरुद्विषः** जगद्गुरुप्रधानवायुद्विषः स्वगुरुद्विषो वा **श्रुतिद्विषः** तदप्रामाण्यवादिनः तदवमन्तारः हरिगुरुश्रुत्यवमन्तारः तन्नीचत्वादिप्रतिपादनशीलाः **शठाः** गूढद्वेषिणः **मूर्खाः** तत्त्वज्ञानहीनाः विपरीतज्ञानवन्तश्च इति ये प्रसिद्धाः ते **ततः** संयमनीपुरात् **अवरुह्य** ततोऽपि नीचस्थाने इति शेषः । **वव्रं** पुनरावृत्तिशून्यम् आनन्दनिवारकं वा एतत् तम आहुः- **अन्ये** परद्वेषादिमद्भ्योऽन्ये **ब्रह्मद्विषो** ब्राह्मणद्वेषिणः **स्तेनाः** चोराः **सुरापा** मद्यपायिनः इति ये प्रसिद्धाः, ते तदनुभूयैव इमं लोकं भूलोकमित्यर्थः ॥ स्पष्टमन्यत् ॥ १४ ॥

**सुखस्यानन्तरं दुःखं दुःखस्यानन्तरं सुखम् ।**
**इति सर्वत्र नियमः पञ्चकष्टे तु तत्सदा ॥' इत्यादि ॥**

**॥ इत्यनिष्टादिकार्यधिकरणम् ॥ ११ ॥**

**भा.॥** स्मृतिमाहुः- '[1]**गच्छन्तीति ॥ इत्यादीति ॥** अस्य सौत्रस्मरन्तिपदार्थैकदेशस्मृतावन्वयः । सूत्रस्य यतः स्मरन्ति अतः '**केषाञ्चिदारोह**' इति पूर्वभाष्येऽन्वयः ॥ १५ ॥ अ. ११ ॥

**॥ इत्यनिष्टादिकार्यधिकरणम् ॥ ११ ॥**

---

१. **गच्छन्तीति** ॥ तत्र पापिषु मध्ये ये जनार्दनं द्विषन्ति ते तत्र नरके किञ्चित्फलं भुक्त्वा महानममि पतन्ति । **महातमसि मग्नानाम् इतरेषां** परद्वेषादिहीनानां पापानां ब्राह्मणद्वेषादिपापवतां सर्वत्र अनित्यनरकादिषु **पञ्चकष्टे** पञ्चभ्यो रौरवादिभ्यः कष्टे पञ्चेन्द्रियाणि प्रतिकष्टे वा एतादृशे नित्यनरके तु तत् दुःखं सदाऽस्तीत्यर्थः । स्पष्टमन्यत् ॥ १५ ॥ अ. ११ ॥

## १२. अपिसप्ताधिकरणम्

**(नरकाणि सप्त)**

अत्र नये नित्यनरकसमर्थनम् । अन्यथा पूर्वोक्तनित्यनरकप्राप्तिर्न सम्भवतीत्याक्षेपकी सङ्गतिः पूर्वनयेन । (११) नरको विषयः, नित्यफलको न वेति सन्देहः, पूर्वोक्तिः लोकदृष्टिश्च तद्बीजम् । नेति पूर्वपक्षः, तथा च नित्यनरके वैराग्यं न स्यादिति ॥

**॥ ॐ अपि सप्त ॐ ॥ १६ ॥**

**अपिपदेन संयमने स्मरन्तीति** वर्तते । संयमनानीति विपरिणम्यते । अयमर्थः- **सप्त** संयमनानि नरकात् स्मरन्ति 'रौरवोऽथ' इति स्मृत्या बोधयन्ति स्मर्तार इति ॥

**रौरवोऽथ महांश्चैव वह्निर्वैतरणी तथा ।**
**कुम्भीपाक इति प्रोक्तान्यनित्यनरकाणि तु ॥**
**तामिस्रश्चान्धतामिस्रौ द्वौ नित्यौ सम्प्रकीर्तितौ ।**
**इति सप्त प्रधानानि बलीयस्तूत्तरोत्तरम् ।**
**एतानि क्रमशो गत्वैवाऽरोहोऽथावरोहणम्' ॥ इति च भारते ॥ १६ ॥**

॥ इति अपिसप्ताधिकरणम् ॥ १२ ॥

भा.॥ स्मृतिमाहुः- **'रौरवोऽथेति ॥ भारत इति ॥** सानुवृत्तसूत्रेऽन्वयः भारते इति सप्त स्मरन्तीति ॥ १६ ॥ अ. १२ ॥

॥ इति अपिसप्ताधिकरणम् ॥ १२ ॥

---

१. **रौरव इति ॥ बलीयः** दुःखाधिक्यवत् **क्रमशः** पापक्रमानुरोधात् **आरोहः** केषाञ्चित् अवरोहोऽन्येषाम् । अधिकारिभेदादित्यर्थः । स्पष्टमन्यत् ॥ १६ ॥ अ.१२ ॥

## १३. तद्व्यापाराधिकरणम्

(नरके वसन्नपीशः न दुःखभाक्)

**ईश्वरस्य नरकायुक्तेः 'सर्वं विसृजति सर्वं विलापयति सर्वं रमयति सर्वं न रमयति सर्वं प्रवर्तयत्यन्तरस्मिन्निविष्टः' इति कौषारवश्रुतिविरोध इत्यतो वक्ति–**

अत्र नये नरकस्य सदुःखत्वसमर्थनम्। नरकस्य निर्दुःखत्वे पूर्वोक्तमयुक्तमिति (पूर्वनयेन १२) सङ्गतिः। नरको विषयः, सदुःखो न वेति सन्देहः, द्विविधस्थानदर्शनं तद्बीजम्, नेति पूर्वपक्षः ॥ पूर्वपक्षयन्ति- **ईश्वरस्येति** ॥ सर्वैश्वर्यवतः परमात्मन इत्यर्थः। नरकस्य सदुःखत्वम् इति शेषः। **नरकाऽयुक्तेरिति** ॥ नरकदुःखायोगाद्धेतोः नरकस्थानसम्बन्धायोगादित्यर्थः। ईश्वरेति हेतुगर्भम्। तेन 'परमात्मा नरकाऽनुभवशून्य ईश्वरत्वात् व्यतिरेकेण चैत्रवत्' इत्यनुमानं सिद्धम्। ततः किमित्यत आहुः- [1]**सर्वमिति** ॥ **विरोध इति** ॥ उक्तव्याप्तिपरश्रुतेरप्रामाण्यं स्यादित्यर्थः। ततश्च नरकस्य सदुःखत्वं त्याज्यमिति भावः ॥

**॥ ॐ तत्राऽपि च तद्व्यापारादविरोधः ॐ ॥ १७ ॥**

**चो** दुःखाननुभवसमुच्चये। अयमर्थः- **तत्राऽपि** नरकेऽपि **तद्व्यापाराच्च** दुःखानुभवं विनैव 'स स्वर्ग' इत्यादिश्रुत्या ईश्वरव्यापारबोधनात् **अविरोधः** 'सर्वं सृजति' इति श्रुतीश्वरत्वयुक्तिविरोधेनेति ॥

**चशब्दाददुःखानुभवेन। 'स स्वर्गे स भूमौ स नरके सोऽन्धे तमसि प्रवृत्तिकृदेक एवानुविष्टो नासौ दुःखभुगीश्वरः प्रभुत्वात् सर्वं पश्यति सर्वं कारयति नासौ दुःखभुग्य एवं वेद' इति पौत्रायणश्रुतेरविरोधः ॥**

**'नरकेऽपि वसन्नीशो नासौ दुःखभुगुच्यते।**
**नीचोच्चतैव दुःखादेर्भोग इत्यभिधीयते।**
**नासौ नीचोच्चतां याति पश्यत्येव प्रभुत्वतः ॥' इति भागवततन्त्रे ॥ १७ ॥**

॥ इति तद्व्यापाराधिकरणम् ॥

---

१. सर्वमिति ॥ रमयति तद्योग्यं, नरमयति तद्योग्यं, सर्वमित्यर्थः। अन्यत् स्पष्टम् ॥

भा. सौत्रचशब्दकृत्यमाहुः- **चशब्दादिति ॥ अनुभवेनेति ॥** इति समुच्चिनोतीति शेषः । नरके वास्तव्येशस्य दुःखाभावे मानमाहुः- [1]**स स्वर्गे इति ॥** अत्र स्मृतिं चाहुः- [2]**नरकेऽपीति ॥ भागवततन्त्र इति ॥** तत्रेत्युक्तेरविरोध इति सम्बन्धः ।

ननु श्रुतावीश्वरस्य दुःखविषयकज्ञानसत्त्वेऽपि तत्प्रयुक्तनीचत्वाऽभावान्न दुःखित्वमित्युक्तम् । तथा सति अणोर्जीवस्य मुक्तावपि महत्त्वरूपोच्चत्वायोगात् सुखित्वं न स्यात् । एवं तमोयोग्यानां तमसि दुःखित्वं न स्यादल्पत्वायोगादिति चेन्न । 'अल्पं तेजस्तथैवाल्पं जीवरूपं हि संसृतौ । तदेव सुमहत्तेजः करोति मघवान् महत्' इति पाष्ठबृहद्भाष्योक्तदिशा अल्पजीवस्वरूपेऽपि ईशशक्त्या महत्त्वसम्भवात् । न चैवं **'भोगमात्रसाम्यलिङ्गाच्च'** (४.४.२२) इति सूत्रेण मुक्तस्य वृद्धिह्रासनिषेधात् कथमेतदिति वाच्यम् । तत्राऽनन्दादिवृद्धिह्रासनिषेधेऽपि आनन्दादिप्रयुक्तस्वरूपमहत्त्वस्य निषेधाभावादेवमयोग्यानां स्वरूपेऽपि दुःखेन नीचत्वं सम्भवत्येव ॥

ननु 'दुःखे तु सुखमानिनः' इत्युक्तदिशा अन्धे तमसि मग्नानामहं सुखीत्येव ज्ञानसत्त्वेन नीचत्वाप्रसक्त्या दुःखित्वं न स्यादिति चेन्न । यथाऽमृतबुद्ध्या विषभक्षणेऽपि विषप्रयुक्तमेव कार्यं जायते नत्वमृतप्रयुक्तम् । तथा दुःखे सुखबुद्धावपि दुःखप्रयुक्तनीचतैव जायते इत्यदोषात् । केचित्तु दुःखित्वं च दुःखविशिष्टत्वं वैशिष्ट्यं च स्वसमानाधिकरणस्वविषयकसाक्षिज्ञानवत्त्वसम्बन्धेन अत ईश्वरस्य दुःखित्वं नेत्याहुः । तन्न । स्वाधिकरणत्वं स्वरूपस्वोपादानान्तःकरणवत्त्वान्यतरसम्बन्धेनेति चेत् अन्तःकरणवत्त्वं संयोगेनेति वक्तव्यम् । तथा चेश्वरस्य दुःखित्वमपरिहृतम्, स्वामितासम्बन्धेनेति चेदपि उक्तदोषाऽपरिहार एव जीवीयान्तःकरणसंयोगस्वामित्वयोरीश्वरेऽपि सत्त्वात् परतन्त्रसंयोगेनान्तःकरणवत्त्वविवक्षणे तु श्रीतत्वे दुःखितत्वापत्तिरिति ॥ तस्मात् भाष्योक्तमेवादरणीयम् ॥ १७ ॥ अ. १६ ॥

॥ इति तद्व्यापाराधिकरणम् (तत्राप्यधिकरणम्) ॥ १३ ॥

---

१. **स स्वर्ग इति ॥** स ईश्वरः प्रवृत्तिकृत् प्रवर्तकः, एवं ज्ञातुः फलमाह– **नासाविति ॥** असौ एवं ज्ञातेत्यर्थः। स्पष्टमन्यत् ।

२. **नरके इति ॥** नीचोच्चतैव तूलपिण्डस्येव स्वरूपसङ्कोचविकासावेव दुःखादेर्भोग इत्युच्यते न तु तत्साक्षात्कारमात्रमित्यर्थः । त्रयोदशे गीतातात्पर्ये तु– 'तद्गतानां तु दुःखानां भोगोऽभिमतिरुच्यते । तदभावान्नाभिमानी भगवान् पुरुषोत्तमः' इति प्रकारान्तरमुक्तम् । स्पष्टमन्यत् ॥ १७ ॥ अ.१३ ॥

# १४. विद्याकर्माधिकरणम्

## (देवयानपितृयानमार्गे जीवानां न गतिस्वातन्त्र्यम्)

अत्र नये जीवानां गतिस्वातन्त्र्यनिरसनम् । गतिस्वातन्त्र्ये इच्छया तत्परित्यागसम्भव इति (जिज्ञासानयेन १.१.१) सङ्गतिः । प्रकृतपितृयानः तदुपस्थापितदेवयानश्च विषयः । स्वातन्त्र्येण गम्यो न वेति संशयः । लोके मार्गद्वयदर्शनमलौकिकत्वं च तद्बीजम् । स्वातन्त्र्येणेति पूर्वपक्षः ॥ पूर्वपक्षे श्रुतिमाहुः- '**अथैतयोरिति** ॥ **स्वातन्त्र्यमिति** ॥ ईश्वरदत्तस्वातन्त्र्यमिति टीका ॥

**'अथैतयोः पथोर्न कतरेण च न तानीमानि क्षुद्रमिश्राण्यसकृदावृत्तीनि भूतानि भवन्ति जायस्व म्रियस्वेत्येतत्तृतीयं स्थानम्' (छां.उ.५.१०.८) इति गतिस्वातन्त्र्यं भूतानां प्रतीयत इत्यत आह–**

## ॥ ॐ विद्याकर्मणोरिति तु प्रकृतत्वात् ॐ ॥ १८ ॥

तुरेवार्थे, अप्यर्थे च । अर्थात् श्रुतावेतयोरित्यस्यार्थ इति लभ्यते । यथायथमावृत्तिः । अयमर्थः- **श्रुतौ 'अथैतयोः'** इति श्रुतौ । एतयोः पथोरित्यस्य विद्याकर्मणोरिति तु इत्यर्थः इत्येवार्थः न तु देवयानपितृयान(ण)योरिति । **विद्याकर्मणोस्तु** ज्ञानकर्ममार्गयोरपि प्रकृतत्वात् 'तद्य इत्थं विदुस्तेऽर्चिषमभिसम्भवन्ति' इति 'इष्टापूर्ते दत्तमित्युपासते ते धूममभिसम्भवन्ति' इति श्रुतिभ्यां पूर्वं (छा. ५.१०) प्रक्रान्तत्वादिति ॥ एवं च पुरुषप्रयत्नाविषयसाध्यभूतदेवयानपितृयान(ण)योर्विषये प्रमाणाऽभावेन स्वातन्त्र्याभावेऽपि साधनभूतविद्याकर्मविषये स्वातन्त्र्यमस्ति प्रमाणसत्त्वात् पुरुषप्रयत्नसाध्यत्वाच्च । अन्यथा साधनविधानं व्यर्थं स्यादिति भावः ॥

---

१. **अथैतयोरिति** ॥ (छा.५.१०.८) **एतयोः पथोः** पूर्वप्रकृतयोः ज्ञानिकर्मिप्राप्ययोः अर्चिरादिधूमादि-मार्गयोर्मध्ये, सिद्धान्तरीत्या ज्ञानकर्मणोर्मध्ये वा, **कतरेण च** अन्यतरेणापि पथा यानि न गच्छन्ति **तानीमानि क्षुद्रमिश्राणि** क्षुद्राण्यल्पानि सुखदुःखमिश्राणि च असकृदावृत्तीनि सदागतिमन्ति भवन्ति जायस्व म्रियस्व पुनः पुनः जायन्ते म्रियन्ते चेत्येतत् इत्येवंरूपं स्वर्गापवर्गयोरन्यत् तृतीयं स्थानं प्राणिनामावासस्थलमित्यर्थः । जायस्व म्रियस्वेत्यत्र 'क्रियासमभिहारे लोट्लोटोहिस्वौ' इति स्वादेशः न तु युष्मच्छब्दसामानाधिकरण्य-प्रयुक्तमध्यमपुरुषः । क्रियासमभिहारः पौनःपुन्यमिति ज्ञेयम् ॥

**विद्याकर्मापेक्षयैतद्वचनम् । तयोरपि प्रकृतत्वात् ।**

**'विद्यापथः कर्मपथो द्वौ पन्थानौ प्रकीर्तितौ ।**

**तद्वर्जितस्त्रिधा याति तिर्यग्वा नरकं तमः' ॥ इति च भारते ।**

**॥ इति विद्याकर्माधिकरणम् ॥ १४ ॥**

**भा.॥ तद्वचनमिति ॥** अथैतयोरिति वचनमित्यर्थः । **तयोरपि**- विद्याकर्मणोरपि । चतुर्णां प्रकृतत्वेऽपि विद्याकर्मणोरेव ग्रहणे स्मृतिसमाख्यामाहुः- [१]**विद्यापथ इति ॥ भारत इति ॥** भारते इत्युक्तेश्च विद्याकर्मापेक्षयैतद्वचनमित्यन्वयः ॥ १८ ॥ अ. १४ ॥

**॥ इति विद्याकर्माधिकरणम् ॥ १४ ॥**

१. **विद्यापथ इति ॥** विद्योपायेन प्राप्यो मार्गोऽर्चिरादिः विद्यापथः । कर्मयोगेन प्राप्यो मार्गो धूमादिः कर्मपथः । तद्वर्जितः ताभ्यामुक्तमार्गाभ्यां रहितः तिर्यक् तिर्यग्योनिमित्यर्थः । स्पष्टमन्यत् ॥ १८ ॥ अ.१४ ॥

## १५. नतृतीयाधिकरणम्

(तमसि सुखलेशोऽपि नास्ति)

अत्रनयेऽन्धन्तमसः दुःखमात्रतासमर्थनम् । अन्धंतमसे सुखसत्त्वे तत्रातिवैराग्यं न स्यादिति (जिज्ञासानयेन) सङ्गतिः । अन्धन्तमो विषयः । ससुखं नवेति सन्देहः । लोकदृष्टिः अलौकिकत्वं च तद्बीजम् । ससुखमिति पूर्वपक्षः ॥ पूर्वपक्षमाहुः- [1]यत्रेति ॥

**'यत्र दुःखं सुखं तत्र सर्वत्रापि प्रतीयते ।**
**अपि नीचगतौ किञ्चित्किमु मानुषदेहिनः ॥'**

**इति वचनान्महातमस्यपि सुखप्राप्तिरित्यत आह—**

**॥ ॐ न तृतीये तथोपलब्धेः ॐ ॥ १९ ॥**

सुखमिति शेषः । अयमर्थः- **तृतीये** 'तिर्यग्यातना तमः' इति श्रुत्युक्तेऽवाग्गतिरूपे तमसि सुखं न **तथोपलब्धेः** 'अथाविद्वान्' इति श्रुतौ उक्तप्रकारेण प्रतीतेरिति ॥

**'अथाविद्वानकर्माऽवाग्गच्छति त्रिधा ह वाऽवाग्गच्छति तिर्यग्यातनातम इति । द्वे वाव सुखानुवृत्ते, न तमः सुखानुवृत्तं केवलं ह्येवात्र दुःखं भवति' इति श्रुतेर्न तृतीयावाग्गतौ सुखम् ।**

भा. ॥ तथेत्युक्तश्रुतिमाहुः- [2]**अथाविद्वानिति** ॥ १९ ॥

स्मृत्यनुमानाभ्यामुक्तार्थसाधनाय सूत्रम्-

**॥ ॐ स्मर्यतेऽपि च लोके ॐ ॥ २० ॥**

---

१. **यत्रेति** ॥ यत्रयत्र दुःखं तत्र सर्वत्रापि सुखं प्रतीयते । नीचगतावपि सूकरादितिर्यग्योनौ नरके च किञ्चित्सुखमस्त्येव । तदा मानुषदेहिनो योनौ सुखमस्तीति किमु वक्तव्यमित्यर्थः ॥

२. **अथेति** ॥ अविद्वान् ज्ञानरहितः अकर्मा कर्मरहितः अवाक् अवाग्गतिं तिर्यक् तिर्यक्त्वं यातना नरकं दुर्नरत्वंवा द्वे तिर्यक् यातना च हि यतः अत्र तमसि केवलं दुःखं भवति. अतः सुखानुवृत्तं नेत्यर्थः । स्पष्टमन्यत् ॥ १९ ॥

तृतीये, न, सुखमिति वर्तते । सिद्धमिति शेषः । यथायथमावृत्तिविपरिणामौ । अपिच इत्येतद् बलाद् वाक्यत्रयमत्र । अयमर्थः- **तृतीये** अवाग्गतिरूपे तमसि सुखं नेति **स्मर्यते** 'तिर्यक्षु नरके चैव' इति स्मृत्या प्रतिपाद्यते । **लोकेऽपि** सिद्धं लौकिकदृष्टान्तसहितयुक्त्यापि सिद्धम् । युक्तिस्तु 'नैते तामसाः, सुखित्वेन ईश्वरेष्टा अप्रियत्वात्, यो यस्याऽप्रियः स तस्य सुखित्वेन नेष्टः यथा राजाऽप्रियो राज्ञः' इति । लोके सिद्धमपि स्मर्यते च 'अतिप्रिये यथाराजा' इत्यादिस्मृत्या प्रतिपाद्यते **चेति** ॥ यद्वा वाक्यद्वयमस्तु । अयमर्थः- तृतीये सुखं नेति स्मर्यतेऽपि लोकसिद्धमिति च स्मर्यते इति ॥

**'तिर्यक्षु नरके चैव सुखलेशो विधीयते ।**
**नान्धे तमसि मग्नानां सुखलेशोऽपि कश्चन ॥'**

**इति भविष्यत्पर्वणि । लोकसिद्धं चैतत् । चशब्दाल्लोकसिद्धिरपि स्मार्तेत्याह ।**

**'अतिप्रिये यथा राजा न दुःखं सहते क्वचित् ।**
**अत्यप्रिये सुखमपि तथैव परमेश्वरः ॥' इति हि ब्राह्मे ॥ २० ॥**

भा. ॥ स्मृतिमुदाहरन्ति- [1]**तिर्यक्ष्विति** ॥ **पर्वणीति** ॥ (अस्य) कश्चनेति स्मर्यत इति सौत्रेणान्वयः । **एतदिति** ॥ तृतीये न सुखमित्येतदित्यर्थः । अपिशब्देन समुच्चये सिद्धे चशब्दो व्यर्थोऽत आहुः- **चशब्दादिति** ॥ (तत्र) स्मृति(त्यन्तर) मुदाहरन्ति- [2]**अतिप्रिये इति** ॥ **ब्राह्म इति** ॥ ब्राह्मे परमेश्वर इति स्मार्ता स्मृतिसिद्धेत्यन्वयः ॥ २० ॥

प्रत्यक्षेणाप्येतदर्थसमर्थनाय सूत्रम्-

## ॥ ॐ दर्शनाच्च ॐ ॥ २१ ॥

तृतीये, न, सुखमितिवर्तते । अयमर्थः- **तृतीये तमसि सुखं न दर्शनाच्च** चतुर्मुखप्रत्यक्षाच्च तद्बोधक- 'नारायणप्रसादेन' इत्यादिवचनाच्चेति ॥

**'नारायणप्रसादेन समिद्धज्ञानचक्षुषा ।**
**अत्यन्तदुःखसंलीनान्निश्शेषसुखवर्जितान् ॥**

---

१. तिर्यक्ष्विति ॥ स्पष्टम् ॥

२. अतिप्रिये इति ॥ क्वचित् क्वचित्कालेऽपीत्यर्थः ॥ अन्यत् स्पष्टम् ॥ २० ॥

**नित्यमेव तथाभूतान्विमिश्रांश्च गुणान् बहून् ।**
**निरस्ताशेषदुःखांश्च नित्यानन्दैकभागिनः ।**
**अपश्यत्त्रिविधान् ब्रह्मा साक्षादेव चतुर्मुखः ॥' इति दर्शनवचनाच्च पाद्मे ॥**

भा. ॥ परबुद्धेरप्रत्यक्षत्वाद्दुर्ज्ञेयत्वमत आहुः- '[1]**नारायणेति ॥ पाद्म इति ॥** तत्र इति दर्शनवचनाच्च न तृतीयाऽवाग्गतौ सुखमित्यनुवृत्त्याऽन्वयः ॥ २१ ॥

अर्थापत्त्योक्ताऽर्थसाधनाय सूत्रम्-

**॥ ॐ तृतीये शब्दाऽवरोधः संशोकजस्य ॐ ॥ २२ ॥**

'तृतीये' इत्यनुवर्तमाने पुनः तृतीये' इति पदं तमोघटकतृतीयभागपरम् । 'शब्द' इति लुप्ततृतीयान्तं पृथक् पदम् । अयमर्थः- **तृतीये** 'अधरतमसि' **शब्देन** तद्विषयकशब्दश्रवणेन **संशोकजस्य** अतिदुःखजन्यस्य मोहस्येतियावत् **अवरोधः** प्राप्तिरिति ॥ अयंभावः- अवाग्गतिरूपं तमस्त्रिविधम् ऊर्ध्वं मध्यममधरं चेति । तत्राधरतमोनिरूपणं यथा यथाऽधिकं भवति तच्छ्रोतॄणां तथातथा मोहो जायते । तदन्यथाऽनुपपत्त्या तमसि सुखं नेति कल्प्यत इति ॥

**तृतीये तृतीयतमसः श्रवणादेव शब्दानुसारेण संशोकजमोहप्राप्तिः ॥ २२ ॥**

भा.॥ सूत्रं व्याचक्षते- **तृतीये इति ॥ शब्दानुसारेणेति ॥** शब्दजन्यदुःखज्ञानानुसारेणेत्यर्थः ॥२२॥

अन्यथाऽनुपपत्त्या तृतीयतमसि सुखाभावं स्मृत्यापि साधयितुम् सूत्रम्-

**॥ ॐ स्मरणाच्च ॐ ॥ २३ ॥**

पूर्वसूत्रमनुवर्तते । अयमर्थः- तृतीये तमसि शब्देन संशोकजस्याऽवरोधो भवति । **स्मरणाच्च** '**महातमस्त्रिधा प्रोक्तम्**' इति स्मृतेश्चेति ॥

---

१. **नारायणेति ॥** द्वितीयार्धेन तमोयोग्याः, तृतीयार्धेन नित्यसंसारिणः, चतुर्थार्धेन मुक्तियोग्या निर्दिष्टा इति ज्ञेयम् ॥ **समिद्धज्ञानचक्षुषा** देदीप्यमानज्ञानाख्यचक्षुषा नित्यमेव **तथाभूतान्** नित्यं विमिश्रान् नित्यसंसारिणः साक्षादेव किञ्चिदद्वारीकृत्येत्यर्थः । शिष्टं स्पष्टम् ॥ २१ ॥ २२ ॥

**महातमस्त्रिधा प्रोक्तमूर्ध्वं मध्यं तथाऽधरम् ।**
**श्रवणेनैव मूर्च्छादिरधरस्य यतो भवेत् ।**
**तस्मान्न विस्तरेणैतत्कथ्यते राजसत्तम' इति कौर्मे ॥**

॥ इति नतृतीयाधिकरणम् ॥ १५ ॥

**भा.** ॥ स्मृतिमाहुः- **'महातम इति** ॥ **कौर्मे इति** ॥ कौर्मे सत्तमेति स्मरणाच्चेति सूत्रेऽन्वयः ॥ २३ ॥ अ.१५ ॥

॥ इति नतृतीयाधिकरणम् ॥ १५ ॥

१. **महातम इति** ॥ तामिस्रान्धतामिस्राख्यं तमः अधरस्य तमसः श्रवणेन तन्निरूपणश्रवणेन श्रोतॄणां मूर्छादिर्भवेत् यतः कारणादित्यर्थः । शिष्टं स्पष्टम् ॥ २३ ॥ अ. १५ ॥

## १६. तत्स्वाभाव्याधिकरणम्

**(जवः धूमादिदेवतारूपं तत्पदं वा न प्राप्नोति)**

**'धूमो भूत्वाऽभ्रं भवति' (छा.उ.५.१०.५) इतीत्याद्यन्यभावः श्रूयते । स कथमित्यतो ब्रवीति–**

अत्र नये कर्मिणां धूमादिभावनिरसनम् । कर्मिणां धूमादिभावे कर्मणः सुखहेतुत्वात्तत्र वैराग्यं न स्यादिति (जिज्ञासानयेन)सङ्गतिः । धूमादिभावो विषयः । स च धूमादिदेवतैक्यं वा, तत्पदप्राप्तिर्वा, प्रकारान्तरं वेति संशयः । शब्दस्याऽनेकवृत्तयः तद्बीजम्, तद्देवतैक्यतत्पदप्राप्त्योरन्यतरदिति पूर्वपक्षः ॥ पूर्वपक्षे श्रुतिमाहुः - '**धूमो भूत्वेति** ॥ **अन्यभाव इति** ॥ धूमादिभाव इत्यर्थः । सः= धूमादिभावः । कथं= कीदृश इत्यर्थः । धूमादिदेवतैक्यं वा, तत्पदप्राप्तिर्वा, प्रकारान्तरं वेति भावः ॥

**॥ ॐ तत्स्वाभाव्यापत्तिरुपपत्तेः ॐ । २४ ॥**

विषयवाक्यबलात्कर्मिणां 'धूमादिभाव' इति लभ्यते । तच्छब्देन श्रुतिस्थधूमादिपदार्थपरामर्शः । स्वभाव एव स्वाभाव्यम् च इति वर्तते । स एवार्थे । अयमर्थः- कर्मिणां धूमादिभावः 'धूमो भूत्वा' इत्यादि श्रुत्युक्तधूमादित्वं **तत्स्वाभाव्यापत्तिश्च** धूमादिस्वभावसदृशस्वभावप्राप्तिरेव, (सा च धूमादौ प्रविश्य तद्गतौ गतिः तस्थितौ स्थितिरित्यादिः) ननु धूमादिदेवतैक्यं नापि तत्पदप्राप्तिः **उपपत्तेः** उक्तार्थस्यैवोपपन्नत्वादिति ॥ अन्यस्याऽन्यभावप्राप्तेरयोगादिति भावः ॥

**धूमादिषु प्रविश्य तद्गतौ गतिः स्थितौ स्थितिरित्यादिरेव तद्भावापत्तिः । न ह्यन्यस्यान्यभावो युज्यते । न च तत्पदप्राप्तिः । गारुडे च–**

**'धूमादिभावप्राप्तिश्च तद्गतौ गतिरेव तु ।**
**स्थितौ स्थितिः प्रवेशश्च लघुत्वादिस्तथैव च ॥**
**न ह्यन्यस्यान्यथाभावो न च तत्पदमिष्यते ।**
**विद्यागम्यं पदं यस्मान्न तत्प्राप्यं हि कर्मणा ॥'**

---

१. धूमो भूत्वेति ॥ (छा.५.१०.५) धूमादिदेवतैक्यं तत्पदप्राप्तिर्वा धूमादिभवनमित्यर्थः पूर्वपक्षे ।

**'एकदेशस्वभावेन वागभेदाऽपि युज्यते ।**
**यथा जीवः परं ब्रह्म ब्रह्मेदं जगदित्यपि ॥' इति ॥ २४ ॥**

॥ **तत्स्वाभाव्याधिकरणम्** ॥ १६ ॥

**भा.** ॥ सूत्रं व्याचक्षते- **धूमेति** ॥ ननु तत्स्वरूपत्वमेव तद्भावः किं न स्यादत आहुः- **न ह्यन्यस्येति** ॥ अवधारणव्यावर्त्यमाहुः- **नचेति** ॥ युगपदनेकेषां समवाये सर्वेषां तत्पदप्राप्त्ययोगादिति भावः ॥ उक्तार्थे स्मृतिं चाहुः- **गारुडे च** - '**धूमेति** ॥ एतत्सर्वमुक्तमिति शेषः ॥ २४ ॥अ.१६॥

॥ **इति तत्स्वाभाव्याधिकरणम्** ॥ १६ ॥

---

१. **धूमादीति** ॥ श्रुत्युक्तधूमादित्वप्राप्तिस्तु तद्गतौ धूमादिकर्तृकगतौ सत्यां गतिः स्वगमनं, प्रवेशे प्रवेशः लघुत्वे लघुत्वं हि यस्मादन्यस्य जीवस्य अन्यभावो न सम्भवति यतश्च तत्पदप्राप्तिर्नेष्यते । अत इति पूर्वेणान्वयः। यतः तत्पदं धूमादिदेवतापदं विद्यागम्यं ज्ञानप्राप्यम् । अतः तत्पदं कर्मणा प्राप्यं न । **एकदेशस्वभावेन** स्वभावैकदेशसादृश्येन **अभेदा** अभेदप्रतिपादिनी **वाक्** 'धूमो भूत्वा' इत्यादिश्रुतिवाक्यं युज्यते । यथा जीवः परं ब्रह्मेति आपाततोऽभेदप्रतिपादक 'तत्त्वमसि' इत्यादिः, ब्रह्मेदं जगदिति अभेदप्रतिपादक 'सर्वं खल्विदं ब्रह्म' इत्यादिः, वाक् एकदेशसादृश्येनोपपद्यते तथेत्यर्थः ॥ २४ ॥ अ. १६ ॥

## १७. नातिचिरेणाऽधिकरणम्

**(जीवः पुण्यमनुभूय धूममार्गेण अविळम्बेन संवत्सरात् प्रागेव मातृदेहं प्रविशति)**

**बहुस्थानगमनात् कल्पान्तरमप्येवं स्यादित्यत आह—**

अत्र नये स्वर्गादवरूढस्य कर्मिणोऽचिरेण गर्भवासादिप्राप्तिसमर्थनम् । चिरेण गर्भवासप्राप्तावागमने तत्र तत्र सुखप्राप्तेः वैराग्यं न स्यादिति जिज्ञासानयेन सङ्गतिः । कर्मी विषयः, चिरेण गर्भवासं प्राप्नोत्यचिरेणेति वेति संशयः, द्विविधपान्थदर्शनं तद्बीजम् । चिरेणेति पूर्वपक्षः ॥ (पूर्वपक्षमाहुः-) **बहुस्थानेति ॥** आकाशवाय्वादिबहुस्थानगमनश्रवणादित्यर्थः । **एवमिति ॥** तत्तद्देवतास्वाभाव्यं स्यादित्यर्थः ॥

### ॥ ॐ नातिचिरेण विशेषात् ॐ ॥ २८ ॥

श्रुतिबलात्, 'स्वर्गादवरूढः कर्मी योनिं प्राप्नोति' इति लभ्यते । नातिचिरेणेति नशब्देन समासः । अयमर्थः- स्वर्गादवरूढः कर्मी नातिचिरेण शीघ्रमेव योनिं ब्राह्मणादियोनिं प्राप्नोति **विशेषात्** 'तद्य इह' इति विशेषवचनादिति ॥

**'तद्य इह रमणीयचरणा अभ्याशो ह यत्ते रमणीयां योनिमापद्यन्ते' (छा.५.१०.७) इति विशेषान्नातिचिरेण ।**

**'स्वर्गाल्लोकादवाक् प्राप्तो वत्सरात्पूर्वमेव तु ।**
**मातुः शरीरमाप्नोति पर्यटन्यत्र तत्र च ॥' इति च नारदीये ॥ २८ ॥**

॥ इति नातिचिरेणाधिकरणम् ॥ १७ ॥

**भा.॥** विशेषवचनमाहुः- [1]**तद्य इहेति ॥** ननु कल्पान्तकालोऽपि तदधिककालापेक्षया समीप एवाऽतो नेयं श्रुतिरुक्तार्थसाधिकेत्यत आहुः- [2]**स्वर्गादिति ॥ नारदीये इति ॥ तत्रतत्र चेति** विशेषादित्यन्वयः । भाष्यस्य सूत्रघटकपदार्थमात्रविवरणपरत्वेनान्यत्रान्वयापेक्षा न ॥ २८ ॥ अ.१७ ॥

॥ इति नातिचिरेणाधिकरणम् ॥ १७ ॥

१. **तद्य इहेति ॥** व्या. (पृ.१८)
२. **स्वर्गादिति ॥** अवाग्गतः अधोदेशं प्राप्तः वत्सरात् संवत्सरसमाप्तेः यत्र तत्र यत्रकुत्रचिदित्यर्थः । स्पष्टमन्यत् ॥ २८ ॥ अ.१७ ॥

## १८. अन्याधिष्ठिताधिकरणम्

**(कर्मिणां स्वर्गादवरोहणे दुःखानुभव नास्ति)**

**'त इह व्रीहियवा ओषधिवनस्पतयस्तिला माषा इति जायन्ते' (छा.५.१०.६) इति श्रवणादनर्थफलत्वं यज्ञादेरित्यतो वक्ति—**

अत्र नये कर्मिणो व्रीह्यादिभावनिषेधः। अन्यथा कर्मिणः सुखसाधनतया वेदबोधितव्रीह्यादिभावे दुःखसत्त्वेनानाश्वासे तद्विहितवैराग्येऽपि अनाश्वास इति (जिज्ञासानयेन) सङ्गतिः। कर्मी विषयः। आगमने दुःखवान्न वेति संशयः। लोकदृष्टिः पुरुषार्थत्वं च तद्बीजम्। नेति पूर्वपक्षः। पूर्वपक्षमाहुः- [1]**त इहेति॥ अनर्थफलत्वमिति॥** दुःखफलत्वमित्यर्थः। व्रीह्यादौ प्रवेशे तच्छेदभेदादिप्रयुक्तदुःखप्राप्तिः स्यादिति भावः॥

### ॥ ॐ अन्याधिष्ठिते पूर्ववदभिलापात् ॐ ॥ २६ ॥

श्रुतिबलात्स्वर्गादवरूढस्य कर्मिणो व्रीह्यादिदेहे इति, अन्याधिष्ठितेत्युक्त्या प्रवेशमात्रमिति, पूर्ववदित्युक्त्या ऐक्यव्यपदेशो युज्यत इति लभ्यते। अयमर्थः- स्वर्गादवरूढस्य कर्मिणः **अन्याधिष्ठिते** अन्यजीवाऽभिमन्यमाने व्रीह्यादिदेहे प्रवेशमात्रं नत्वभिमानः **अभिलापात्** 'सोऽवाग्गतः' इति श्रुतौ 'स्वर्गादवाग्गतः' इति वाराहे च तथोक्तत्वात्। **पूर्ववत्** पूर्वपठित-'धूमोभूत्वा' इत्यादिवाक्ये इव ऐक्यव्यपदेशः 'त इह व्रीहियवा' इत्याद्यैक्यव्यवहारो युज्यत इति॥ एवं च व्रीह्यादिदेहेऽभिमानाभावात् व्रीह्यादिच्छेदादिप्रयुक्तदुःखं नास्तीति भावः॥

**अन्याधिष्ठिते व्रीह्यादिशरीरे प्रवेशः। न तु भोगोऽस्य। 'धूमो भूत्वाऽभ्रं भवति' (छा.५.१०.५) इतीत्यादिपूर्वोक्तवत्। 'सोऽवाग्गतः स्थावरान् प्रविश्याभोगेनैव व्रजन् स्थूलं शरीरमेति स्थूलाच्छरीराद्भोगाननुभुङ्क्ते' इत्यभिलापात् कौषारवश्रुतौ॥**

**'स्वर्गादवाग्गतो देही व्रीह्यादीतरदेहगः।**
**अभुञ्जंस्तु क्रमेणैव देहमाप्नोति कालतः॥' इति च वाराहे॥ २६॥**

---

१. **त इहेति॥** (छा.५.१०.६) ते भुक्तपुण्यफलाः कर्मिणः स्वर्गादागच्छन्तो वर्षेण सहावनिमापन्ना इह भूमौ केचित् व्रीहयः केचिद्यवा एवंरूपेण जायन्ते। अन्याधिष्ठितव्रीह्यादौ प्रविशन्तीत्यर्थः॥ स्पष्टमन्यत्॥

**भा.**॥ (सूत्रं व्याचक्षते- **अन्येति** ॥) ननु व्रीह्यादिदेहे कर्मिणोऽभिमानाभावे 'व्रीहियवा' इति सामानाधिकरण्यं न स्यात्, देहिसामानाधिकरण्यव्यवहारस्य देहाभिमाननिमित्तकत्वादतआहुः- [1]**धूम इति** ॥ **पूर्वोक्तिवदिति** ॥ देहप्रवेशमात्रेणैक्यव्यपदेश इति भावः । अभिलापकश्रुतिस्मृती आहुः- [2]**सोऽवाग्गत इत्यादि** ॥ श्रुतौ, वाराहे च, अभिलापादिति सम्बन्धः ॥ २६ ॥

**यज्ञादिकर्मणो दुःखजनकत्वमाशङ्क्य समाधानाय सूत्रम्-**

## ॥ ॐ अशुद्धमिति चेन्न शब्दात् ॐ ॥ २७ ॥

**प्रकृतत्वात्कर्मेति पक्षस्य, अशुद्धमिति साध्यस्वारस्याद्धेतुदृष्टान्तयोश्च, लाभः । शब्दादित्यावर्तते । अयमर्थः- कर्म यज्ञादिसाङ्गं कर्म अशुद्धं पापजनकं हिंसात्वात् ब्रह्महत्यादिवत् इतिचेन्न । शब्दात् 'ज्योतिष्टोमेन स्वर्गकामो यजेत' इत्यादिश्रुतिविहितत्वात् शब्दात् शब्देनाऽनिषेधाच्चेति ॥ तथा च पूर्वपक्षानुमानस्य निषिद्धत्वमुपाधिः । यज्ञादिकं न पापजनकं विहितत्वादग्निहोत्रादिवदिति सत्प्रतिपक्षश्च भवतीति भावः । न चाभिचारिकयागस्य 'श्येनेनाभिचरन्' इति श्रुतिविहितत्वेऽपि पापजनकत्वाद् व्यभिचारः (प्रतिपक्षानुमानस्य) इति वाच्यम् । साक्षात्पापजनकत्वाभावस्य साध्यत्वात् । आभिचारिकं तु - न साक्षात्पापजनकं किन्तु शत्रुहननद्वारेत्यदोषात् ॥**

**हिंसारूपत्वात्पापस्यापि सम्भवाद्दुःखं च भवत्विति चेन्न । शब्दविहितत्वात् ।**

**'हिंसा त्ववैदिका या तु तयाऽनर्थो ध्रुवं भवेत् ।**
**वेदोक्तया हिंसया तु नैवानर्थः कथञ्चन' ॥ इति वाराहे ।**

**॥ इत्यन्याधिष्ठिताधिकरणम् ॥ १८ ॥**

**भा.**॥ सूत्रं व्याचक्षते- **हिंसेति** ॥ पूर्वपक्षानुमानस्योपाधिप्रतिपक्षौ स्मृत्याऽऽहुः- **हिंसेति** ॥

---

१. **धूमो भूत्वेति** ॥ व्या. (पृ. ३०)

२. **स इति** ॥ स कर्मी **स्थावरान्** व्रीह्यादिरूपान् **अभोगेनैव** व्रीह्यादिच्छेदादिप्रयुक्तदुःखादीन् व्रीह्याद्यभिमानिजीववदभुञ्जान एव **शरीरात्** शरीरेणेत्यर्थः । शिष्टं स्पष्टम् ॥ **स्वर्गादिति** ॥ अभुञ्जस्तु व्रीह्यादिच्छेदप्रयुक्तदुःखानुभवशून्य एव **व्रीह्यादीतरदेहगः** व्रीह्यादिरूपं जीवान्तराभिमन्यमानं देहान्तरं **क्रमेण** पितृमातृक्रमेणेत्यर्थः । स्पष्टमन्यत् ॥ २६ ॥

एतद्वचनबलेन सूत्रे शब्दादित्यस्य शब्देन निषेधाभावादित्यप्यर्थो वाच्य इति सूचितम् । **वाराह इति** ॥ एतदुक्तमिति शेषः ।यद्वा पूर्वपक्षानुमानस्य स्मृतिविरोधमाहुः- **हिंसेति** ॥ **वाराह इति** ॥ तत्रेत्युक्तेश्च इति चेन्नेत्यन्वयोऽत्र पक्षे ॥ २७ ॥ अ. १८ ॥

॥ **इत्यन्याधिष्ठिताधिकरणम्** ॥ १८ ॥

## १९. रेतोऽधिकरणम्

**(जीवः प्रथमतः पितृदेहं प्रविश्य अनन्तरं मातृयोनिं प्रविशति)**

**'स्वर्गादवाग्गतश्चापि मातुरेवोदरं व्रजेत्' इति वचनात् 'य एव गृही भवति यो वा रेतः सिञ्चति तमेवानुविशति' इति श्रुतिः कथमिति ।**

अत्र नये स्वर्गादवतीर्णस्य पितृप्रवेशसमर्थनम् । तदभावे (तत्र) वैराग्यं न स्यादिति (जिज्ञासानयेन) सङ्गतिः । कर्मी विषयः । पितरं प्रविशति न वेति संशयः । श्रुतिः प्रयोजनादर्शनं च तद्बीजम्, नेति पूर्वपक्षः ॥ पूर्वपक्षप्रापकमाहुः- '**स्वर्गादिति** ॥ **वचनादिति** ॥ सयुक्तिकवचनविरोधादित्यर्थः । युक्तिश्च- 'स्वर्गादवतीर्णः पितृप्रवेशशून्यः तत्र प्रवेशे प्रयोजनाभावात्' इति ॥ विरुद्धश्रुतिमाहुः- '**य एवेति** ॥ **कथमिति** ॥ युज्येतेति शेषः । सा श्रुतिरप्रमाणमिति भावः (पूर्वपक्षिणः) ॥

**अत आह—**

### ॥ ॐ रेतस्सिग्योगोऽथ ॐ ॥ २८ ॥

स्वर्गादवरूढस्य कर्मिण इति वर्तते । अथेत्युक्त्या पूर्वमिति मातृयोग इति च लभ्यते । अयमर्थः- स्वर्गादवरूढस्य कर्मिणः पूर्वं रेतःसिग्योगः रेतः सिचि पितरि योगः प्रवेशाख्यः सम्बन्धो भवति । अथ पश्चान्मातृयोगः मातरि प्रवेशो भवतीति ॥ पितृयोग इति वक्तव्ये रेतःसिगित्युक्तिः पितू रेतोद्वारा कारणत्वबोधनार्था । एवं च रेतोद्वारा मातरि प्रवेशार्थं पितृप्रवेशस्यावश्यकत्वेन वैयर्थ्यरूपयुक्तिविरहात्पितृप्रवेशश्रुतिः प्रमाणमेवेति भावः ॥

**'ततो रेतस्सिचमेवानुप्रविशत्यथ मातरमथ प्रसूयते स कर्म कुरुते' इति कौण्ठरव्यश्रुतेः पितरमेव प्रथमतो प्रविशति । मातृप्राप्तेः पश्चादपि भाव्यत्वात् ॥**

॥ इति रेतोऽधिकरणम् ॥ १९ ॥

---

१. **स्वर्गादिति** ॥ मातुरेव न पितुरित्यर्थः । स्पष्टमन्यत् ॥

२. **य इति** ॥ यः पुरुषः गृही गृहस्थाश्रमी भोगार्थस्त्रीयुक्त इति यावत् अनुविशति जीव इत्यर्थः । स्पष्टमन्यत् ॥

भा. ॥ श्रुतिमाहुः- '**ततो रेत इति** ॥ ननु तर्हि 'मातुरेवोदरं व्रजेत्' इति श्रुतिरप्रमाणं स्यादत आहुः- **मातृप्रवेशस्येति** ॥ **पश्चादिति** ॥ प्रथमं मातृप्रवेशे तु पितरि प्रवेशो नैव स्यादिति भावः ॥ २८ ॥ अ. १९ ॥

**॥ इति रेतोऽधिकरणम् ॥**

---

१. **तत इति** ॥ स्पष्टम् ॥ २८ ॥ अ.१९ ॥

## २०. योन्यधिकरणम्

('योनिप्रवेशानन्तरं शरीरप्राप्तिः' इत्येतद् औत्सर्गिकम्)

**'देहं गर्भस्थितं क्वापि प्रविशेत् स्वर्गतो गतः' इति वचनात् पश्चादेव प्रविशतीति ।**

अत्र नये पितृद्वारा मातृयोनिप्रवेशेन शरीरप्राप्तिसमर्थनम् । तदभावे सिद्धदेहप्रवेशेऽतिवैराग्यं न स्यादिति (जिज्ञासानयेन) सङ्गतिः । जीवो विषयः । पितृद्वारा मातृयोनिं प्रविश्य शरीरं प्राप्नोतीति नियमोऽस्ति नवेति संशयः । पक्षद्वयेऽप्यनुपपत्त्यदर्शनं तद्बीजम् । नियमो नेति पूर्वपक्षः ॥ पूर्वपक्ष-प्रापकवचनमाहुः- '**देहमिति** [1] ॥ **पश्चादेवेति** ॥ देहस्य सर्वावयवविशिष्टत्वेन निष्पत्त्यनन्तरमेवे-त्यर्थः । देहमिति शेषः । तथा च गर्भस्थे सिद्धे देहे प्रवेशेन गर्भाद्बहिर्गते देहे प्रवेशेन च गर्भवासादि-प्रयुक्तदुःखाभावेन जनने विरक्तिर्न स्यादिति भावः ॥

**अत आह–**

## ॥ ॐ योनेः शरीरम् ॐ ॥ २९ ॥

कर्मिण इति प्रकृतम्, अथेति च वर्तते । यथायथमावृत्तिः । योनेरिति ल्यब्लोपे पञ्चमी । प्राप्नुवन्तीति शेषः । अयमर्थः - कर्मिणः अथ पितृप्रवेशादनन्तरं योनेः मातृयोनिं प्रविश्य शरीरं प्राप्नुवन्ति । अथ अन्यथा च पितृप्रवेशादिपरंपरां विनाऽपि केचन कर्मिणः शरीरं प्राप्नुवन्तीति ॥

**पितृशरीरान्मातृयोनिमनुप्रविश्य तत एव शरीरं प्राप्नोति । 'दिवः स्थास्नून् गच्छति स्थास्नुभ्यः पितरं पितुर्मातरं मातुः शरीरं शरीरेण जायत इति सम्मितम् । अथासम्मितं स्थास्नुभ्यो जायते पितुर्मातुरन्तरे वा गर्भे वा बहिर्वा' इति पौष्यायणश्रुतेः ॥**

**'स्थावराणि दिवः प्राप्तः स्थावरेभ्यश्च पूरुषम् ।**
**पुरुषात् स्त्रियमापन्नस्ततो देहं यथाक्रमम् ॥**

**देहेन जायते जन्तुरिति सामान्यतो जनिः ।**
**विशेषजननं चापि प्रोच्यमानं निबोध मे ॥**

१. देहमिति ॥ कर्मी स्वर्गतः स्वर्गात् गतः भूमिं प्राप्तः गर्भस्थितं मातृगर्भस्थं देहं प्रविशेदित्यर्थः ।

**स्थास्नुष्वथापि पुरुषे प्रमदायामथापि वा ।**
**गर्भे वा बहिरेवाथ क्वचित्स्थानान्तरेषु वा' इति ब्राह्मे ॥**

॥ इति योन्यधिकरणम् ॥

**॥ इति श्रीमदानन्दतीर्थभगवत्पादविरचिते श्रीमद्ब्रह्मसूत्रभाष्ये तृतीयाध्याये प्रथमः पादः ॥ ३ ॥ १ ॥**

**भा.॥** सूत्रं व्याचक्षते- **पितृशरीरादिति ॥** उक्तार्थे मानमाहुः- ²**दिव इत्यादि ॥ श्रुतेः**, ब्राह्म इत्युक्तेश्च, शरीरं प्राप्नोतीत्यन्वयः ॥ २९ ॥ अ.२० ॥

॥ इति योन्यधिकरणम् ॥

**॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचित श्रीब्रह्मसूत्रभाष्यस्य व्याख्यायां भाष्यार्थसहितसूत्रार्थमणिमञ्जर्यां तृतीयाऽध्यायस्य प्रथमः पादः ॥**

---

२. **दिव इति ॥ दिवः** स्वर्गात् भूमिं प्रत्यागतो जीवः **स्थास्नून्** व्रीह्यादिशरीराणि ततः पितरं, पितुर्मातरं, मातुः सकाशात् शरीरं प्रागसिद्धशरीरं शरीरेण युक्तो जायते । **सम्मितं** विद्यातपआदिविशेषकारणमन्तरेण साधारणं जन्म उक्तम् । **अन्यदसम्मितं** विद्यातपआदिविशेषाकारणकम् उत्तमम् । उत्तमाधिकारिभिरेव लभ्यमसाधारणं जन्म । स्थास्नुभ्यः कश्चिज्जायते । यथा अरणीतः शुकाचार्यप्रभृतिः । पितुर्जायते कश्चित् यथा मान्धात्रादिः । मातुर्जायते कश्चित् । यथा जरत्कार्वाद्यनुग्रहादास्तिकादिः । अन्तरे स्थानान्तरे जायते कश्चित् यथा धृष्टद्युम्नादिरग्नौ । यद्वा अन्तरे मध्ये मातापित्रोरन्यतरदर्शनमात्रेणेति यावत् । गर्भे पूर्वस्थितमेव देहं शरीरं केचित् प्रविशन्ति यथा श्रीमदाचार्याद्याः । बहिरेवेत्येतत् अत्यन्तशिष्टविषयम् । अत्यन्तशिष्टास्तु ऋजव एवेति श्रीमदाचार्याणामपि मातुर्बहिरेव प्रवेशः । पूर्वसिद्धगर्भे इत्यस्योदाहरणान्तरं देयमिति मान्याः । न च बहिरिति वाक्यस्यात्यन्तशिष्टविषयत्वे टीकायां 'बहिः द्रुपदादयः' इत्युक्तिविरोध इति वाच्यम् । तस्य मात्रपेक्षया बहिरित्यर्थाश्रयणेनाविरोधादित्यर्थ इति **भाष्यदीपिका । स्थावराणीति ॥** जन्तुः कर्मी जीवः दिवः स्वर्गात् स्थावराणि आपन्नो भवति । पुरुषं पितरं यथाक्रममुक्तक्रममनतिक्रम्य देहेन सहितो जायते सामान्यतः साधारणं विशेषजननम् असाधारणं जन्म मे मत्तो निबोध जानीहीत्यर्थः । शिष्टं स्पष्टम् ॥ २९ ॥ अ. २० ॥

# ॥ अथ तृतीयाध्यायस्य द्वितीयः पादः ॥

## १. सन्ध्याधिकरणम्

**(अर्थज्ञानोभयात्मकः स्वप्नः सत्य एव)**

**भक्तिरस्मिन् पाद उच्यते । भक्त्यर्थं भगवन्महिमोक्तिः ॥**

एतत्पादार्थं दर्शयन्ति- भक्तिरिति ॥ पूर्वपादार्थवैराग्यकार्यत्वादुत्तरपादार्थोपासनाङ्गत्वाच्च अवसरप्राप्ता भक्तिरस्मिन् पादे निरूप्यत इत्यर्थः ॥ नन्वस्मिन् पादे 'माहात्म्यज्ञानपूर्वकसुदृढस्नेहो भक्तिः' इति भक्तिस्वरूपं न निरूप्यते । नापि भक्तिः कर्तव्येति विधीयते । भक्तेर्विषयसौष्ठवाधीनत्वेन कर्तव्यत्वेन विधानायोगात् तत्कथमुच्यते भक्तिरुच्यत इत्यतो 'भक्तिरुच्यत' इति स्ववाक्यस्य विवक्षितमर्थमाहुः - **भक्त्यर्थमिति** ॥ यद्यपि 'अम्बुवदग्रहणात्' इति (३.२.१९) सूत्रेण भक्तिस्वरूपमुक्तं तथाऽपि तत्राऽनुवाद्यत्वेनैवोक्तं न तु विधेयत्वेन । किञ्चैकेनैव सूत्रेण तस्योक्तत्वात् पादोपाधित्वं न सम्भवतीति भावः । उक्तिरिति ॥ यद्यपि प्रथमाध्याय एव सर्वं माहात्म्यमुक्तं तथाऽपि तदेव क्वचिद्विस्तरेण क्वचिच्छङ्कान्तरपरिहाराय समर्थ्यत इत्यदोषः । अस्य पादस्य पूर्वपादेनाक्षेपिकीसङ्गतिः यदर्थं वैराग्यमुक्तं, सा भक्तिरेव न सम्भवति माहात्म्याभावात् इति शङ्कया अत्र परिहारात् । अत्र नये स्वाप्नपदार्थतत्प्रतीत्योर्भगवदधीनत्वमहिमवर्णनम् । अन्यथा सपादाध्यायद्वयेन क्वचित्साक्षात्, क्वचिदर्थात्, सर्वं भगवदधीनमित्युक्तमयुक्तं स्यादिति (यथायथं प्राचीन नयेन) (जन्मादिनयेन) सङ्गतिः। स्वप्नो विषयः । भगवदधीनो नवेति संशयः । विप्रतिपत्तिस्तद्बीजम्, नेति पूर्वपक्षः । भक्तिर्न कार्येति फलरूपपूर्वपक्षः, एवमुत्तरत्रापीति ज्ञेयम् ॥

**॥ ॐ सन्ध्ये सृष्टिराह हि ॐ ॥ १ ॥**

**सन्धौ** जाग्रत्सुषुप्त्योर्मध्ये भवं **सन्ध्यं** स्वप्नावस्था । शब्दादिति वर्तते । यथायथमावृत्तिविपरिणामौ । अयमर्थः- हि यतः शब्दः 'न तत्र रथा' इति श्रुतिः, **सन्ध्ये सृष्टिं** स्वाप्नपदार्थसृष्टिमाह । अतः सन्ध्ये सृष्टिरस्तीति । इदमुपलक्षणं लयस्यापि । तथा च स्वाप्नतत्प्रतीत्योरसत्त्वान्न विष्णवधीनत्वमिति तन्न [illegible] सृष्टत्वोक्त्या सत्यत्वात् विष्णवधीनत्वं, तदुत्तरमभावाच्च स्वप्नादुत्तरं तत्प्रतीतिश्च नेति भावः

**न स्वप्नोऽपि तं विना प्रतीयते । 'न तत्र रथा न रथयोगा न पन्थानो भवन्त्यथ रथान् रथयोगान् पथः सृजते'(बृ.६.३.१०) इत्यादिश्रुतेः ॥**

भा.॥ सूत्रं व्याचक्षते - **न स्वप्नोऽपीति** ॥ इदं भाष्यमावर्तते । तं विष्णुं विना स्वप्नोऽपि स्वाप्नपदार्थोऽपि नास्ति । तं विना न प्रतीयतेऽपीत्यर्थः । सृष्टौ मानमाहुः- [1]**न तत्रेति** ॥ **श्रुतेरिति** ॥ श्रुतेः, स्वबोधितसृष्टिनिमित्तकसत्यत्वद्वारा हेतुत्वं बोध्यम् ॥ १ ॥

कर्तुरभावात्स्वाप्नपदार्थसृष्टिरयुक्तेति शङ्कावारणाय सूत्रम्-

## ॥ ॐ निर्मातारं चैके पुत्रादयश्च ॐ ॥ २ ॥

**पूर्वसूत्रं वर्तते । जायन्ते विष्णुमिति शेषः । हिरित्यर्थे च । यथायथमावृत्तिविपरिणामौ । अयमर्थः- एके शाखिनो विष्णुं सन्ध्ये निर्मातारं स्रष्टारमाहुः 'य एषु' इत्यादिना वदन्ति, एके च सन्ध्ये पुत्रादयश्च स्वाप्नपुत्रादयोऽपि विष्णुतो जायन्त इत्याहुः 'एतस्माद्ध्येव' इति श्रुत्या आहुः, अतो विष्णुत एव सन्ध्ये सृष्टिर्भवतीति ॥**

**'य एषु सुप्तेषु जागर्ति कामं कामं पुरुषो निर्मिमाणः'(कठ.५.८) इति च । एतस्माद्ध्येव पुत्रो जायत एतस्माद्भ्रातैतस्माद्भार्या यदेनं पुरुषमेव स्वप्ने नाभिहन्ति' इति गौपवनश्रुतिश्च । केन साधनेन–**

भा. ॥ स्वाप्नसृष्टौ सूत्राकाङ्क्षित श्रुती आहुः- [2]**य एष्वित्यादि** ॥ अस्य भाष्यस्य श्रुतिस्वरूपप्रदर्शनपरत्वेन नाऽन्यत्रान्वयः ॥ २ ॥

सन्ध्यसृष्टावुपादाननिमित्तरूपसाधनाऽन्तराऽभावात्कथं सृष्टिरित्याक्षिपन्ति- **केनेति** ॥ सृष्टिरित्याशङ्कायामाहेति शेषः ॥

## ॥ ॐ मायामात्रं तु कार्त्स्न्येनानभिव्यक्तस्वरूपत्वात् ॐ ॥ ३ ॥

---

१. **न तत्रेति** ॥ (बृ.६.३.१०) **तत्र स्वप्ने रथा न,** रथयोगाः रथेन युज्यमाना अश्वादयो न, **पन्थानो न भवन्ति** नासन् पूर्वम् । अथ तस्मिन् क्षण एव रथान् सृजते इत्यर्थः । अन्यत्स्पष्टम् । स्वाप्नरथादेः प्रागसतः तत्काले सृष्टिरिति भावः ॥ १ ॥

२. **य एष्विति** ॥ (का. २.५.८) **यः पुरुषः** पूर्णषड्गुणः पुरिशयो वा **एषु** जीवेषु **सुप्तेषु सत्सु कामं** स्वेच्छया **कामं** काम्यं स्वाप्नरथादीन् **निर्मिमाणो** जागर्तीत्यर्थः । य इत्यस्य तदेव शुक्रमित्यत्रान्वयः । **एतस्मादिति** ॥ यदा एनं पुरुषं जीवं परमात्मा स्वप्ने नाभिहन्ति संयोजयति तदा एतस्मात्परमात्मन इति पूर्वेणान्वयः ॥२॥

सन्ध्य इति वर्तते । मायापदं भगवदिच्छा जीवमनोगतसंस्काराख्यद्रव्योभयपरम् । मात्रपदं माधातोः कर्मणि त्रप्रत्ययान्तम् । तुरेवार्थे । अयमर्थः- **सन्ध्यं** स्वाप्नपदार्थः **मायामात्रं तु** ईश्वरेच्छासंस्काराभ्यामेव निमित्तोपादानाभ्यां मात्रं सृष्टं न तु बाह्यनिमित्तोपादानाभ्यां **कार्त्स्न्येन** सामस्त्येन **अनभिव्यक्तस्वरूपत्वात्** अप्रकाशितस्वरूपत्वादिति ॥

**अनादि मनोगतान् संस्कारान् स्वेच्छामात्रेण प्रदर्शयति, नान्येन साधनेन; सम्यगनभिव्यक्तत्वात् । ब्रह्माण्डे च–**

**'मनोगतांस्तु संस्कारान् स्वेच्छया परमेश्वरः ।**
**प्रदर्शयति जीवाय स स्वप्न इति गीयते ॥**
**यदन्यथात्वं जग्रत्वं सा भ्रान्तिस्तत्र तत्कृता ।**
**अनभिव्यक्तरूपत्वान्नान्यसाधनजं भवेत् ॥' इति ॥**

**भा.**॥ सूत्रं व्याचक्षते - **अनादिमनोगतानिति** ॥ ईश्वरः सन्ध्यमुपादानीकृत्य सृष्ट्वेति शेषः । स्वेच्छामात्रेति मात्रपदव्यावर्त्यमाहुः- **नान्येनेति** ॥ न बाह्यसाधनेनेत्यर्थः । अयं विशिष्टार्थः- ईश्वरोऽनादिमनोगताननादितो मनःस्थितान् संस्कारान् पूर्वानुभवोपचितसंस्काराख्यद्रव्याणि उपादानीकृत्य स्वेच्छामात्रेण निमित्तकारणेन सन्ध्यं सृष्ट्वा प्रदर्शयति तद्विषयकज्ञानमुत्पादयति, अन्येन साधनेन सृष्ट्वा न प्रदर्शयति सम्यगनभि- क्तस्वरूपत्वादिति । स्वशिरश्छेदादीनामसत्त्ववारणायाऽनादिमनोग्रहणम् । सूत्रार्थे स्मृतिंचाहुः- **ब्रह्माण्डे च-** [1]**मनोगतानिति** ॥ तदुक्तमिति शेषः ॥ ३ ॥

**सन्ध्यस्य बाह्यानुपादनकत्वे [illegible]क्तिरूप्यवत् पराऽभिमतमसत्त्वमेव प्राप्तमिति शङ्कावारणाय सूत्रम्-**

**॥ ॐ सूचकश्च हि श्रुतेराचक्षते च तद्विदः ॐ ॥ ४ ॥**

सन्ध्यमिति वर्तते । आवर्तते च । एकश्चो हेतौ । अन्यः समुच्चये । हिः प्रसिद्धौ । अयमर्थः- सन्ध्यं

---

१. **मनोगतानिति** ॥ जीवमनोगतसंस्कारोपादानकानर्थान् । यद्वा संस्कारानुपादानीकृत्य सृष्टानिति शेषः । प्रदर्शयतीति यत्, स प्रदर्शनं ज्ञानमर्थश्च स्वप्न इति गीयते । यज्जाग्रत्त्वं जाग्रदवस्थायामनुभूतपदार्थैरकत्वं तस्य यतोऽन्यथात्वं बाध्यत्वमतः तत्प्रतीतिः भ्रान्तिः । सा भ्रन्तिः तत्कृता अन्यथात्वकृता ईशकृता वा । नान्यसाधनजं सन्ध्यमिति शेष इत्यर्थः । शिष्टं स्पष्टम् ॥ ३ ॥

**सूचको** भाविशुभाशुभज्ञापकं **श्रुतेः** 'यदा कर्मसु काम्येषु' इति श्रुतेः । **हि च** लोकप्रसिद्धसूचकत्वानुभवाच्च । च यतः तद्विदः स्वाप्नपदार्थप्रयोजनविदो व्यासादयः **आचक्षते** 'यद्वाव ब्राह्मणो ब्रूयात्' इति स्मृत्या सन्ध्यं सूचकत्वेनाहुरतश्चेति ।। तस्मात्सन्ध्यं सत्यमिति भावः ।।

**साधनान्तराभावेऽपि भावाभावसूचकत्वेन चेश्वरो दर्शयति ।**

**'यदा कर्मसु काम्येषु स्त्रियं स्वप्नेऽभिपश्यति ।**
**समृद्धिं तत्र जानीयात्तस्मिन् स्वप्ननिदर्शने ।।'(छा.४.२.९) इत्यादिश्रुतेः ।**

**हिशब्दाद्दर्शनाच्च ।**

**'यद्वाऽपि ब्राह्मणो ब्रूयाद्देवता वृषभोऽपि वा ।**
**स्वप्नस्थमथवा राजा तत्तथैव भविष्यति ।।'**

**इत्याद्याचक्षते च स्वप्नविदो व्यासादयः ।।**

**।। इति सन्ध्याधिकरणम् ।। १ ।।**

**भा.** ।। सूत्रं विवृण्वते- **साधनान्तरेति** ।। अन्तरं बाह्यं विशेषणस्य परिनिपातः बाह्यसाधनजन्यत्वाभावेऽपीत्यर्थः । **भावाभावसूचकत्वेन-** हेतौ तृतीया, हेतुः फलम् । शुभाशुभफलसूचकत्वार्थमित्यर्थः । सन्ध्यं सृष्टेति वर्तते । उक्तार्थेमानमाहुः- [1]**यदेति** ।। **हिशब्दादिति** ।। सूचितादिति शेषः । **दर्शनाच्च** - सूचकत्वाऽनुभवाच्च । स्मृतिमप्याहुः- [2]**यद्वेति** ।। **आचक्षत इति** ।। यतोऽत इति शेषः । यतो व्यासादय आचक्षतेऽत इत्यर्थः । सर्वत्र पञ्चम्यर्थो ज्ञाप्यत्वम् । सूचकत्वेऽन्वेति ।। अयंभावः- जन्यवस्तुनः सत्यत्वे बाह्योपादानकत्वं निमित्तं न, तथा सति अन्तःकरणोपादानकसुखादेरसत्त्वाऽपत्तेः किन्तु प्रमाणमेव । प्रकृते च सन्ध्यं सत्यं सूचकत्वात् वीणाध्वन्यादिवदित्यनुमानमस्तीति । असतः सूचकत्वनिराकरणं तु आकरग्रन्थे स्पष्टम् ।।४अ. १।।

**।। इति सन्ध्याधिकरणम् ।। १ ।।**

---

१. **यदेति** ।। (छा.४.२.९) काम्येषु कर्मसु क्रियमाणेषु यदा यदि स्वप्ने स्त्रियमभिपश्यति पुरुषः तत्र तर्हि तस्मिन् स्वप्ननिदर्शने जाते सति स्वस्य समृद्धिं यशोलाभं जानीयादित्यर्थः ।।

२. **यद्वावेति** ।। ब्राह्मणो, देवता, वृषभो देवश्रेष्ठो वा, राजा वा स्वप्नस्थं स्वप्नावस्थापन्नं पुरुषं प्रति यत् कार्यादिकं ब्रूयात् तद्वचनं तथैव तथ्यमेव भविष्यति भवेदित्यर्थः ।। ४ ।। अ.१ ।।

## २. पराभिध्यानाधिकरणम्

**(स्वप्नपदार्थस्य अदर्शनमपि परमात्माधीनमेव)**

अत्र नये स्वप्रतिरोधायकत्वमहिमवर्णनम् । सङ्गतिः पूर्वनयवत् । स्वप्रतिरोधायकत्वं विषयः । हर्यधीनं नवेति सन्देहः । सर्वस्य तदधीनत्वोक्तिः विशेषानुक्तिश्च तद्बीजम्, नेति पूर्वपक्षः ॥ (बाह्यार्थज्ञानादेव स्वप्रतिरोधानं भवति । तस्य तदज्ञानकृतत्वात् ।)

**॥ ॐ पराभिध्यानात्तु तिरोहितं ततो ह्यस्य बन्धविपर्ययौ ॐ ॥ ५ ॥**

सन्ध्यमिति वर्तते । अयमर्थः- **हि** यस्मात् , **ततः** विष्णुतः **अस्य** जीवस्य **बन्धविपर्ययौ** संसारतद्विपरीतमोक्षौ भवतः अतः, **पराऽभिध्यानात्तु** ईश्वरेच्छात एव सन्ध्यं **तिरोहितं** लीनं भवति न तु ज्ञानेनेति ॥ अयं भावः=- यथा बन्धमोक्षयोरज्ञानज्ञाननिमित्तकत्वेऽपि न जीवाधीनत्वं, किन्तु भगवदधीनत्वमेव,तथा स्वप्नप्रबोधयोरपि बाह्यार्थाज्ञानज्ञाननिमित्तकत्वेऽपि न तदधीनत्वं ज्ञानाज्ञानयोरचेतनत्वेनाऽस्वातन्त्र्यादिति :

**बन्धमोक्षप्रदत्वात् स एव स्वप्नादितिरस्कर्ता ।**

**'स्वप्नादिबुद्धिकर्ता च तिरस्कर्ता स एव च ।**
**तदिच्छया यतो ह्यस्य बन्धमोक्षौ प्रतिष्ठितौ ॥' इति कौर्मे ॥**

॥ इति पराभिध्यानाधिकरणम् ॥

**भा.॥** सूत्रं व्याचक्षते- **बन्धमोक्षप्रदत्वादिति** ॥ स्वातन्त्र्यं विना दानायोगात्तयोर्विषये स्वातन्त्र्य-मस्तीति भावः । स्वाप्नविषये तु कैमुत्येन स्वातन्त्र्यं सिद्धमिति बोध्यम् । **स एव** विष्णुरेव । उक्तार्थे स्मृतिं चाहुः- [१]**स्वप्नादीति ॥ कौर्मे च इति ॥** तत्रेत्युक्तेश्चेत्यर्थः ॥ ५ ॥ अ.२ ॥

॥ इति पराभिध्यानाधिकरणम् ॥ २ ॥

---

१. **स्वप्नादीति ॥** स्वप्नपदार्थजाग्रत्पदार्थतद्बुद्धीनां कर्ता, तिरस्कर्ता स्वप्नादिबुद्धेः, यतः कारणात् अस्य जीवस्य तदिच्छया ईश्वरेच्छया बन्धमोक्षौ प्रतिष्ठितौ, अतः स्वप्नादीत्यन्वयः ॥ ५ ॥ अ.२ ॥

## ३. देहयोगाधिकरणम्

**(जाग्रदवस्था परमात्मनैव भवति)**

अत्र नये हरेः जाग्रत्प्रवर्तकत्वमहिमवर्णनम् । जाग्रदवस्था विषयः । शेषं प्राग्वत् ॥

**॥ ॐ देहयोगाद्वासोऽपि ॐ ॥ ६ ॥**

पराऽभिध्यानात्तु, अस्येति वर्तते । योगादिति पञ्चमी तृतीयार्थे । अयमर्थः- **अस्य** जीवस्य **देहयोगात्** देहाऽभिमानेन सह **वासोऽपि** स्थितिरपि जाग्रदवस्थापीति यावत् । **पराऽभिध्यानात्तु** विष्ण्विच्छात एव न कालत इति ॥

**देहयोगेन वासो जाग्रदपि तत एव ॥**

**'स एव जागरिते स्थापयति स स्वप्ने स प्रभुस्तुराषाट् स एको बहुधा भवति' इति कौण्ठरव्यश्रुतेः ॥**

॥ देहयोगाधिकरणम् ॥ ३ ॥

भा. ॥ सूत्रार्थमाहुः- **देहेति** ॥ **तत एव** - हरीच्छात एव । उक्तार्थे श्रुतिमाहुः- [1]**स एवेति** ॥ ६ ॥ अ.६ ॥

॥ इति देहयोगाधिकरणम् ॥ ३ ॥

१. **स एवेति** ॥ स ईश्वर एव जागरिते तादृशावस्थायां जीवमिति शेषः । **तुराषाट्** वैरिवेगसह इत्यर्थः । शिष्टं स्पष्टम् ॥ ६ ॥ अ. ३ ॥

## ४. तदभावाधिकरणम्

**(नाडीस्थपरमात्मनि जवस्य प्रवेशः सुषुप्तिः)**

**अत्र नये विष्णोः सुप्तप्राप्यत्वमहिमलाभाय सुप्तिस्वरूपवर्णनम् । सङ्गतिः पूर्ववत् । सुप्तिर्विषयः । भगवति भवति नाडीषु वेति संशयः , श्रुतिविगानं तद्बीजम् । भगवत्येवेति पूर्वपक्षः ॥**

### ॥ ॐ तदभावो नाडीषु तच्छ्रुतेरात्मनि ह ॐ ॥ ७ ॥

**अस्येति** वर्तते । अयमर्थः- **अस्य** जीवस्य **तदभावः** तयोर्जाग्रत्स्वप्नयोरभावरूपा सुप्तिः **नाडीषु** आत्मनि नाडीस्थे विष्णौ भवति । **तच्छ्रुतेः** तयोः नाडीसुप्तत्वात्मसुप्तत्वयोः 'आसु नाडीषु' इति श्रुतौ, 'सता सोम्य तदासम्पन्नः' इति श्रुतौ च, श्रवणात् । तदैव सुखभोगस्य युक्तत्वादिति ॥ यद्वा-तयोरभावो यस्मिन्निति तदभावः सुप्तिः, शेषं पूर्ववत् । नाडीस्थे इत्येव वक्तव्ये नाडीष्वित्युक्तिः 'आसु नाडीषु' इति श्रुतिसङ्ग्रहार्था सुप्तिरिति वक्तव्ये तदभाव इत्युक्तिः सुप्तिस्वरूपबोधनार्था ॥

**जाग्रत्स्वप्नाभावः सुप्तिर्नाडीस्थे परमात्मनि । 'आसु तदा नाडीषु सुप्तो भवति' । 'सता सोम्य तदा सम्पन्नो भवति' (छा.६.८.१) (छा.६.८.३) इति श्रुतेः ॥ ७ ॥**

॥ इति तदभावाधिकरणम् ॥

**भा.॥** तदभाव इति सौत्रपदस्य तत्पदार्थविवरणपूर्वकमनुवादः- **जाग्रत्स्वप्नाभाव इति** ॥ तस्यार्थ कथनं- **सुप्तिरिति** ॥ **परमात्मनीति** ॥ भवतीति शेषः । नाडीसुप्तावात्मनि सुप्तौ च श्रुती आहुः- [१]आसु नाडीष्वित्यादि ॥ ७ ॥ अ.४ ॥

॥ इति तदभावाधिकरणम् ॥ ४ ॥

---

१. **आस्विति** ॥ (छा.८.६.३.) पूर्वं प्रकृतो जीवः तदा उपसंहृतेन्द्रिय व्यापारपूर्वकस्वरूपसुखानुभवकाले आसु नाडीषु सुषुम्नाख्यां नाडीं, पुरुषभेदेन सुषुम्नानाडीबाहुल्याद्बहुवचनम्. सुप्तः प्राप्तो भवतीत्यर्थः । **सतेति** ॥ (छा.६.८.१) हे सोम्य एष पुरुषः **तदा** सुप्तिकाले **सता** परमात्मना **सम्पन्नः** सङ्गतो भवतीत्यर्थः ॥ ७ ॥

## ३. देहयोगाधिकरणम्

**(जाग्रदवस्था परमात्मनैव भवति)**

अत्र नये हरेः जाग्रत्प्रवर्तकत्वमहिमवर्णनम् । जाग्रदवस्था विषयः । शेषं प्राग्वत् ॥

**॥ ॐ देहयोगाद्वासोऽपि ॐ ॥ ६ ॥**

पराऽभिध्यानात्तु, अस्येति वर्तते । योगादिति पञ्चमी तृतीयार्थे । अयमर्थः- **अस्य** जीवस्य **देहयोगात्** देहाऽभिमानेन सह **वासोऽपि** स्थितिरपि जाग्रदवस्थापीति यावत् । **पराऽभिध्यानात्तु** विष्णिवच्छात एव न कालत इति ॥

**देहयोगेन वासो जाग्रदपि तत एव ॥**

**'स एव जागरिते स्थापयति स स्वप्ने स प्रभुस्तुराषाट् स एको बहुधा भवति' इति कौण्ठरव्यश्रुतेः ॥**

॥ देहयोगाधिकरणम् ॥ ३ ॥

भा. ॥ सूत्रार्थमाहुः- **देहेति** ॥ **तत एव** - हरीच्छात एव । उक्तार्थे श्रुतिमाहुः- [1]**स एवेति** ॥ ६ ॥ अ.६ ॥

॥ इति देहयोगाधिकरणम् ॥ ३ ॥

---

१. **स एवेति** ॥ स ईश्वर एव जागरिते तादृशावस्थायां जीवमिति शेषः । **तुराषाट्** वैरिवेगसह इत्यर्थः । शिष्टं स्पष्टम् ॥ ६ ॥ अ. ३ ॥

## ४. तदभावाधिकरणम्

**(नाडीस्थपरमात्मनि जवस्य प्रवेशः सुषुप्तिः)**

**अत्र नये विष्णोः सुप्तप्राप्यत्वमहिमलाभाय सुप्तिस्वरूपवर्णनम् । सङ्गतिः पूर्ववत् । सुप्तिर्विषयः । भगवति भवति नाडीषु वेति संशयः , श्रुतिविगानं तद्बीजम् । भगवत्येवेति पूर्वपक्षः ॥**

### ॥ ॐ तदभावो नाडीषु तच्छ्रुतेरात्मनि ह ॐ ॥ ७ ॥

**अस्येति** वर्तते । अयमर्थः- **अस्य** जीवस्य **तदभावः** तयोर्जाग्रत्स्वप्नयोरभावरूपा सुप्तिः **नाडीषु** आत्मनि नाडीस्थे विष्णौ भवति । **तच्छ्रुतेः** तयोः नाडीसुप्तत्वात्मसुप्तत्वयोः 'आसु नाडीषु' इति श्रुतौ, 'सता सोम्य तदासम्पन्नः' इति श्रुतौ च, श्रवणात् । तदेव सुखभोगस्य युक्तत्वादिति ॥ यद्वा-तयोरभावो यस्मिन्निति तदभावः सुप्तिः, शेषं पूर्ववत् । नाडीस्थे इत्येव वक्तव्ये नाडीष्वित्युक्तिः 'आसु नाडीषु' इति श्रुतिसङ्ग्रहार्था सुप्तिरिति वक्तव्ये तदभाव इत्युक्तिः सुप्तिस्वरूपबोधनार्था ॥

**जाग्रत्स्वप्राभावः सुप्तिर्नाडीस्थे परमात्मनि । 'आसु तदा नाडीषु सुप्तो भवति' । 'सता सोम्य तदा सम्पन्नो भवति' (छा.६.८.१) (छा.६.८.३) इति श्रुतेः ॥ ७ ॥**

॥ इति तदभावाधिकरणम् ॥

**भा.॥** तदभाव इति सौत्रपदस्य तत्पदार्थविवरणपूर्वकमनुवादः- **जाग्रत्स्वप्नाभाव इति** ॥ तस्यार्थ कथनं- **सुप्तिरिति** ॥ **परमात्मनीति** ॥ भवतीति शेषः । नाडीसुप्तावात्मनि सुप्तौ च श्रुती आहुः-[१]आसु नाडीष्वित्यादि ॥ ७ ॥ अ.४ ॥

॥ इति तदभावाधिकरणम् ॥ ४ ॥

---

१. **आस्विति** ॥ (छा.८.६.३.) पूर्वं प्रकृतो जीवः तदा उपसंहृतेन्द्रिय व्यापारपूर्वकस्वरूपसुखानुभवकाले आसु नाडीषु सुषुम्नाख्यां नाडीं, पुरुषभेदेन सुषुम्नानाडीबाहुल्याद्बहुवचनम्, सुप्तः प्राप्तो भवतीत्यर्थः । **सतेति** ॥ (छा.६.८.१) हे सोम्य एष पुरुषः **तदा** सुप्तिकाले **सता** परमात्मना **सम्पन्नः** सङ्गतो भवतीत्यर्थः ॥ ७ ॥

## ५. प्रबोधाधिकरणम्

**(ब्रह्मैव सुप्तपुरुषं प्रबोधयति)**

**अत्र नये सुप्तप्रबोधकत्वमहिमवर्णनम् । सङ्गतिः पूर्ववत् । सुप्तप्रबोधकत्वं विषयः । हर्यधीनं न वेति संशयः । सर्वस्य तदधीनत्वोक्तिः विशेषानुक्तिश्च तद्बीजम् । नेति पूर्वपक्षः ॥ १- सू.अ. ॥**

### ॥ ॐ अतः प्रबोधोऽस्मात् ॐ ॥ ८ ॥

अस्य, ह, तच्छ्रुतेरिति वर्तते । अयमर्थः- **अतः** नाडीस्थपरमात्मनि सुप्तत्वात् **अस्य** जीवस्य **प्रबोधः** सुप्तेरुत्थानम् **अस्माद्ध** परमात्मत एव भवति, **तच्छ्रुतेः** 'एष एव सुप्तम्' इति हरेरेव प्रबोधकत्वश्रवणात् न भेरीताडनादिनेति ॥

**यतस्तस्मिन् सुप्तिः । 'एष एव सुप्तं प्रबोधयत्येतस्माज्जीव उत्तिष्ठत्येष प्रमातैष परमः' इति हि कौण्डिन्यश्रुतिः ॥**

॥ इति प्रबोधाधिकरणम् ॥ ५ ॥

**भा.॥** सौत्रातः पदस्यार्थविवरणार्थमाहुः- **यत इति** ॥ यतस्तस्मिन् (हरौ) सुप्तिः अत इति सौत्रेणान्वयः । सूत्रार्थः स्पष्ट इति भावः । उक्तार्थे मानमाहुः- **'[१]एष एवेति** ॥ **श्रुतिरिति** ॥ अत्र मानमिति शेषः ॥ ८ ॥ अ.५ ॥

॥ इति प्रबोधाधिकरणम् ॥ ५ ॥

---

१. **एष इति** ॥ **एष एव** परमात्मैव **एतस्मात्** परमात्मनः सकाशात् **प्रमाता** सुप्तप्रबेधक इत्यर्थः ॥ शिष्टं स्पष्टम् ॥ ८ ॥ अ.५ ॥

# ६. कर्मानुस्मृत्यधिकरणम्

**(सर्वेषां सर्वकालेष्वपि ब्रह्मैव स्वप्नादिकारणम्)**

अत्र नये सर्वावस्थानां विष्ण्वधीनत्वमहिमवर्णनम् । सङ्गतिः पूर्ववत् । अवस्था विषयः । सर्वेषामवस्था हर्यधीना उत केषांचिदवस्था, अथ सर्वेषां किञ्चित्कालिकी तदधीना वेति संशयः । अवस्था भगवदधीनेत्यस्योभयथासम्भवस्तद्बीजम् । केषाञ्चिदेवेति किञ्चित्कालिकीति च पूर्वपक्षः ॥

**॥ ॐ स एव च कर्मानुस्मृतिशब्दविधिभ्यः ॐ ॥ ९ ॥**

चः कदाचिदेव केषाञ्चिदेवेति पक्षान्तरनिरासे, अप्यर्थे च । तेन सदा सर्वेषां सर्वाऽवस्थाप्रेरक इति लभ्यते । **कर्म** धर्माऽधर्मौ, व्यापारसामान्यं वा । अयमर्थः- **स एव** विष्णुरेव सदा सर्वेषामपि सर्वावस्थाप्रेरको नत्वन्यः **कर्माऽनुस्मृतिशब्दविधिभ्यः**= कर्मणो भगवदधीनत्वेन 'एष ह्येव साधुकर्म' इति श्रुत्याऽवधारणात्, अनुस्मृतेः अनुसारि 'प्रदर्शक'स्त्विति स्मृतेः, अनुसारित्वं च स्पष्टं विवक्षितार्थ-बोधकत्वं, **शब्दात्** 'एषस्वप्रान्' इति श्रुतेः विधेः 'आत्मानमेव लोकमुपासीत' इति विधेरिति ॥ अन्यस्याऽपि प्रेरकत्वे अन्योऽप्युपास्यत्वेन विधीयेतेति भावः ॥

**न च केषाञ्चित् स्वप्नादिकर्ता न तु सर्वेषामिति । 'एष ह्येव साधुकर्म कारयति'(कौ.३.८) इति कर्मण्यवधारणात् । 'प्रदर्शकस्तु सर्वेषां स्वप्रादेरेक एव तु । परमः पुरुषो विष्णुस्ततोऽन्यो नास्ति कश्चन' इत्यनुसारिस्मृतेश्च ॥ 'एष स्वप्रान् (प्र)दर्शयत्येष प्रबोधयत्येष एव परम आनन्दः' इति च श्रुतिः ।**

**'आत्मानमेव लोकमुपासीत' (बृ.उ. ३.४.१५) इति च विधिः ॥ ९ ॥**

॥ इति कर्मानुस्मृत्यधिकरणम् ॥ ६ ॥

**भा.॥** पूर्वपक्षमाहुः- **नचेति** ॥ मन्तव्यमिति शेषः । कर्मणि श्रुतिमाहुः- [1]**एषहीति** ॥ कर्मणि-धर्मादौ । अवधारणादिति ॥ अन्यस्य स्वातन्त्र्यव्यावृत्तेरित्यर्थः । अनुस्मृतिमाहुः- [2]**प्रदर्शक-स्त्विति** ॥ शब्दपदार्थमाहुः- [3]**एषस्वप्रानिति** ॥ विधिमाहुः- [4]**आत्मानमेवेति** ॥ **च विधि-रिति** ॥ च यतः 'आत्मानमेव' इति विधिरस्ति अतश्चेत्यर्थः ॥ ९ ॥ अ.६ ॥

॥ इति कर्मानुस्मृत्यधिकरणम् ॥ ६ ॥

---

१. **एष ह्येवेति** ॥ (कौ.३.८) स्पष्टम् ॥ २. **प्रदर्शक इति** ॥ ३. **एष इति** ॥ स्पष्टम् ॥
४. **आत्मानमेवेति** ॥ (बृ.३.४.१५) व्या. (सं.१. पृ. ४६५) ॥ ९ ॥ अ.६ ॥

# ७. मुग्धप्राप्त्यधिकरणम्

**(जीवस्य परमात्मनि अर्धप्रवेशे मूर्च्छा सम्भवति)**

अत्र नये हरेः मोहावस्थास्थितजीवप्राप्यत्वसमर्थनम् । पूर्ववत्सङ्गतिः । मूर्छाऽवस्था विषयः । जीवस्य हरौ भवति अन्यत्र वेति संशयः । द्विविधाऽवस्था दर्शनं तद्बीजम् । अन्यत्रेति पूर्वपक्षः ॥

**॥ ॐ मुग्धेऽर्धसम्पत्तिः परिशेषात् ॐ ॥ १० ॥**

अस्याऽत्मनीति वर्तते । मुग्धेति भावे क्तः । अयमर्थः- **मुग्धे** मोहावस्थायाम् **अस्य** जीवस्य **आत्मनि विष्णौ अर्धसम्पत्तिः** अर्धप्रवेशः **परिशेषात्** मोहे प्रसक्तानां विदूरत्वसामीप्यप्रवेशार्धप्रवेशानां मध्ये आद्य त्रयाणामवस्थान्तरधर्मत्वेन व्यावृत्तावस्या एव परिशिष्टत्वादिति ।

**मोहावस्थायां परमेश्वरेऽर्धप्राप्तिर्जीवस्य ।**
**'हृदयस्थात्पराज्जीवो दूरस्थो जाग्रदेष्यति ।**
**समीपस्थस्तथा स्वप्नं स्वपित्यस्मिँल्लयं व्रजन् ॥**
**यत एवं त्रयोऽवस्था मोहस्तु परिशेषतः ।**
**अर्धप्राप्तिरिति ज्ञेयो दुःखमात्रप्रतिस्मृतेः' ॥ इति वाराहे ।**

**सोऽपि तत एवेति सिद्धम् ।**

**'मूर्च्छा प्रबोधनं चैव यत एव प्रवर्तते ।**
**स ईशः परमो ज्ञेयः परमानन्दलक्षणः' ॥ इति हि कौर्मे ।**

॥ इति मुग्धप्राप्त्यधिकरणम् ॥ ७ ॥

**भा.॥** सौत्रप्रतिज्ञांशं (मोहेत्यादिना) व्याख्याय हेत्वंशं व्याख्यातुं सूत्रार्थे स्मृतिमाहुः - '[1]**हृदयेति** ॥

---

१. **हृदयस्थादिति** ॥ यदा जीवः हृदयस्थात् परात् परमात्मानमपेक्ष्य दूरस्थोऽक्षिस्थो भवति तदा जाग्रत् जाग्रदवस्थाम् एष्यति । यदा समीपस्थः कण्ठदेशस्थः तथा तदा स्वप्नमेष्यति । यदा अस्मिन् परमात्मनि लयं प्रवेशं व्रजन् भवति तदा स्वपिति सुषुप्त्यवस्थां प्राप्तो भवति । यतः कारणात् त्रयः तिस्रोऽवस्था जाग्रदादयः एवं प्रसक्तदूरस्थत्वसमीपस्थत्वलयार्धप्राप्तिषु मध्ये दूरस्थत्वसमीपस्थत्वलयरूपा जाताः अतः कारणात् मोहो मोहावस्था परिशेषतः परिशिष्टत्वात् दुःखमात्रप्रतिस्मृतेः दुःखात्मककालमात्रानुसन्धानाद्धेतोः अर्धप्राप्तिः अर्धप्रवेशरूप इति ज्ञेय इत्यर्थः ॥

**इति वाराह इति ॥** तत्रेत्युक्तेः परिशेषादिति सूत्रेऽन्वयः ॥ ननु मोहे विष्णावर्धप्राप्तिरेवोक्ता न तु तस्य विष्ण्वधीनत्वमुक्तमत आहुः- **सोऽपीति ॥** मोहोऽपि तत एव विष्णुत एव भवति विष्ण्वधीन इति च ' स एव च कर्म'(३.२.९) इति सूत्रेण सिद्धमित्यर्थः । मोहस्य कारणान्तराजन्यत्वे स्मृतिमाहुः- **'मूर्छेति ॥ इति च कौर्म इति ॥** तत्रेत्युक्तेश्च सिद्धमित्यन्वयः ॥ १० ॥अ. ७ ॥

॥ इति **सम्पत्त्यधिकरणम्** ॥ ७ ॥

१. **मूर्छाप्रबोधनमिति ॥** समाहारद्वन्द्वोऽयम् ॥ स्पष्टम् ॥ १० ॥ अ. ७ ॥

## ८. न स्थानभेदाधिकरणम्

(जाग्रत्-स्वप्न-सुषुप्तिषु प्रवर्तकः विश्व-तैजस-प्राज्ञरूपी परमात्मा एक एव)

**स्थानापेक्षया परमात्मनोऽपि भेदादनुग्राह्यानुग्राहकभाव इत्यत आह–**

अत्र नये चक्षुरादिसर्वस्थानेऽवस्थाप्रेरकतया स्थितस्य विश्वादिरूपिणो हरेः परस्परमभेदसमर्थनम् । अन्यथा तत्र भक्तिर्न स्यादिति पूर्ववत्सङ्गतिः । विश्वादिरूपी विष्णुर्विषयः । परस्परमभिन्नो न वेति संशयः । घटादौ भेददर्शनमाकाशादावभेददर्शनं च तद्बीजम् । नेति पूर्वपक्षः ॥ पूर्वपक्षयन्ति- **स्थानाऽपेक्षयेति ॥** चक्षुरादिस्थानविशेषनिमित्तेनेत्यर्थः । आत्मनः- विश्वादिरूपिणो विष्णोः । अनुग्राह्याऽनुग्राहकभावः- नियम्यनियामकभावः ॥ स्यादिति शेषः ॥

**॥ ॐ न स्थानतोऽपि परस्योभयलिङ्गं सर्वत्र हि ॐ ॥ ११ ॥**

उभयस्वरूपनिषेधादेक एवेति लभ्यते ॥ श्रूयत इति शेषः । लिङ्गं स्वरूपम् । 'लिङ्गं स्वरूपमुद्दिष्टम्' इति वचनात् । अयमर्थः- **परस्य** विष्णोः स्थानतोऽपि चक्षुरादिस्थानविशेषादपि उभयलिङ्गमनेकस्वरूपं न । हि यतः **सर्वत्र** स्थानेषु एकमेवेति श्रूयते । 'सर्वेषु भूतेष्वेतमेव' इति श्रुत्या बोध्यतेऽत इति ॥ यद्यपि 'अर्भकौकस्त्वात्' (१.२.७) इत्यनेन सर्वत्र स्थितस्यैकस्वरूपत्वमुक्तं तथाप्यत्र प्रत्येकं स्थितस्य समग्रावयवत्वमुच्यत इति भेदः । स्वरूपमिति वाच्ये लिङ्गमित्युक्तिः स्थानभेद उभयत्वे लिङ्गं नेति ज्ञापनाय ॥

**स्थानापेक्षयाऽपि परमात्मनो न भिन्नं रूपम् ।**

**'सर्वेषु भूतेष्वेतमेव ब्रह्मेत्याचक्षते' (ऐ.आ.३.२.३) इति हि श्रुतिः ॥**

**'एकरूपः परो विष्णुः सर्वत्रापि न संशयः ।**
**ऐश्वर्याद्रूपमेकं च सूर्यवद्बहुधेयते ॥' इति हि मात्स्ये ॥**

**'प्रतिदृशमिव नैकधाऽर्कमेकं समधिगतोऽस्मि विधूतभेदमोहः' ॥**

**इति च भागवते ॥ ११ ॥**

भा.॥ (सूत्रं व्याचक्षते- **स्थानेति** ॥) उक्तार्थे श्रुतिमाहुः- [1]**सर्वेषु भूतेष्विति** ॥ समग्ररूपेणाऽनेक-स्थानगतत्वं कथं युज्यत इत्यत आहुः- [2]**एक इति** ॥ अत्रैव स्मृत्यन्तरमाहुः- [3]**प्रतिदृशमिति** ॥ **भागवत इति** ॥ हि यतः श्रुतिरस्ति अतः, मात्स्ये इत्युक्तेः, भागवते इत्युक्तेश्च, न भिन्नमिति सम्बन्धः ॥ ११ ॥

**उक्तमाक्षिप्य समादधत्सूत्रम्-**

**॥ ॐ न भेदादिति चेन्न प्रत्येकमतद्वचनात् ॐ ॥ १२ ॥ (इति)**

**पूर्वसूत्रं** वर्तते । **तच्छब्दः पूर्वपक्ष्यभिमतभेदपरः । अतत् अभेदः तस्य वचनं तस्मात् । अयमर्थः- स्थानतोऽपि परस्योभयलिङ्गं नेति न भेदात् 'कार्यकारणबद्धौ तौ'** (मां. २.१६) **इत्यादिश्रुत्या** भेदबोधनादिति चेन्न । **प्रत्येकम्** एकैकस्मिन् रूपे **सर्वत्र प्रतिपर्यायम् अतद्वचनात्** 'एष त आत्मा' इति, 'अयं वै' इत्यादि श्रुत्या **अभेदबोधनादिति** ॥

**'कार्यकारणबद्धौ ताविष्येते विश्वतैजसौ ।**
**प्राज्ञः कारणबद्धस्तु द्वौ तु तुर्ये न सिध्यतः ॥' (मा.उ.२.१६)**

---

१. **सर्वेष्विति** ॥ (ऐ. आ.३.२.३) सर्वेषु भूतेषु सुरनरादिदेहेषु तत्रापि चक्षुरादिस्थानेषु **एतं** परमात्मानमेव **ब्रह्म** पूर्णगुणमाचक्षते इत्यर्थोऽत्राभिमतः ॥

२. **एकरूप इति** ॥ **सर्वत्रापि** स्थाने **एकरूपः** अवतारादिभिर्गुणैश्चैकरूप एव अभिन्नरूप एवास्ति । **बहुधा** अनेकस्थानेषु सामग्र्येणैव अनेकधा स्थितम् **ईयते** ज्ञायते इत्यर्थः ॥ शिष्टं स्पष्टम् ॥

३. **प्रतिदृशमिति** ॥ 'तमिमम[illegible]हं शरीरभाजां हृदिहृदि विष्ठितमात्मकल्पितानाम्'(भा.१.९.४९) इति पूर्वार्धम् । **प्रतिदृशं** दृशंदृशं प्रति चक्षुरभिमानितया तन्नियामकत्वेन ऐश्वर्यवशात् **नैकधा** अनेकरूपेण स्थितम् **अर्कमिव** तमेकमेव समधिगच्छति ज्ञानी, तथा अहमपि **आत्मकल्पितानां** परमात्मसृष्टानां **शरीरभाजां** जीवानां **हृदिहृदि** प्रतिहृदयं **विष्ठितं** समग्ररूपेणैव विविधतया स्थितं **तमीश्वरम्** इममहं कृष्णम् **एकम्** एकत्वसङ्ख्याविशिष्टम् अभिन्नं **समधिगतोऽस्मि विधूतभेदमोहः** निर्गतावतारादिगुणादिभेदभ्रमोऽस्मीत्यर्थः । यद्वा प्रतिदृशं मां प्रति मां प्रत्ययं वर्तते इति नैकधा बहूनामाभिमुख्येन स्थितमर्कम् एकमेकमिव ईश्वरमपि अहमेकं समधिगतोऽस्मीत्यर्थः । न चास्मिन् पक्षे एकस्य सूर्यस्याऽनेकस्थानगतत्वं न प्रतीयत इति वाच्यम् । मां प्रति मां प्रतीत्यनेकधा प्रतीयमानस्यैकत्वविषये दृष्टान्त इत्यङ्गीकारेण सूर्यस्याऽनेकवृत्तित्वप्रतीतेरनावश्यकत्वात् ॥११॥

**इति भेदवचनान्नेति चेन्न। 'एष त आत्माऽन्तर्याम्यमृतः'(बृ.उ.५.७.३)। 'अयमेव स योऽयमात्मेदममृतमिदं ब्रह्मेदं सर्वम्'(बृ.उ.४.५.१)।**

**'अयं वै हरयोऽयं वै दश च सहस्राणि च बहूनि चानन्तानि च। तदेतद् ब्रह्म अपूर्वम् अनपरम् अनन्तरम् अबाह्यम् अयमात्मा ब्रह्म सर्वानुभूरित्यनुशासनम्' (बृ.उ. ४.५.१९) इति प्रत्येकमभेदवचनात् ॥ १२ ॥**

भा.॥ श्रुतिमुपन्यस्य सौत्रपूर्वपक्षमाहुः- [1]**कार्यकारणबद्धाविति** ॥ सिद्धान्तयन्ति- **नेति** ॥ पूर्वसूत्रोक्तमिति शेषः। [2]**एष त आत्मेति** ॥ एवमेकविंशतिकृत्वः श्रूयते [3]अयमेव स इति ॥ चतुर्दशकृत्वः श्रूयते। [4]**अयं वै इति** ॥ मूलरूपेणाभेदबोधनायेयम् ॥ १२ ॥

**भेदश्रुतेरभेदश्रुत्या बाधो न युक्तः अभेदश्रुतेः कतिपयरूपपरतयाप्युपपत्तेः। 'अयं वै' इति श्रुतावभेदस्य स्पष्टमप्रतीतेश्चेति शङ्कावारणाय सूत्रम्-**

---

१. **कार्यकारणेति** ॥ (मा.२.१६) कार्यमविद्याजन्यस्वातन्त्र्यादिविषयकभ्रमरूपा जाग्रदवस्था, एवंरूपा स्वप्नावस्था च, कारणमविद्या, विश्वः जाग्रदवस्थातत्कारणाविद्याबद्धः, तैजसः स्वप्नावस्था तत्कारणाविद्या-बद्धः, प्राज्ञः कारणबद्धः, अविद्यामात्रबद्धः, द्वावपि बन्धौ तुरीये तुर्याख्ये न सिद्ध्यतः न स्त इत्यर्थः ॥ पूर्वपक्षे बद्धत्वं नाम तद्बन्धवत्त्वमेव, सिद्धान्ते तु बन्धस्वामित्वमिति ज्ञेयम् ॥

२. **एष त इति** ॥ व्या.( १५५-पु.)

३. **अयमेव स इति** ॥ (बृ.४.५.१) 'यस्तेजोमयोऽमृतमयः पुरुषः' इति पूर्ववाक्ये तेजः पूर्णत्वनित्य-स्वरूपत्वपूर्णत्वगुणकः यः परमात्माऽभिहितः सोऽयम्। अयं क इति तत्राह- **य इति** ॥ अयं स एव यः पूर्वोक्तः परमात्मा सर्वगो हयशीर्षाख्यः इदं रूपममृतं नित्यमुक्तं सर्वमिदं जगत् ब्रह्म तदधीनमित्यर्थः।

४. **अयं वै इति** ॥ (बृ.४.५.१९) 'इन्द्रो मायाभिः पुरुरूप ईयते युक्ता ह्यस्य हरयः शता दश' इति ऋचमुदाहृत्य तद्व्याख्यानार्थमेतद्वाक्यं प्रवृत्तम्। **हरयो** हरिनामानः **दश** मत्स्याद्याः **अयं वै** मूलरूप्येव। चशब्दसूचितानि **शतानि** नारायणादीनि हरिनामकानि अयमेव, '**सहस्राणि** विश्वादीनि अयमेव, **बहूनि** परादीनि हरयः अयमेव, **अनन्तानि** अजितादीनि अयमेव, तत् प्रसिद्धम् **एतत्** रूपजातं **ब्रह्म** गुणपूर्णम् **अपूर्वम्** आनादि **अनपरम्** अन्तरावधिशून्यं नित्यमिति यावत्। **अनन्तरम्** अन्तर्विद्यमानवस्तुशून्यम् **अबाह्यं** बहिर्भूतवस्तुरहितं इदमेव सर्वस्माद्बाह्यं अन्तरं चेति यावत्। 'ब्रह्मायमात्मा सर्वानुभूः सर्वज्ञः' इति वेदानुवचनं वेदव्याख्यान-मित्यर्थः। पुनर्ब्रह्मेत्युक्तिस्तात्पर्यार्था ॥ यद्वा एतद्ब्रह्म एवं रूपम् 'अयमात्मा सर्वानुभूरित्यर्थः ॥ १२ ॥

**॥ ॐ अपि चैवमेके ॐ ॥ १३ ॥**

अपिरेवार्थे ॥ परस्येति वर्तते । पठन्तीति शेषः । अयमर्थः- **एके** शाखिनः **परस्य** विष्णोः **एवमपि** अभेदमेव चादनन्तरूपत्वम् । 'अमात्रोऽनन्तमात्रश्च' इत्यादिना पठन्तीति ॥

**एवमभेदेनैव । चशब्दादनन्तरूपत्वं चैके शाखिनः पठन्ति –**

**'अमात्रोऽनन्तमात्रश्च द्वैतस्योपशमः शिवः ।**
**ओङ्कारो विदितो येन स मुनिर्नेतरो जनः ॥' (मा.उ.४.७) इति ॥**

**अभेदेऽपि भेदव्यपदेशः स्थानभेदादैश्वर्ययोगाच्च युज्यते ।**

**ब्रह्मतर्के च–**

**'बद्धो बन्धादिसाक्षित्वाद्भिन्नो भिन्नेषु संस्थितेः ।**
**निर्दोषाद्वयरूपोऽपि कथ्यते परमेश्वरः ॥' इति ॥ १३ ॥**

॥ इति न स्थानभेदाधिकरणम् ॥ ८ ॥

**भा.॥** सूत्रं व्याकुर्वन्ति- **एवमिति ॥** एवमिति सौत्रपदानुवादेन अभेदेनैवेत्यर्थ उक्तः । अभेदेन सहैवानन्तरूपत्वं पठन्तीति सम्बन्धः । **च शब्दादिति ॥** समुच्चितमिति शेषः । एके इत्यनेन बोधित श्रुतिमाहुः- [1]**अमात्र इति ॥** कार्यकारणेति भेदवचनस्योपपत्तिमाहुः- **अभेदे इति ॥** युज्यत इत्यर्थे मानमाहुः- **ब्रह्मतर्के च-** [2]**बद्ध इति ॥** तत्रेत्युक्तेश्च युज्यत इति सम्बन्धः ॥ १३ ॥ अ.८ ॥

॥ इति न स्थानभेदाधिकरणम् ॥ ८ ॥

---

१.**अमात्र इति ॥** (मा. ४-७) **अमात्रो** भिन्नांशरहितः, मत्स्याद्यंशे स्वभेदो नास्तीति यावत् । परिमाणरहितो वा । **अनन्तमात्रः** अनन्तांशयुक्तः, अनेकरूपो वा । **द्वैतस्य** मिथ्याज्ञानस्य **उपशमो** नाशकः, **शिवः** सुखात्मकः, **ओङ्कारः** ओङ्कारवाच्यः, परमात्मा येन विदितः **स जनो** जीवो मुनिः नेतर इत्यर्थः ॥

२. **बद्ध इति ॥ परमेश्वरो** विष्णुः **निर्दोषाद्वयरूपोऽपि** निर्दोषोऽपि एकरूपोऽपि बन्धादिसाक्षित्वाद् बद्ध इति भिन्नेषु संस्थितेर्भिन्न इत्युच्यते इत्यर्थः ॥ १३ ॥ अ.८ ॥

## ९. अरूपाधिकरणम्

**(परमात्मा अप्राकृतज्ञानानन्दादिरूपवान्)**

**रूपवत्त्वादनित्यत्वमित्यतो वक्ति–**

अत्र नये विष्णोरप्राकृतरूपसमर्थनम् । तदभावे भक्तिर्न स्यादिति पूर्ववत्सङ्गतिः । यदर्थं वैराग्यमुक्तं सा भक्तिर्विषयः । कर्तव्या न वेति संशयः । द्विविधसाधनदर्शनं तद्बीजम् । न कर्तव्येति पूर्वपक्षः ॥ पूर्वपक्षमाहुः- **रूपवत्त्वादिति** ॥ 'यदा पश्यः पश्यते' इति, 'आदित्यवर्णम्' इत्यादिश्रुतिसिद्ध-रूपवत्त्वादित्यर्थः । **अनित्यत्वमिति** ॥ यत्र रूपवत्त्वं तत्राऽनित्यत्वं यथा देवदत्त इति व्याप्तेरिति भावः ॥

**॥ ॐ अरूपवदेव हि तत्प्रधानत्वात् ॐ ॥ १४ ॥**

तदिति भिन्नं पदं च । हिः श्रुतिसूचकः । अरूपवदिति मतुबन्तम् । अयमर्थः- **तत्** ब्रह्म **अरूपवदेव** प्राकृतदेहादिरूपरहितमेव **तत्प्रधानत्वात्** तेभ्यः प्रकृत्यादिभ्य उत्तमत्वात् **हि** 'अस्थूलमनणु' इत्यादिश्रुतेश्चेति ॥

**प्रकृत्यादिप्रवर्तकत्वेन तदुत्तमत्वान्नैव रूपवद्ब्रह्म । हिशब्दात् 'अस्थूलम् अनणु'(बृ.उ.५.८.८) इत्यादिश्रुतेश्च ॥**

**'भौतिकानि हि रूपाणि भूतेभ्योऽसौ परो यतः ।**
**अरूपवानतः प्रोक्तः क्व तदव्यक्ततः परे' ॥ इति च मात्स्ये ।**

भा.॥ सूत्रं व्याचक्षते- **प्रकृत्यादिप्रवर्तकत्वेनेति** ॥ इदं चोत्तमत्वोपपादकम् ॥ **रूपवदिति** ॥ प्राकृत-रूपवदित्यर्थः ॥ **हिशब्दादिति** ॥ सूचिताया इति शेषः । तामेव श्रुतिमाहुः- [1]**अस्थूलमिति** ॥ सूत्रार्थे स्मृतिं चाहुः- [2]**भौतिकानीति** ॥ **मात्स्ये इति** ॥ तत्रेत्युक्तेश्चेत्यर्थः । अन्वयः स्पष्टः ॥१४॥

---

१. **अस्थूलमिति** ॥ व्या. (सं.१, पृ. २१०)

२. भौतिकानीति ॥ **हि** यस्मात् **रूपाणि** शरीराणि **भौतिकानि** पञ्चभूतात्मकानि आव्यक्तिकानि च **यतश्च असौ** परमात्मा, **भूतेभ्यः**, **पर** उत्तमः **अतः** तस्मात् **अरूपवान्** तत्कार्यरूपरहितः प्रोक्तः । **अव्यक्ततः** प्रकृतितः परे तत्प्रवर्तकत्वेनोत्तमे ब्रह्मणि आव्यक्तिकं रूपं **क्व** कथं स्यादित्यर्थः ॥ १४ ॥

## ॥ ॐ प्रकाशवच्चावैयर्थ्यम् ॐ ॥ १५ ॥

तत्, तच्छ्रुतेः अरूपवदिति वर्तते । चो विलक्षणरूपवत्त्वादिति हेतोरन्यस्यापि समुच्चये । प्रकाशपदम् अन्धकारे प्रसिद्धसौरालोकादिविलक्षणे चक्षुरादिप्रकाशे सत्यपि, प्रकाशो नास्तीति व्यवहारपरम् । न वैयर्थ्यमिति छेदः । यथायथमावृत्तिविपरिणामौ, भावप्राधान्यं च । अयमर्थः- **तस्य विष्णोः अरूपत्वे च** प्राकृतरूपाऽभावेऽपि (तस्मात्) विलक्षणरूपवत्त्वात् **तच्छ्रुतेः** रूपवत्त्वपर 'यदा पश्यः' इत्यादिश्रुतेः **वैयर्थ्यम्** अप्रामाण्यं न तच्छ्रुतेश्च रूपाऽभावपरा'अस्थूलम्' इत्यादिश्रुतिरूपव्यवहारस्यापि न वैयर्थ्यं **प्रकाशवत्** प्रकाशस्येवेति ॥

**'यदा पश्यः पश्यते रुक्मवर्णम्' (मु.उ.३.१.३) ।**

**'स्यामाच्छबलं प्रपद्ये' (छा.उ.८.१३.१) । 'सुवर्णज्योतीः' (तै.उ.३.१०) इत्यादिश्रुतीनां च न वैयर्थ्यम् । विलक्षणरूपवत्वात् । यथा चक्षुरादिप्रकाशे विद्यमानेऽपि वैलक्षण्यादप्रकाशादिव्यवहारः ॥ १५ ॥**

भा. ॥ श्रुत्युपन्यासपूर्वं सूत्रं व्याचक्षते- **'यदा पश्य इत्यादि** ॥ **इत्यादीति** ॥ आदिना 'तस्यैतस्य नारायणस्य' इत्यादिश्रुतेः परिग्रहः । **विलक्षणरूपत्वादिति** ॥ तथा च सौन्दर्यादिकं सिद्धमिति भावः । ननु विलक्षणरूपत्वे कथमरूपत्वश्रुतेः प्रामाण्यमत आहुः- **यथेति** ॥ **वैलक्षण्यादिति** ॥ सौरप्रकाशादिविलक्षणत्वादित्यर्थः । **अप्रकाशादिव्यवहार इति** ॥ एवमरूपमित्यादिव्यवहारोऽपीति शेषः । वैलक्षण्यादिति वर्तते ॥ १५ ॥

**विष्णोर्विलक्षणरूपवत्त्वमसिद्धं मानाभावादिति शङ्कावारणाय सूत्रम्-**

## ॥ ॐ आह च तन्मात्रम् ॐ ॥ १६ ॥

तच्छब्दः'तद्गुणसारत्वात्' (२.३.२९) इत्यत्र प्रसक्तज्ञानानन्दादिपरः । तदेव तन्मात्रम् । च

---

१. **यदेति** ॥ व्या.(सं.१.पृ. १८४) **श्यामादिति** ॥ (छा.८.१३.१) **श्यामात्** श्यामरूपविशिष्ट हृदयस्थित-रूपोपासनान्तरं **शबलं** शबलवर्णयुक्तं चक्षुर्गतं विश्वाख्यं रूपं **प्रपद्ये** उपासे इत्यर्थः ॥ **सुवर्णेति** ॥ (तै. ३.७) **सुवर्णः** सुवर्णकान्तिमान् सुष्टुपरमानन्दरूपश्च परमात्मा **ज्योतिः** प्रेरको यस्य स मुक्त इत्यर्थः ॥ १५ ॥

इत्यर्थे । श्रुतिरित्याक्षिप्यते । रूपमिति प्रकृतम् । तस्येति पूर्वसूत्रे लब्धं वर्तते । अयमर्थः- श्रुतिः 'ऐकात्म्यप्रत्ययसारम्' इति 'आनन्दरूपमजरम्' इति च श्रुतिः **तस्य** विष्णोः रूपं **तन्मात्रं** ज्ञानानन्दाद्यात्मकमेव न तु प्राकृतमित्याहेति ॥ तथा च विलक्षणं रूपं सिद्धमिति भावः ॥

**वैलक्षण्यं चोच्यते रूपस्य विज्ञानानन्दमात्रत्वं 'ऐकात्म्यप्रत्ययसारम्' (मां.उ. २.७) इति ।**

**'आनन्दमात्रमजरं पुराणमेकं सन्तं बहुधा दृश्यमानम् ।**
**तमात्मस्थं येऽनुपश्यन्ति धीरास्तेषां सुखं शाश्वतं नेतरेषाम् ॥'**
**इति च चतुर्वेदशिखायाम् ॥** १६ ॥

भा. ॥ सूत्रं विवृण्वते- **वैलक्षण्यं चेति** ॥ श्रुती आहुः- **'ऐकात्म्यमित्यादि** ॥ सारमित्यत्र, चतुर्वेदशिखायां च, रूपस्य विज्ञानानन्दमात्रत्वरूपवैलक्षण्यमुच्यते इत्यर्थः ॥ १६ ॥

उक्तश्रुतौ ब्रह्मैवज्ञानानन्दादिमात्रं श्रूयते न तु मत्स्यरूपं ततश्च रूपित्वश्रुतिर्व्यर्थेति शङ्कावरणाय सूत्रम्-

**॥ ॐ दर्शयति चाथो अपि स्मर्यते ॐ ॥ १७ ॥**

तन्मात्रं, तस्य रूपं, श्रुतिरिति वर्तते । चापि शब्दौ समुच्चये । अथो इत्यर्थान्तरे । अयमर्थः- **श्रुतिः** 'आनन्दरूपममृतम्' इति श्रुतिः **तस्य** विष्णोः रूपं तन्मात्रमानन्दादिमात्रं **दर्शयति, अथो** तस्य रूपमपि शरीरमपि तन्मात्रं **स्मर्यते** 'शुद्धस्फटिकसंकाशम्' इति स्मृत्योच्यत इति ॥

**दर्शयति चाऽनन्दस्य रूपत्वं 'तद्विज्ञानेन परिपश्यन्ति धीरा आनन्दरूपममृतं यद्विभाति' (मु.३.२.२.८) इति ।**

---

१. **ऐकात्म्येति** ॥ (मा. २.१) **ऐकात्म्यम्** एकत्वात् प्रधानत्वात् **आत्मत्वात्** पूर्णत्वात् एकात्मा स्वार्थे ष्यत्र प्रत्ययः । ज्ञानरूपं सारमानन्दरूपमित्यर्थः । ऐकात्म्यप्रत्ययसारपदे द्वन्द्वः, कर्मधारयद्वयं वाऽस्तु । **आनन्द-मात्रमिति** ॥ **आनन्दमात्रम्** आनन्दैकस्वरूपम्, अजरं सदा दृढं, **पुराणम्** अनादि, **एकम्** उत्तमम्, **सन्तं** निर्दुष्टं, **बहुधा** विश्वाद्यात्मना **दृश्यमानम्, आत्मस्थं** देहस्थं, परमात्मानं **ये धीराः** ज्ञानिनः **अनुपश्यन्ति** साक्षात्कुर्वन्ति तेषां **शाश्वतं सुखं** मोक्षो भवतीत्यर्थः ॥ १६ ॥

**'शुद्धस्फटिकसङ्काशं वासुदेवं निरञ्जनम् ।**
**चिन्तयीत यतिर्नान्यं ज्ञानरूपादृते हरेः ॥' इति च मात्स्ये ॥**

**॥ इत्यरूपाधिकरणम् ॥ ९ ॥**

**भा.** ॥ सूत्रं व्याकुर्वन्ति- **दर्शयतीति** ॥ श्रुतिस्मृती आहुः- **'तद्विज्ञानेनेत्यादि** ॥ **विभातीति** ॥ इति श्रुतिरित्यर्थः । **मात्स्य इति** ॥ मात्स्ये इति स्मर्यत इति सौत्रेणाऽन्वयः । इह नये विचारितं रूपं देहाख्यं शुक्लादिरूपं चेति ज्ञेयम् ॥ १७ ॥ अ ९ ॥॥

**॥ इत्यरूपाधिकरणम् ॥ ९ ॥**

---

१. **तद्विज्ञानेनेति** ॥ (आ ४-९) **आनन्दरूपम्** आनन्दशरीरम्. **अमृतं** देहतोऽपि नाशरहितं **यत् विभाति** तद्ब्रह्म **विज्ञानेन** शास्त्रश्रवणादिजनितसाक्षात्कारेण **परिपश्यन्ति** विषयीकुर्वन्ति धीरा इत्यर्थः । **शुद्धेति** ॥ **शुद्धस्फटिकसङ्काशं** तद्वत् शुक्लवर्णं **परम्** उत्तमं **चिन्तयीत** ध्यायीत अन्यं ब्रह्मादिकं न चिन्तयीत परत्वेन न ध्यायीतेत्यर्थः । शिष्टं स्पष्टम् ॥ १७ ॥ अ.९ ॥

## १०. उपमाधिकरणम्

**(यथा सूर्यात् सूर्यप्रतिबिम्बः भिन्नः, तथा परमात्मनः जीवः भिन्नः)**

अत्र नये हरेः जीवाऽभेदनिरासः अभेदे स्वस्मिन्स्वस्य भक्त्यनुदयात् (पूर्ववत्) सङ्गतिः । भक्तिर्विषयः । युक्ता न वेति संशयः । द्विविधसाधनोपदेशस्तद्बीजम्, नेति पूर्वःपक्षः ॥

### ॥ ॐ अत एव चोपमा सूर्यकादिवत् ॐ ॥ १८ ॥

इति चेन्नास्येति वर्तते । चो भेद इति साध्यसमुच्चये । उक्तमिति शेषः । उपमीयत इति कर्मप्रत्ययान्तोपमापदं प्रतिबिम्बपरम्, भावप्रधानं च । यथायथमावृत्तिविपरिणामौ । अयमर्थः- अतः अंशत्वचेतनत्वाऽनुमानात् अस्य जीवस्य **उपमा** विष्णुसादृश्यं तदभेद इति यावत् भवति । अनुमानप्रयोगस्तु- 'जीवो विष्णवभिन्नः तदंशत्वाच्चेतनत्वान्मत्स्यादिवत्' इति चेन्न । अस्य जीवस्य भेद एव प्रतिबिम्बत्वात्सूर्यकादिवत् सूर्यादिप्रतिबिम्बस्य सूर्यादितो भेदवदिति ॥ यद्वा- **अत एव** जीवस्य स्वरूपांशत्वे मत्स्यादिवज्ज्ञानाद्यैश्वर्यापातादेव उपमात्वं प्रतिबिम्बत्वमुक्तं 'रूपंरूपम्' इत्यादिश्रुतौ । अतः प्रतिबिम्बत्वात् अस्य जीवस्य **भेद एव सूर्यकादिवत्** इत्यर्थः । प्रतिबिम्बत्वानुमानेनांऽशत्वानुमानस्याप्रतिबिम्बत्वमुपाधिरित्युक्तो भवति । अत एव भिन्नत्वाधीनत्वसादृश्यैरेव **उपमा** प्रतिबिम्बतोक्ता नोपाध्यधीनत्वादिनेति ॥

**यस्मादेवं परमेश्वरस्वरूपाणां मिथो न कश्चिद्भेदोऽत एव सादृश्याज्जीवस्यापि तथा स्यादिति तस्य प्रतिबिम्बत्वमुक्त्वा चशब्देन भेदं दर्शयति ॥**

**'रूपं रूपं प्रतिरूपो बभूव' (बृ.उ.४.५.१५) ।**

**'बहवः सूर्यका यद्वत्सूर्यस्य सदृशा जले ।**
**एवमेवाऽत्मका लोके परात्मसदृशा मताः ॥' इत्यादि ॥**

**अत एव भिन्नत्वतदधीनत्वसादृश्यैरेव सूर्यकाद्युपमा नोपाध्यधीनत्वादिना ॥ १८ ॥**

॥ इति उपमाधिकरणम् ॥

**भा.॥** सूत्रार्थमाहुः- **यस्मादिति** ॥ एवमिति स्वपदस्य व्याख्यानं भेद इत्यन्तम् । **रूपाणां**= मत्स्यादीनाम् । **सादृश्यात्** - मत्स्यादिसादृश्यात् । **तथा**- विष्णवभेदः । **इतीति** ॥ इति

एतच्छङ्कापरिहारार्थमित्यर्थः । **तस्य=** जीवस्य । **प्रतिबिम्बत्वं-** प्रतिबिम्बत्वहेतुमुपमापदेनोक्त्वा सूर्यकादिवदित्यनेन सूचयित्वा वा । **भेदं** साध्यभूतं भेदं सूचयति सूत्रकार इति शेषः । जीवस्य प्रतिबिम्बत्वे मानमाहुः- '[1]**रूपंरूपमित्यादि ॥ सदृशा इतीति ॥** 'रूपं रूपम्' इति वचनं, 'परमात्मसदृशा' इति वचनं च, प्रतिबिम्बत्वं दर्शयतीति सम्बन्धः । ननु प्रतिबिम्बस्योपाध्यधीनत्वेन उपाधेश्चानित्यत्वाज्जीवोऽप्यनित्यः स्यात्, किञ्च बिम्बप्रतिबिम्बयोरभेदेन प्रतिबिम्बत्वहेतुरभेदसाधक एवस्यादत आहुः- **अत एव भिन्नत्वेति ॥ सूर्यकाद्युपमा**- तदृष्टान्तसिद्धप्रतिबिम्बत्वम् । एव व्यावर्त्यं दर्शयन्ति- **नोपाधीति ॥** आदिना उपाधिनाशनाश्यत्वपरिग्रहः । यद्वा- यस्मादित्यादि-भाष्यमपि सिद्धान्त एव । तथाहि- **परमेश्वररूपाणामिति ॥** परमेश्वरस्येति शेषः । **भेदः-** ज्ञानैश्वर्यादिविशेषः । **अत एव** - विशेषाऽभावस्योक्तत्वादेव । **सादृश्यात्** - स्वरूपांशत्वे मत्स्यादिसाम्यापातादेव । **तथा-** मत्स्यादिवत् ज्ञानैश्वर्यादिकम् । इति तादृशज्ञानैश्वर्यादिप्रयोजक-स्वरूपांशत्वशङ्कापरिहारार्थम् । **प्रतिबिम्बत्वं** साध्यभूतम् । **उक्त्वेति ॥** तेन हेतुनेति शेषः ॥ अस्मिन् पक्षे युक्तिसिद्धार्थैव श्रुतिरिति ज्ञेयम् ॥ १८ ॥ अ.१० ॥

॥ **इत्युपमाधिकरणम्** ॥ १० ॥

---

१. **रूपं रूपमिति ॥** (बृ.४.५.१९) व्या. । **बहव इति ॥ जले** जलादौ **सूर्यकाः** तत्र प्रतिबिम्बिताः सूर्यशब्दवाच्याः यद्वत् यथा **सूर्यस्य** प्रसिद्धसूर्यस्य सदृशा मताः । **एवमेव** लोके प्रमिताः **आत्मका** ईशप्रतिबिम्बभूताः अमुख्यात्मानः परमात्मसदृशा मता इत्यर्थः ॥ १८ ॥ अ.१० ॥

## ११. अम्बुवदधिकरणम्

**(जैवज्ञानानन्दाद्यभिव्यक्त्यर्थं भक्तिरावश्यकी)**

अत्र नये भक्तेः फलं निरूप्यते। तदभावे भक्तिर्न स्यादिति पूर्ववत्सङ्गतिः। भक्तिर्विषयः। कर्तव्या नवेति संशयः। द्विविधसाधनदर्शनं तद्बीजम्, नेतिपूर्वपक्षः ॥ पूर्वपक्षमाहुः- **नित्यसिद्धत्वादिति ॥** नित्यं सत्त्वादित्यर्थः। **सादृश्यस्येति ॥** ईश्वरसादृश्यस्य नित्यसिद्धत्वाद्धेतोः नित्यानन्दज्ञानादेर्नित्यसिद्धत्वादित्यर्थः। यद्वा- नित्यज्ञानानन्दादेः ईश्वरसादृश्याऽभिन्न नित्यज्ञानादेर्नित्यसिद्धत्वादित्यर्थः। तस्यैव मोक्षत्वादिति भावः। **भक्तिज्ञानादिनेति ॥** आदिना प्रसादः तृतीया हेत्वर्थे। भक्तिज्ञाने आदी यस्येति बहुव्रीहिः। **प्रयोजनमिति ॥** तथा च भक्तिर्न कार्येति भावः ॥

**नित्यसिद्धत्वात्सादृश्यस्य नित्यानन्दज्ञानादेर्न भक्तिज्ञानादि प्रयोजनमित्यतो ब्रवीति–**

**॥ ॐ अम्बुवदग्रहणात्तु न तथात्वम् ॐ ॥ १९ ॥**

अम्बुवदिति 'तेन तुल्यं क्रियाचेद्वतिः' (पा.सू. ५.१.११५) इति सूत्रेण चन्द्रवन्मुखमित्यत्रेव क्रियासाम्यमादाय वतिः। सादृश्यं स्नेहसत्ताकत्वेन। अम्बुज्ञानोभयगतस्नेहयोरेकत्वं तु गुणत्वव्याप्यस्नेहत्वेन। उभयसाधारणस्नेहत्वस्याऽङ्गीकारात्। तच्च पदार्थसङ्ग्रहे स्पष्टम्। दृष्टान्ते स्नेहयुक्तत्वं स्वरूपसम्बन्धेन दार्ष्टान्तिके सामानाधिकरण्यसम्बन्धेनेति भेदः। तथा च अम्बुवत् स्नेहयुक्तं यद्ग्रहणं माहात्म्यज्ञानं तस्याभावात् भक्त्यभावादिति फलितम्। **तन्त्रदीपिकायां तु-** स्नेहात्मकाऽम्बुपदेन मानसस्नेहो लक्ष्यते इत्युक्तम्। तत्राऽम्बुपदेनेत्यस्याम्बुवत्पदेनेत्यर्थः। तदेवोक्तं भाष्ये **'अम्बुवत्स्नेहेन' इति ॥** अव्ययत्वाद् विभक्तेर्लुक्। यद्वा- अम्बुपदस्यैव लक्षणया स्नेहोऽर्थः। ततो मतुप्प्रत्ययः तत्र वत्वमार्षम्। स्नेहयुक्तत्वस्य ज्ञानेन सम्बन्धः। ज्ञानस्याभावेनेति भक्त्यभवादिति लभ्यते तुःसम्यगर्थे। अस्येति वर्तते। अभिव्यज्यत इति शेषः। अयमर्थः- **अस्य** जीवस्य **तथात्वं** नित्यज्ञानसुखादि तत्सादृश्यम् **अम्बुवदग्रहणात्** भक्त्यभावात् तु सम्यङ्नाभिव्यज्यते इति। नित्यज्ञानाद्यभिव्यक्त्यर्थं भक्त्यादिकमावश्यकमिति भावः। भक्त्यभावादिति वक्तव्ये अम्बुवदग्रहणादित्युक्तिः भक्तिस्वरूपबोधनार्था, स्नेहयुक्तज्ञानाभावादिति वक्तव्ये एवमुक्तिरम्बुस्थस्नेहस्येव भक्तिपदार्थस्नेहस्याऽपि समञ्जसत्वबोधनार्था ॥

**अम्बुवत्स्नेहेन। ग्रहणं ज्ञानम्। भक्तिं विना न तत्सादृश्यं सम्यगभिव्यज्यते।**

**'यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनूं स्वाम्' (कठ. २.२३) इति हि श्रुतिः ॥**

**'महित्वबुद्धिर्भक्तिस्तु स्नेहपूर्वाऽभिधीयते ।**
**तयैव व्यज्यते सम्यग्जीवरूपं सुखादिकम् ॥' इति पाद्मे ॥**

**॥ इत्यम्बुवदधिकरणम् ॥ ११ ॥**

भा. ॥ सूत्रं व्याचक्षते- **स्नेहेनेति** ॥ युक्तमिति शेषः । ग्रहणपदस्यार्थमाहुः- **ज्ञानमिति** ॥ पदार्थमुक्त्वा वाक्यार्थमाहुः- **भक्तिं विनेति** ॥ **तत्सादृश्यं** - नित्यसुखादि विष्णुसादृश्यम् । भक्तेर्मोक्षकारणत्वे मानमाहुः- [1]**यमिति** ॥ ननूक्तश्रुतौ तत्सादृश्यस्य भक्त्यभिव्यङ्ग्यत्वं, भक्तिस्वरूपं च , स्पुटं न प्रतीयते इति (शङ्कायाम्) उक्तार्थे स्पष्टस्मृतिमाहुः- [2]**महित्वबुद्धिरिति** ॥ **पाद्म इति** । यत इति श्रुतिरस्ति अतः, पाद्म इत्युक्तेश्च, नाऽभिव्यज्यत इति सम्बन्धः ॥ १९ ॥ अ. ११ ॥

**॥ इत्यम्बुवदधिकरणम् ॥ ११ ॥**

---

१. **यमेवैष इति ॥** (का.१-२-२३) भक्तिमतो जीवस्य **स्वां तनूं** जीवीयानन्दादिस्वरूपं **विवृणुते** प्रकाशयतीत्यर्थोऽत्राऽभिमतः ॥

२. **महित्वमिति ॥** स्नेहपूर्वा मानसस्नेहयुक्ता महित्वबुद्धिः विष्णुमाहात्म्यज्ञानमेव भक्तिरित्यभिधीयते इत्यर्थः । स्पष्टमन्यत् ॥ १९ ॥ अ.११ ॥

## १२. वृद्धिह्रासाधिकरणम्

### (साधनतारतम्यात् फलेऽपि तत्)

अत्र नये साधनभूतभक्त्यादेस्तारतम्यनिरूपणम् । अन्यथा तारतम्येन भक्त्यनुष्ठानं न स्यात् तथा च 'जिज्ञासा'नयोदाहृत 'यस्य देवेपरा' इति श्रुत्युक्तभक्तितारतम्यमयुक्तमिति तेन नयेन सङ्गतिः । भक्त्यादिसाधनं विषयः । भक्तेष्वनेकप्रकारं न वेति संशयः । उभयविधधर्मदर्शनं तद्बीजम् । नेति पूर्वपक्षः ॥

**॥ ॐ वृद्धिह्रासभाक्त्वमन्तर्भावादुभयसामञ्जस्यादेवम् ॐ ॥ २० ॥**

भक्तिज्ञानादेरिति प्रकृतम् । भक्तेष्वित्याक्षिप्यते । अस्तीति शेषः । उभयेति पृथक्पदम् । यथायथमावृत्तिविपरिणामौ । अयमर्थः- **भक्तिज्ञानादेः** साधनभूतभक्तिज्ञानादेः **वृद्धिह्रासभाक्त्वम्** आधिक्यन्यूनत्वं तारतम्यमिति यावत् । अस्ति **उभयेषाम्** उत्तमफलवतां ब्रह्मादीनाम्, अनुत्तमफलवतामस्मदादीनां च, **भक्तेष्वन्तर्भावात्** एवं भक्त्यादीनां तारतम्यस्वीकारस्यैव उभयान् ब्रह्मादीन्, अस्मदादींश्च, प्रति **सामञ्जस्यात्** ब्रह्मणि सामञ्जस्यापादकत्वात् उत्तमाधमफलदानप्रयुक्त-वैषम्यनैर्घृण्ययोरभावस्य सम्यगुपपन्नत्वादिति यावदिति ॥

**तस्य च भक्तिज्ञानादेर्वृद्धिह्रासभाक्त्वं विद्यते ।**

**ब्रह्मादीनामुत्तमानां सर्वेषां भक्तत्वेऽन्तर्भावात् ।**

**एवं भक्त्यादिविशेषाङ्गीकारादेवेश्वरस्य ब्रह्मादीनन्यान् प्रति च सामञ्जस्यं भवति ॥**

**'साधनस्योत्तमत्वेन साध्यं चोत्तममाप्नुयुः ।**
**ब्रह्मादयः क्रमेणैव यथानन्दश्रुतौ श्रुताः ॥' इति च ब्राह्मे ॥ २० ॥**

**भा.** ॥ सूत्रं व्याचक्षते- **तस्येति** ॥ साधनभूतस्येत्यर्थः । **भक्तत्वे इति** ॥ कुत्वं णत्वं षत्वमित्यादाविव स्वार्थे त्वप्रत्ययः । यद्वा- भक्तत्वे इति सप्तम्यर्थोऽभेदः अन्तर्भावोऽसाधारणधर्मः । भक्तत्वाभिन्नासाधारणधर्मत्त्वादित्यर्थः । एवं च भक्त्यादितारतम्यमनुभवसिद्धमित्युक्तं भवति ।

**सामञ्जस्यमिति** ॥ उक्ततारतम्यं युक्तिसिद्धमिति भावः । उक्तेऽर्थे आगममप्याहुः- [1]**साधनस्येति** ॥ **ब्राह्मे इति** ॥ यतस्सामञ्जस्यं भवति अतः, ब्राह्म इत्युक्तेश्च, विद्यत इत्यन्वयः ॥ २० ॥

फलतारतम्यं कस्मान्मानात्सिद्धमितिपृच्छति- **कुत इति** ॥ कस्मात्प्रमाणादित्यर्थः ॥ फलतारतम्यमिति शेषः ॥

**कुतः—**

**॥ ॐ दर्शनाच्च ॐ ॥ २१ ॥**

**तथात्वं, बृद्धिह्रासभाक्त्वमुभयेति वर्तते । यथायथं विपरिणामः । अयमर्थः- उभयेषां ब्रह्माद्युत्तमानाम्, अनुत्तमानां च, तथात्वे नित्यसुखादि भगवत्सादृश्ये वृद्धिह्रासभाक्त्वमस्ति दर्शनात्** 'अथाऽत आनन्दस्य मीमांसा भवति' इति श्रुतेः, चात् 'यथाभक्तिविशेष' इति स्मृतेश्चेति ॥

**'अथात आनन्दस्य मीमांसा भवति' (तै.२.८) इत्यारभ्य ब्रह्मपर्यन्तेषु सुखे विशेषदर्शनात् ॥**

**चशब्दात्स्मृतिः—**

**'यथा भक्तिविशेषोऽत्र दृश्यते पुरुषोत्तमे ।**
**तथा मुक्तिविशेषोऽपि ज्ञानिनां लिङ्गभेदने ॥' इति ॥ २१ ॥**

॥ इति वृद्धिह्रासाधिकरणम् ॥ १२ ॥

**भा.** ॥ श्रुत्युपन्यासपूर्वं सूत्रं व्याचक्षते- [2]**अथाऽत इति** ॥ **भवतीति** ॥ इत्यादिवाक्ये इत्यर्थः ।

---

१. **साधनस्येति** ॥ साधनस्य भक्त्यादिरूपमोक्षसाधनस्य क्रमेणोत्तमत्वेन तारतम्योपेतत्वेनेति यावत्, तेन क्रमेणैवोत्तमं साध्यं तत्साध्यमोक्षफलमपि आप्नुयुः ब्रह्मादयः । यथा येन क्रमेण आनन्दश्रुतौ 'अथाऽत आनन्दस्य' इति श्रुतौ आनन्दित्वेन श्रुता ब्रह्मादयः तेनैवेति पूर्वेणान्वयः ॥ २० ॥

२. **अथात इति** ॥ शाखान्तरीयपाठोऽयम् । तैत्तिरीये तु 'सैषानन्दस्य' इति (तै.२.१७) पठ्यते । अथ प्रमेयान्तरमारभ्यते । अतः फलवैचित्र्यहेतुभावात् आनन्दस्य मौक्तानन्दस्य मीमांसा विचित्रता तारतम्यमिति यावत् भवति । मनुष्योत्तमचक्रवर्त्यानन्दस्याऽनन्दतारतम्ये पूर्वावधित्वात् तद्वचनाय मुक्तचक्रवर्तिविशेषणान्याह- **युवेति** ॥ यो युवा विष्णुना युतः सन् गन्ता साधुयुवा साधुगुणोपेतः, आध्यायिकः अध्ययनफलभूत-

**आरभ्येति ॥** मानुषादिति शेषः । **विशेषदर्शनादिति ॥** तारतम्योक्तेरित्यर्थः । फलतारतम्यस्य भक्तीतरसाधनतारतम्येनापि सम्भवाद्भक्तेः साम्यमस्त्वित्यत आहुः- **चशब्दादिति ॥** समुच्चितेति शेषः । तां स्मृतिमाहुः- [२]**यथेति ॥ इतीति ॥** यत इति स्मृतिरस्ति अतश्चेत्यर्थः । अस्य अध्याहृतफलतारतम्यमित्यत्रान्वयः ॥ २१ ॥ अ.१२ ॥

**॥ इति वृद्धिह्रासाऽधिकरणम् ॥ १२ ॥**

---

मुक्तिमान्, आशिष्टः आसमन्तात् शं सुखमस्येति आशः अतिशयेनाशः आशिष्टः नित्यपूर्णसुखवान् । दृढिष्टः अतिशयेन दृढः, बलिष्टः अतिशयेन बली स्यात्, तस्य तादृशमुक्तियोग्यस्य मनुष्योत्तमचक्रवर्तिनः त्रेतायुगे सर्वेयं पृथिवी वित्तस्य वित्तेन पूर्णा स्यात् तदा तस्य यत् सुखं स्यात् भवति, सः तादृश आनन्दः मानुष इति षष्ठ्यर्थे प्रथमा । तस्य युवत्वादिगुणयुक्तस्य मानुषस्य मुक्तमनुष्योत्तमचक्रवर्तिन एक आनन्दो भवति । ते प्रत्येकं प्रसिद्धाः शतं शतसङ्ख्याकाः मानुषाः मुक्तमनुष्योत्तमचक्रवर्तिसम्बन्धिनो ये आनन्दाः, स तादृश आनन्दः । श्रोत्रियस्य वेदाध्ययनपूर्वकतदुक्तानुष्ठानफलवताम् । अकामहतस्य कामकृतोपद्रवशून्यानाम् । चो विशेषणसमुच्चये । अकामहतस्येति विशेषणबलात् उक्तानुष्ठानफलं मुक्तिरिति फलति । तथाचाकामहतत्व-समुच्चितश्रोत्रियत्ववतां मुक्तानामिति यावत् । मनुष्यगन्धर्वाणाम् एक आनन्दः, एवमुत्तरत्र 'ते ये शतम्' इत्यादेरर्थो बोध्यः । साक्षाद्देवप्रेष्या देव गन्धर्वाः, देवेष्वनाख्याता देवकुले जाता आजानजाः, चिरकालिक-(लीन)लोक एव लोको येषां ते चिरलोकलोकाः, ये बल्यादयः कर्मणा देवानपि देवत्वमपि यन्ति (यान्ति इति भाव्यम्) प्राप्नुवन्ति मध्यकाले देवत्वं प्राप्ता इति यावत् । ते कर्मदेवाः । देवानाम्, आदिसृष्टौ देवत्वं प्राप्तानां तत्त्वाभिमानिदेवानाम्, इन्द्रस्य दक्षप्रजेश्वरस्य, बृहस्पतेः पुरन्दरस्य, प्रजापतेः रुद्रस्य, ब्रह्मणः चतुर्मुखस्य, अत्र ब्रह्म न विष्णुः 'श्रोत्रियस्याकामहतस्य' इति विशेषणादित्यर्थः । शिष्टं समानम् ॥

२. **यथा भक्तीति ॥** अत्र संसारावस्थायां पुरुषोत्तमे तद्विषये यथा येन क्रमेण भक्तिविशेषो भक्त्यतिशयो दृश्यते ज्ञानिनां तथैव तेनैव क्रमेण तेषां लिङ्गभेदने लिङ्गशरीरभङ्गे जाते सति मुक्तिविशेषोऽपि मुक्तावानन्दव्यक्तिविशेषोऽपि दृश्यते भवतीत्यर्थः ॥ २१ ॥ अ.१२ ॥

## १३. प्रकृतैतावत्त्वाऽधिकरणम्

**(परमात्मनः पालनकर्तृत्वमप्यस्ति)**

**सृष्टिसंहारकर्तृत्वमेवास्य न पालकत्वं स्वतः सिद्धेरित्यत आह–**

अत्र नये हरेर्विश्वपालकत्वसमर्थनम्। तदभावे भक्तिर्न स्यादिति 'जन्म'नयेन सङ्गतिः, जगत्पालकत्वं विषयः। हरेर्युक्तं नवेति संशयः। गुणेषु युक्तत्वाऽयुक्तत्वदर्शनं तद्बीजम्। नेति पूर्वपक्षः॥ पूर्वपक्षयन्ति- **सृष्टीति। अस्य-** हरेः। **स्वतः-** यावत्संहारं जगत्स्थितेर्नान्तरीयकतया पालनं विनाऽपि तत्संभव इति भावः॥

**॥ ॐ प्रकृतैतावत्त्वं हि प्रतिषेधति ततो ब्रवीति च भूयः ॐ ॥ २२ ॥**

परो दर्शनादिति वर्तते। प्रथमया विपरिणम्यते। श्रुतिबलात्पालक इति लभ्यते। चः स्मृतिसमुच्चये च। अयमर्थः- **परः** परमात्मा पालकश्च हि यतः 'नैतावदेन' इति श्रुतिः। **प्रकृतैतावत्त्वम्** 'अस्येदेषासुमतिः' (ऋ. १०.३१.६) इत्यादिना प्रकृतम् एतावत्त्वं सृष्टिसंहारकर्तृत्वमात्रं **प्रतिषेधति** सृष्टिसंहारकर्तृत्वमात्रमस्य नेति निषेधं करोति ततः तदपेक्षया **भूयश्च** अधिकं फालनकर्तृत्वमपि **ब्रवीति** स्मृतिश्च 'सृष्टिं च पालनं चैव' इति स्मृतिरपि पालक इति ब्रवीति अत इति॥

**उक्तं सृष्टिसंहारकर्तृत्वमात्रं प्रतिषिध्य ततोऽधिकं ब्रवीति–**

**'नैतावदेना परो अन्यदस्त्युक्षा स द्यावापृथिवी बिभर्ति'**

**(ऋ.सं. १०.३१.८) इति।**

**चशब्दात्स्मृतिश्च–**

**'सृष्टिं च पालनं चैव संहारं नियमं तथा।**

**एक एव करोतीशः सर्वस्य जगतो हरिः॥' इति ब्रह्माण्डे॥ २२॥**

॥ इति पालकत्वाधिकरणम्॥ (प्रकृत्यधिकरणम्)॥ १३॥

**भा.**।। सूत्रं व्याचक्षते- **उक्तमिति** ।। **अधिकमिति** ।। पालनकर्तृत्वमित्यर्थः । सूत्रसूचितश्रुतिमाहुः- [1]**नैतावदेनेति** ।। **बिभर्तीति** ।। इति श्रुतिरित्यर्थः । **चशब्दादिति** ।। समुच्चितेति शेषः । तामेव स्मृतिमाहुः- [2]**सृष्टिं चेति** ।। **ब्रह्माण्डे इति** ।। इति स्मृतिश्चाधिकं ब्रवीतीत्यन्वयः । अत्र प्रतिषेधतीत्यंशो न सम्बध्यते (स्मृतौ निषेधाश्रवणात्) ।। २२ ।। अ. १३ ।।

**।। इति प्रकृतैतावत्त्वाधिकरणम् ।। (प्रकृत्यधिकरणम्) ।। १३ ।।**

---

१. **नैतावदिति** ।। (ऋ.१०.३१.८) 'अस्येदेषा सुमतिः पप्रथानाऽभवत्पूर्व्या भूमना गौः । अस्य सनीला असुरस्य योनौ समान आभरणे बिभ्रमाणाः । किं स्विद्वनं क स वृक्ष आस यतो द्यावापृथिवी निष्टतक्षुः । सन्तः स्थाने अजरे इत ऊती अहानि पूर्वीरुषसोऽजरन्तः । नैतावदेनापरो अन्यदस्त्युक्षा स द्यावापृथिवी बिभर्ति । त्वचं पवित्रं कृणुत स्वधावान् यदीं सूर्यं न हरितो वहन्ति' इति सम्पूर्णमन्त्रः । अयमर्थः- **अस्य** इत् विष्णोः सकाशादेव **एषा सुमतिः** ब्रह्मादिसुबुद्धिः **पप्रथाना** अतिशयेन प्रथाना प्रथमा अभवत् । **भूमना** पूर्णेन विष्णुना **पूर्व्या** पूर्वतना **गौः** द्यावापृथिवी **अभवत्** अभूताम्, **अस्य** विष्णोर्भूम्ना महिम्नैव सुमतिः गौश्चाभवदिति वा, **असुरस्य** असुषु रमणाद्धेतोरसुरत्वात्प्राणरूपत्वाद्रमणीयत्वाच्च असुरशब्दितस्य वायोः **योनौ** भार्यायां **समाने** एकस्मिन् **आभरणे** गर्भे **बिभ्रमाणाः** भ्रियमाणा देवा अस्य सकाशादेव सनीलाः लयसहिता भवन्ति । सनीला इत्यत्र वर्णविपर्ययः, अन्यथेति शेषः । अन्यथा भगवन्महिम्नैव सृष्ट्यादिकमनङ्गीकृत्याऽन्यतस्तदङ्गीकारे वनं नर्माणेऽधिष्ठानादिरूपवनादिकं वृक्षो वा किं स्विदासीत् किं वाऽऽसीत् न किमपि न कोपीत्याक्षेपः । किञ्च वनं किंस्वित् कस्माज्जातः ? स वृक्षः वनादन्यत्र विद्यमान एकैको वृक्षः क आस स कस्माज्जात इति प्रश्नः । उत्तरमाह- **यत इति** ।। **यतो** यस्माद्धरेः सर्वे लोकाः तथाश्च निष्टतक्षुः समुत्पन्नाः, यस्मादेव **सन्तः स्थाने** सम्यक्स्थायिन्यौ अजरे जराशून्ये दृढे द्यावापृथिव्यौ इत ऊती अस्मादेव ऊती समुद्भूतज्ञानादिके अहानि **पूर्वीः** पूर्व्य उषसश्च **अजरन्त** जीर्णा अभवन् । **एना** अनेन ईश्वरेण जायमानं कार्यम् **एतावदेव** सृष्टिसंहाररूपमात्रं न भवति किन्तु **अन्यदप्यस्ति** स परमात्मा **उक्षा** भक्ताभिलषितसेचकः, द्यावापृथिवी बिभर्ति, धत्ते, पुष्णाति च, **स्वधावान्** पूर्णसुखो भगवान् **त्वचं** शरीरं **पवित्रं** कृणुत करोति, **यत्** येन पवित्रीकरणेन **हरितो** दिशः सूर्यं न सूर्यमिव वहन्ति प्रजाः भगवन्तम् अक्लेशेनैवेति शेषः इति ।।

२. **सृष्टिं चेति** ।। स्पष्टम् ।। २२ ।। अ.१३ ।।

## १४. अव्यक्ताधिकरणम्

**(परमात्मा अव्यक्तोऽपि स्वप्रसादाद् व्यक्तो भवति)**

**परमात्मापरोक्ष्यं च तत्प्रसादादेव न जीवशक्त्येति वक्तुमुच्यते–**

अत्र नये हरेरुपलब्ध्यविषयत्वसमर्थनम् । तदभावे भक्तिर्न स्यादिति (पूर्ववत्) सङ्गतिः । भक्तिर्विषयः । कर्तव्या नवेति सन्देहः । द्विविधव्यापारदर्शनं तद्बीजम् । नेति पूर्वपक्षः ॥ **प्रसादादेवेति** ॥ भक्तिजन्यप्रसादादेवेत्यर्थः । **वक्तुम्**- 'अतोऽनन्तेन तथा हि लिङ्गम्' (३.२.२७) इति सूत्रे वक्तुम् । **उच्यते**- इह सूत्रे अव्यक्तत्वमुच्यत इत्यर्थः ॥

**॥ ॐ तदव्यक्तमाह हि ॐ ॥ २३ ॥**

तदव्यक्तमित्यावर्तते । दर्शनमिति वर्तते । अयमर्थः- **तत्** ब्रह्म **अव्यक्तम्** अप्रत्यक्षं **हि** यतः दर्शनम् 'अरूपमक्षरं ब्रह्म' इति श्रुतिः तदव्यक्तमाहाऽत इति ॥

**अव्यक्तमेव तद्ब्रह्म स्वतः ।**

**'अरूपमक्षरं ब्रह्म सदाऽव्यक्तं च निष्कलम् ।**

**यज्ज्ञात्वा मुच्यते जन्तुरानन्दश्चाक्षयो भवेत् ॥' इति हि कौण्ठरव्यश्रुतिः ॥२३॥**

भा. ॥ सूत्राऽर्थमाहुः- **अव्यक्तमिति** ॥ **स्वत इति** ॥ प्रसादमन्तरेणेत्यर्थः । एतच्च स्वरूपकीर्तनं न तु साध्यकोटिप्रविष्टम् । तथा सति 'अतोऽनन्तेन' इति सूत्रं व्यर्थं स्यात् । सूत्रोपात्तश्रुतिमाहुः- [1]**अरूपमिति** ॥ **श्रुतिरिति** ॥ अस्य आहेति सौत्रेणाऽन्वयः ॥ २३ ॥

ब्रह्म स्वतोऽव्यक्तमपि आराधनरूपपुरुषप्रयत्नेन व्यक्तं भवतीति शङ्कावारणाय सूत्रम्-

**॥ ॐ अपि संराधने प्रत्यक्षानुमानाभ्याम् ॐ ॥ २४ ॥**

तदव्यक्तमिति वर्तते । तदित्यस्यावृत्तिविपरिणामौ । सिद्धत्वादिति शेषः । अयमर्थः- **संराधनेऽपि** भक्तिहीनाऽराधने कृतेऽपि तत् ब्रह्म अव्यक्तमेव तस्य तदव्यक्तत्वस्य **प्रत्यक्षानुमानाभ्यां** ज्ञानिप्रत्यक्षेण, सूक्ष्मत्वानुमानेन च, सिद्धत्वादिति ।

---

१. **अरूपमिति** ॥ **तत् ब्रह्म अक्षरं** नाशरहितम् अत **एवारूपं** प्राकृतशरीरशुक्लादिरूपरहितम् अत एव **सदाऽव्यक्तं निष्कलं च** भिन्नांशरहितं षोडशकलारहितं चेत्यर्थः ॥ शिष्टं स्पष्टम् ॥ २३ ॥

**भा.॥** सूत्रं व्याचक्षते- **उक्तमिति ॥ अधिकमिति ॥** पालनकर्तृत्वमित्यर्थः । सूत्रसूचितश्रुतिमाहुः- [1]**नैतावदेनेति ॥ बिभर्तीति ॥** इति श्रुतिरित्यर्थः । **चशब्दादिति ॥** समुच्चितेति शेषः । तामेव स्मृतिमाहुः- [2]**सृष्टिं चेति ॥ ब्रह्माण्डे इति ॥** इति स्मृतिश्चाधिकं ब्रवीतीत्यन्वयः । अत्र प्रतिषेधतीत्यंशो न सम्बध्यते (स्मृतौ निषेधाश्रवणात्) ॥ २२ ॥ अ. १३ ॥

**॥ इति प्रकृतैतावत्त्वाधिकरणम् ॥ (प्रकृत्यधिकरणम्) ॥ १३ ॥**

---

१. **नैतावदिति ॥** (ऋ.१०.३१.८) 'अस्येदेषा सुमतिः पप्रथानाऽभवत्पूर्व्या भूमना गौः । अस्य सनीला असुरस्य योनौ समान आभरणे बिभ्रमाणाः । किं स्विद्वनं क स वृक्ष आस यतो द्यावापृथिवी निष्टतक्षुः । सन्तः स्थाने अजरे इत ऊती अहानि पूर्वीरुषसोऽजरन्तः । नैतावदेनापरो अन्यदस्त्युक्षा स द्यावापृथिवी बिभर्ति । त्वचं पवित्रं कृणुत स्वधावान् यदीं सूर्यं न हरितो वहन्ति' इति सम्पूर्णमन्त्रः । अयमर्थः- **अस्य** इत् विष्णोः सकाशादेव **एषा सुमतिः** ब्रह्मादिसुबुद्धिः **पप्रथाना** अतिशयेन प्रथाना प्रथमा अभवत् । **भूमना** पूर्णेन विष्णुना **पूर्व्या** पूर्वतना **गौः** द्यावापृथिवी **अभवत्** अभूताम्, **अस्य** विष्णोर्भूम्ना महिम्नैव सुमतिः गौश्चाभवदिति वा, **असुरस्य** असुषु रमणाद्धेतोरसुरत्वात्प्राणरूपत्वाद्रमणीयत्वाच्च असुरशब्दितस्य वायोः **योनौ** भार्यायां **समाने** एकस्मिन् **आभरणे** गर्भे **बिभ्रमाणाः** भ्रियमाणा देवा अस्य सकाशादेव सनीलाः लयसहिता भवन्ति । सनीला इत्यत्र वर्णविपर्ययः, अन्यथेति शेषः । अन्यथा भगवन्महिम्नैव सृष्ट्यादिकमनङ्गीकृत्याऽन्यतस्तदङ्गीकारे वनं नर्माणेऽधिष्ठानादिरूपवनादिकं वृक्षो वा किं स्विदासीत् किं वाऽऽसीत् न किमपि न कोपीत्याक्षेपः । किञ्च वनं किंस्वित् कस्माज्जातः ? स वृक्षः वनादन्यत्र विद्यमान एकैको वृक्षः क आस स कस्माज्जात इति प्रश्नः । उत्तरमाह- **यत इति ॥ यतो** यस्माद्धरेः सर्वे लोकाः तथाश्च निष्टतक्षुः समुत्पन्नाः, यस्मादेव **सन्तः स्थाने** सम्यक्स्थायिन्यौ अजरे जराशून्ये दृढे द्यावापृथिव्यौ इत ऊती अस्मादेव ऊती समुद्भूतज्ञानादिके अहानि **पूर्वीः** पूर्व्य उषसश्च **अजरन्त** जीर्णा अभवन् । **एना** अनेन ईश्वरेण जायमानं कार्यम् **एतावदेव** सृष्टिसंहाररूपमात्रं न भवति किन्तु **अन्यदप्यस्ति** स परमात्मा **उक्षा** भक्ताभिलषितसेचकः, द्यावापृथिवी बिभर्ति, धत्ते, पुष्णाति च, **स्वधावान्** पूर्णसुखो भगवान् **त्वचं** शरीरं **पवित्रं** कृणुत करोति, **यत्** येन पवित्रीकरणेन **हरितो** दिशः सूर्यं न सूर्यमिव वहन्ति प्रजाः भगवन्तम् अक्लेशेनैवेति शेषः इति ॥

२. **सृष्टिं चेति ॥** स्पष्टम् ॥ २२ ॥ अ.१३ ॥

## १४. अव्यक्ताधिकरणम्

**(परमात्मा अव्यक्तोऽपि स्वप्रसादाद् व्यक्तो भवति)**

**परमात्मापरोक्ष्यं च तत्प्रसादादेव न जीवशक्त्येति वक्तुमुच्यते—**

अत्र नये हरेरुपलब्ध्यविषयत्वसमर्थनम् । तदभावे भक्तिर्न स्यादिति (पूर्ववत्) सङ्गतिः । भक्तिर्विषयः । कर्तव्या नवेति सन्देहः । द्विविधव्यापारदर्शनं तद्बीजम् । नेति पूर्वपक्षः ॥ **प्रसादादेवेति** ॥ भक्तिजन्यप्रसादादेवेत्यर्थः । **वक्तुम्**- 'अतोऽनन्तेन तथा हि लिङ्गम्' (३.२.२७) इति सूत्रे वक्तुम् । **उच्यते**- इह सूत्रे अव्यक्तत्वमुच्यत इत्यर्थः ॥

**॥ ॐ तदव्यक्तमाह हि ॐ ॥ २३ ॥**

तदव्यक्तमित्यावर्तते । दर्शनमिति वर्तते । अयमर्थः- **तत् ब्रह्म अव्यक्तम्** अप्रत्यक्षं **हि** यतः दर्शनम् 'अरूपमक्षरं ब्रह्म' इति श्रुतिः तदव्यक्तमाहाऽत इति ॥

**अव्यक्तमेव तद्ब्रह्म स्वतः ।**

**'अरूपमक्षरं ब्रह्म सदाऽव्यक्तं च निष्कलम् ।**

**यज्ज्ञात्वा मुच्यते जन्तुरानन्दश्चाक्षयो भवेत् ॥' इति हि कौण्ठरव्यश्रुतिः ॥२३॥**

भा. ॥ सूत्राऽर्थमाहुः- **अव्यक्तमिति** ॥ **स्वत इति** ॥ प्रसादमन्तरेणेत्यर्थः । एतच्च स्वरूपकीर्तनं न तु साध्यकोटिप्रविष्टम् । तथा सति 'अतोऽनन्तेन' इति सूत्रं व्यर्थं स्यात् । सूत्रोपात्तश्रुतिमाहुः- [१]**अरूपमिति** ॥ **श्रुतिरिति** ॥ अस्य आहेति सौत्रेणाऽन्वयः ॥ २३ ॥

ब्रह्म स्वतोऽव्यक्तमपि आराधनरूपपुरुषप्रयत्नेन व्यक्तं भवतीति शङ्कावारणाय सूत्रम्-

**॥ ॐ अपि संराधने प्रत्यक्षानुमानाभ्याम् ॐ ॥ २४ ॥**

तदव्यक्तमिति वर्तते । तदित्यस्यावृत्तिविपरिणामौ । सिद्धत्वादिति शेषः । अयमर्थः- **संराधनेऽपि** भक्तिहीनाऽराधने कृतेऽपि तत् ब्रह्म अव्यक्तमेव तस्य तदव्यक्तत्वस्य **प्रत्यक्षानुमानाभ्यां** ज्ञानिप्रत्यक्षेण, सूक्ष्मत्वानुमानेन च, सिद्धत्वादिति ।

---

१. **अरूपमिति** ॥ तत् ब्रह्म **अक्षरं** नाशरहितम् अत **एवारूपं** प्राकृतशरीरशुक्लादिरूपरहितम् अत एव सदाऽव्यक्तं **निष्कलं** च भिन्नांशरहितं षोडशकलारहितं वेत्यर्थः ॥ शिष्टं स्पष्टम् ॥ २३ ॥

**आराधनेऽप्यव्यक्तमेव ज्ञानिनां प्रत्यक्षेण इतरेषामतिसूक्ष्मत्वलिङ्गादनुमानेन ।**

**'न तमाराधयित्वाऽपि कश्चिद्व्यक्तीकरिष्यति ।**

**नित्याव्यक्तो यतो देवः परमात्मा सनातनः ॥' इति ब्रह्मवैवर्ते ॥ २४ ॥**

भा. ॥ सूत्रं व्याचक्षते- **आराधनेऽपीति** ॥ भक्तिहीनाराधने कृतेऽपीत्यर्थः । **अव्यक्तमेवेति** ॥ तदिति वर्तते । **अनुमानेनेति** । तदव्यक्तत्वस्य सिद्धत्वादिति शेषः । ननु ज्ञानिप्रत्यक्षं कथं मानं स्यात् ? परबुद्धेरप्रत्यक्षत्वादित्यत आहुः- **'न तमिति** ॥ **ब्रह्मवैवर्ते इति** ॥ ज्ञानिनेति शेषः । **सनातन इति** ॥ ब्रह्मवैवर्ते इत्युक्तेः ज्ञानिना ज्ञानिप्रत्यक्षेणेत्यन्वयः । ज्ञानिनां प्रत्यक्षं प्रमाणम्, अज्ञानिनामनुमानं प्रमाणमिति विवेकः ॥ २४ ॥

**नित्याव्यक्तस्वरूपेण तथैव तिष्ठति व्यक्तं किञ्चिद्रूपं गृहीत्वा दृश्यते ।**

**यथाऽग्न्यादयस्तन्मात्रारूपेणादृश्या अपि स्थूलरूपेण दृश्यन्ते एवमिति चेन्न ।**

सूत्रोन्नेयपूर्वपक्षमाहुः- **नित्येति** ॥ नित्याव्यक्तस्वरूपेण- स्वरूपात्मकविग्रहवन्मूलरूपेण । हेतौ तृतीया । **तथैव**- अव्यक्त एव । **तिष्ठतीति** ॥ आत्मेति शेषः । **व्यक्तं**- प्रत्यक्षयोग्यम् । **किञ्चिद्रूपम्**- अवताररूपमित्यर्थः । **चेन्नेति** ॥ अत्र हेतुबोधनार्थं सूत्रं पठन्ति-

**॥ ॐ प्रकाशवच्चावैशेष्यम् ॐ ॥ २५ ॥**

विशेष एव वैशेष्यम् । न वैशेष्यमिति पदच्छेदः । तदव्यक्तमिति वर्तते । तस्येत्यपि विपरिणम्यते । अयमर्थः- च यतः **प्रकाशादिवत्** अग्न्यादेरिव **तस्य ब्रह्मणः वैशेष्यं** स्थूलसूक्ष्मत्वविशेषो नातस्तदव्यक्त-मेवेति ॥

अयं भावः- यथा अग्निजलादेस्तन्मात्ररूपेण सूक्ष्मत्वं, प्रकृत्योपचितरूपेण स्थूलत्वमिति विशेषोऽस्ति, तथा ब्रह्मणो मूलरूपेण सूक्ष्मत्वमवताररूपे'(ण) स्थूलत्वमिति विशेषो न किन्तु सर्वत्र परमसूक्ष्मत्वमेव अत एवाऽव्यक्तत्वमपीति ॥ यद्यपि रामकृष्णादिरूपेषु प्रत्यक्षत्वमस्ति तथाऽपि तत्र प्रत्यक्षत्वं स्वेच्छयैव न तु पुरुषप्रयत्नेनेत्यदोषः । स्वेच्छया प्रत्यक्षत्वस्य वक्ष्यमाणत्वात् ।

---

१. **न तमिति** ॥ आराधयित्वापि भक्तिं विनेति शेषः । कश्चिद्योग्यो जीवः नित्याऽव्यक्तः स्वभावत इत्यर्थः। स्पष्टमन्यत् ॥ २४ ॥

**अग्न्यादिवत् स्थूलसूक्ष्मत्वविशेषाभावात् ।**

**'नासौ सूक्ष्मो न स्थूलः पर एव स भवति तस्मादाहुः परमः'**

**इतीति माण्डव्यश्रुतेः ।**

**'स्थूलसूक्ष्मविशेषोऽत्र न क्वचित्परमेश्वरे ।**
**सर्वत्रैकप्रकारोऽसौ सर्वरूपेष्वजो यतः ॥' इति च गारुडे ।**

**'अव्यक्तव्यक्तभावौ च न क्वचित्परमेश्वरे ।**
**सर्वत्राव्यक्तरूपोऽयं यत एव जनार्दनः ॥' इति कौर्मे ।**

भा. ॥ सूत्रं व्याचक्षते- **अग्न्येति** ॥ ब्रह्मणः स्थूलसूक्ष्मविशेषाऽभावे मानमाहुः- [1]**नाऽसाविति** ॥ उत्पन्नत्वानुत्पन्नत्वयोरवताररूप - मूलरूपविषये सत्त्वात्कथं स्थूलसूक्ष्मविशेषाभाव इत्यत आहुः- [2]**स्थूलेति** ॥ स्मृत्या तमर्थं साधयन्ति- [3]**अव्यक्तेति** ॥ **कौर्म इति** ॥ श्रुतेः, गारुडे इत्युक्तेश्च, कौर्मे इत्युक्तेश्च, विशेषाऽभावादित्यन्वयः ॥ २५ ॥

**तर्हि किं यत्नेनेत्यत आह-**

उत्तरसूत्रमवतारयन्ति - **तर्हीति** ॥ आत्मनो नित्याव्यक्तत्वे । **यत्नेन-** भक्त्यादिसाधनेनेत्यर्थः ॥

**॥ ॐ प्रकाशश्च कर्मण्यभ्यासात् ॐ ॥ २६ ॥**

**कर्म कर्मकारकं विषय इति यावत् । अभ्यासपदेनाऽऽक्षेपाद्भक्तियुक्तश्रवणादेरिति लभ्यते । तदित्यस्यानुवृत्तिविपरिणामौ । चः शङ्कानिवर्तकः । अयमर्थः- कर्मणि शास्त्रविषये तस्मिन् ब्रह्मणि**

---

१. **नासाविति ॥ असौ** परमात्मा केनचिद्रूपेण **सूक्ष्मः**, केनचिद्रूपेण **स्थूल** इति न, किन्तु **स पर एव** सर्वत्र सूक्ष्म एव सर्वत्र स्थूल एव चेत्यर्थः । (नञ्द्वयोपादानादेवमर्थ उक्तः) शिष्टं स्पष्टम् ॥

२. **स्थूलेति ॥** यतोऽसौ भगवान् सर्वरूपेषु **अजः** उत्पत्तिशून्यः अतोऽत्र **परमेश्वरे क्वचिदपि** रूपे काले वा **स्थूलसूक्ष्मविशेषः** स्थूलत्वसूक्ष्मत्वरूपो धर्मः व्यवस्थया क्वचिद्रूपे स्थूलः क्वचिद्रूपे सूक्ष्म इति न, किन्तु **सर्वत्र एकरूप एवेत्यर्थः** ।

३. **अव्यक्तेति ॥** चेत्यनन्तरं व्यवस्थिताविति शेषः । **क्वचित्** रूपविशेषे इत्यर्थः । स्पष्टमन्यत् । क्वचिद्रूपे अव्यक्तत्वं क्वचिद्रूपे व्यक्तत्वमिति नेति भावः ॥ २५ ॥

**अभ्यासात्** भक्तियुक्तश्रवणादेः अभ्यासात् पौनःपुन्यात् **प्रकाशः** ब्रह्माऽपरोक्षं भवति । **च** पूर्वसूत्रपूर्वपक्षन्यायेनापरोक्षं नेति शङ्कानवकाश इति । कर्मणीत्युक्तिस्तु 'ईक्षति' (१.१.५) नयोक्तवाच्यत्वस्मरणद्वाराऽवाच्यत्वनिषेधार्था ॥

**विषयभूते तस्मिन्नेव श्रवणाद्यभ्यासात् प्रकाशश्च भवति ।**

**'आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः ॥' (बृ.४.४.५) इति श्रुतेः ।**

भा.॥ सूत्राऽर्थमाहुः- **विषयेति** ॥ श्रवणाद्यभ्यासेन ब्रह्मदर्शनमित्यत्र मानमाहुः- [1]**आत्मेति** ॥ अस्य वाक्यस्य (बृ.४.६.)अध्याये पाठात्तदर्थस्याऽभ्यासो बोधितः । यद्वा- श्रवणादेर्मननाद्यर्थं विधानेन श्रवणस्य यावद्ज्ञानं, मननस्य यावत्तत्त्वनिर्णयम्, ध्यानस्य यावद्दर्शनमावश्यकत्वेनाभ्यासविशिष्ट-श्रवणादेरेव श्रुत्या विधानमिति भावः ॥ २६ ॥

**नित्याव्यक्तस्य कथं प्रकाश इत्यत उच्यते—**

उत्तरसूत्रमवतारयन्ति- **नित्येति** ॥ कथमित्याक्षेपे । केवलश्रवणादिरूपपुरुषप्रयत्नशतेनापीत्यर्थः ॥

**॥ ॐ अतोऽनन्तेन तथा हि लिङ्गम् ॐ ॥ २७ ॥**

तदव्यक्तं, प्रकाशश्चेति वर्तते । अयमर्थः- **अव्यक्तं तत्** ब्रह्म **अनन्तेन** अपरिच्छिन्नाशक्तिमता विष्णुना तत्प्रसादेनेति यावत् । **प्रकाशश्च** अपरोक्षविषयोऽपि भवति । **अतः** अव्यक्तत्वे, प्रकाशत्वे च, श्रुतिसत्त्वात्, **हि** यतः **लिङ्गम्** 'भूयश्चाऽन्ते विश्वमायानिवृत्तिः' इति लिङ्गमस्ति अतश्चेति ॥ अयंभावः- 'अरूपमक्षरं ब्रह्म सदाव्यक्तं च निष्कलम्' इति श्रुतिरव्यक्तत्वे, 'आत्मा वा' इति श्रुतिरपरोक्षत्वे मानमस्ति अतः श्रुतिद्वयविरोधपरिहारार्थं पुरुषप्रयत्नमात्रेणाव्यक्तं ब्रह्म स्वप्रसादेन प्रकाशश्चेति कल्प्यते । किञ्च 'तस्याऽभिध्यानात्' इति श्रुतिः मोक्षस्य तदिच्छारूपप्रसादसाध्यत्वं वक्ति । 'दृष्ट्वैव तम्' इति श्रुतिस्तु मोक्षस्य ज्ञानसाध्यत्वं वक्ति । तत्र एवकारघटितश्रुत्या ज्ञानस्य साक्षान्मोक्षकारणत्वे स्थिते 'तस्याऽभिध्यानात्' इति श्रुतिः प्रसादस्य ज्ञानद्वारा मोक्षकारणत्वं वक्तीति कल्प्यम्, तथा च 'प्रसादो मोक्षकारणं तथा श्रुतिसिद्धत्वात्' इति लिङ्गमप्यस्ति, अचिन्त्याद्भुतशक्त्या

---

१. आत्मा वा इति ॥ व्या. (सं.१, पृ. ४०) ॥ २६ ॥

**प्रकाशोऽपि युज्यत इति ॥ ननु 'तस्याभिध्यानात्' इति श्रुतेरपरोक्षज्ञानजन्याऽत्यर्थप्रसादपरत्वेनोपपत्तौ प्रसादस्याऽपरोक्षज्ञानकारणपरत्वं कथं कल्प्यत इति चेन्न । सिद्धान्ते तथोपपत्तावपि पूर्वपक्षिणो मते मोक्षं प्रत्यपरोक्षज्ञानस्यैव साक्षात्कारणत्वेन श्रुत्युक्तप्रसादे ज्ञानकारणत्वस्यैवाऽङ्गीकर्तव्यत्वेन तदनुरोधेनैवमुक्तेः ॥**

**उभयत्र प्रमाणाभावात्तत्प्रसादादेव प्रकाशो भवति ।**

**'तस्याभिध्यानाद्योजनात्तत्त्वभावाद्भूयश्चान्ते विश्वमायानिवृत्तिः' (श्वे.उ.१.१०)**

**इति लिङ्गात् । युज्यते च तस्यानन्तशक्तित्वात् ।**

**'नित्याव्यक्तोऽपि भगवानीक्ष्यते निजशक्तितः ।**
**तमृते परमात्मानं कः पश्येतामितं प्रभुम् ॥' इति च नारायणाध्यात्मे ।**

॥ इत्यव्यक्ताधिकरणम् ॥ १४ ॥

भा. ॥ सूत्रार्थमाहुः- **उभयत्रेति** ॥ अव्यक्तत्वे, प्रकाशे च । **भावात्** - सत्त्वादित्यर्थः । अत्र श्रुतिमाहुः- [1]**तस्येति** ॥ लिङ्गात्- श्रुत्युक्तलिङ्गादित्यर्थः । **युज्यत इति** ॥ नित्याव्यक्तस्य प्रकाश इति वर्तते । युज्यत इत्यत्र मानमाहुः- [2]**नित्येति** ॥ **अध्यात्म इति** ॥ तत्रेत्युक्तेर्युज्यत इत्यन्वयः ॥ २७ ॥ अ.१४ ॥

॥ इति तदव्यक्ताऽधिकरणम् ॥ १४ ॥

---

१. **तस्याभिध्यानादिति** ॥ (श्वेता. १.१०) व्या. (सं.१. पृ. ४३६)

२. **नित्याव्यक्तमिति** ॥ निजशक्तितः स्वरूपसामर्थ्यादेव तं परमात्मानं तत्प्रसादमिति यावदित्यर्थः । स्पष्टमन्यत् ॥ २७ ॥ अ.१४ ॥

## १५. उभयव्यपदेशाधिकरणम्

### (परमात्मा गुणात्मकः गुणी च)

अत्र नये ब्रह्मणो गुणित्वसमर्थनम् । सङ्गत्यादिकं पूर्ववत् ॥ पूर्वपक्षमाहुः- **स्वरूपेणेति ॥** स्वरूपभूतेनेत्यर्थः । हेतौ तृतीया । **आनन्दित्वादीति ॥** आनन्दवैशिष्ट्यादीत्यर्थः । हेतुत्वं वैशिष्ट्येऽन्वेति । युज्यते, तस्येति वर्तते । इति चेदिति शेषः । गुणगुणिनोरभेदाऽङ्गीकारेण भेदनिबन्धन-गुणवैशिष्ट्यं न स्यादिति भावः ॥

**स्वरूपेणाऽनन्दादिना कथमानन्दित्वादिरित्यत्रोच्यते–**

**॥ ॐ उभयव्यपदेशात्त्वहिकुण्डलवत् ॐ ॥ २८ ॥**

उभयेति लुप्तप्रथमाकं पृथक्पदं च । तदित्यस्याऽनुवृत्तिविपरिणामौ । युज्यत इति शेषः । अर्श आद्यजन्ततद्भिन्नकुण्डलशब्दयोरेकशेषः । भावप्राधान्यं च । अहेःकुण्डले अहिकुण्डले ताभ्यां तुल्यमहिकुण्डलवत् । तुः विशेषद्योतकः । अयमर्थः- **तस्य ब्रह्मणः उभयम्** आनन्दादिगुणात्मकत्वं, तादृशगुणावैशिष्ट्यं च, युज्यते **उभयव्यपदेशात्** उभयरूपेण आनन्दादिधर्मरूपेण, आनन्द्यादिधर्मिरूपेण च, 'स एष परमानन्दः' इति 'आनन्दं ब्रह्मणः' इति श्रुतौ **व्यपदेशात्** व्यवहारात्, तु उभयव्यवहार-प्रयोजकविशेषाख्यधर्मवत्त्वाच्च, **अहिकुण्डलवत्** अहेः सर्पस्य कुण्डलरूपधर्मकुण्डलिरूपधर्मि-स्वरूपत्ववदिति ॥

**'आनन्दं ब्रह्मणो विद्वान्' (तै.२.४) । 'अथैष एव परम आनन्द इत्युभयव्यपदेशादहिकुण्डलवदेव युज्यते । यथाहिः कुण्डली कुण्डलं च । तुशब्दात्केवलश्रुतिगम्यत्वं दर्शयति ॥**

भा.॥ (श्रुत्युपन्यासपूर्वम्) सूत्रं व्याचक्षते- [1]**आनन्दमित्यादि ॥** नन्वेकस्य गुणत्वं गुणित्वं च श्रौतमपि कथं युज्यतेऽन्यत्रादर्शनात् । अत आहुः- **अहिकुण्डलेति ॥** अहेः कुण्डलं कुण्डलित्वं तेन तुल्यमहिकुण्डलवत् । स्वरूपेण कुण्डलेनेत्यर्थाल्लभ्यते । एव प्रसिद्धौ । दृष्टान्ते व्यपदेशं दर्शयन्ति- **यथेति ॥ चेति ॥** इति व्यपदिश्यते एवमिति शेषः । अयमर्थः- यथा अहिः कुण्डली कुण्डलं चेति धर्मधर्मिरूपेण व्यपदिश्यते एवमिति श्रुतौ धर्मधर्म्युभयरूपेण व्यपदेशात् अहिकुण्डलवदेव स्वरूपेण कुण्डलेनाऽहेः कुण्डलित्ववद्युज्यते स्वरूपेणानन्दादिना आनन्दित्वादीति

वर्तते इति । श्रौतत्वादपि 'नेश्वर आनन्दादिमान् तदात्मकत्वात् यथा स्वयं न स्ववान्' इत्यादि युक्तिविरोधो नेत्याहुः- **तुशब्दादिति** ॥ **श्रुतिगम्यत्वमिति** ॥ स्वरूपेणानन्दादिनाऽनन्दित्वादीति वर्तते । षष्ठ्या विपरिणम्यते ॥ १८ ॥

**अहिकुण्डलदृष्टान्तेन ब्रह्मतद्गुणादीनां भेदाभेदौ किं न स्यातामिति शङ्कावारणाय सूत्रम्-**

**॥ ॐ प्रकाशाश्रयवद्वा तेजस्त्वात् ॐ ॥ २९ ॥**

**तस्योभयं युज्यत इति वर्तते । अयमर्थः-तस्य ब्रह्मणः उभयं गुणरूपत्वं, गुणिरूपत्वं च, युज्यते । प्रकाशाश्रयवद्वा । प्रकाशाश्रयसूर्यबिम्बस्य प्रकाशत्वप्रकाशित्वोभयवत् तेजस्त्वात् तेजोरूपत्वादिति ॥ अनेन गुणगुणिभावतेजस्त्वयोर्व्याप्तिः सूचिता, भगवद्गुणानां प्रकाशरूपत्वं च सूचितम् । सूर्यस्येति वक्तव्ये एवमुक्तिराश्रयाश्रयिभावद्योतनाय । घटत्वाद्यत्यन्ताऽभिन्नघटादिदृष्टान्तं परित्यज्य एतदृष्टान्तकथनं तेजस्त्वेन शीघ्रमुपस्थितत्वादाश्रयत्वद्योतनार्थत्वाच्च । यावद्द्रव्यभाविप्रकाशसूर्ययोरिव प्रकृते गुणगुणिनोरत्यन्ताभेद एवेति भावः ॥**

**यथाऽऽदित्यस्य प्रकाशत्वं प्रकाशित्वं च, एवं वा दृष्टान्तः । तेजोरूपत्वाद् ब्रह्मणः ॥**

**भा.॥** सूत्रं व्याचक्षते- **यथेति** ॥ **एवं वा दृष्टान्त** इति अस्त्विति शेषः ॥ २९ ॥

दृष्टान्तान्तरेणोक्तार्थसाधनाय सूत्रम्-

**॥ ॐ पूर्ववद्वा ॐ ॥ ३० ॥**

तस्योभयं युज्यत इति वर्तते । अयमर्थः- **तस्य** ब्रह्मणः **उभयम्** 'आनन्दं ब्रह्मणः' इत्यादौ विशेषणत्वं, विशेष्यत्वं च, युज्यते । पूर्ववद्वा- यथा पूर्वःकाल इत्यादौ एकस्यैव कालस्य विशेषणत्वं विशेष्यत्वं च तथेति ॥

**यथैक एव कालः पूर्व इत्यवच्छेदकोऽवच्छेद्यश्च भवति । अतिसूक्ष्मत्वापेक्षयैष दृष्टान्तः । स्थूलमतीनां च प्रदर्शनार्थमहिकुण्डलदृष्टान्तः ।**

१. **आनन्दमिति** ॥ (तै.२.४) ब्रह्मण आनन्दं विद्वान् ब्रह्मसम्बन्ध्यानन्दादिविषयकज्ञानवान् न बिभेती-त्यर्थः । **अथैष इति** ॥ (बृ.६.३.१३) एषः परमात्मा आनन्दात्मक इत्यर्थः ॥ २८ ॥ २९ ॥

**'प्रकाशवत्कालवद्वा यथाऽङ्गे शयनादिकम् ।**
**ब्रह्मणश्चैव मुक्तानामानन्दोऽभिन्न एव तु ॥' इति नारायणाध्यात्मे ।**

**'आनन्देन त्वभिन्नेन व्यवहारः प्रकाशवत् ।**
**कालवद्वा यथा कालः स्वावच्छेदकतां व्रजेत् ॥' इति ब्राह्मे ॥ ३०॥**

भा. ॥ सूत्रार्थमाहुः- **यथेति** ॥ **व्यवच्छेदक इति** ॥ विशेषणमित्यर्थः । **व्यवच्छेद्य इति** ॥ विशेष्यमित्यर्थः । **भवतीति** ॥ एवं वा दृष्टान्तः स्वरूपेणाऽनन्दादिना आनन्दादित्वेऽस्त्विति योज्यम् । ननु व्यर्थोक्तेरपर्यवसानादयं दृष्टान्तः कुतः इत्यत आहुः- **अतिसूक्ष्मेति** ॥ अत्यन्तं सूक्ष्मं ज्ञानं येषां तेषां भावोऽतिसूक्ष्मत्वमतिसूक्ष्मज्ञानं 'विशिष्टाद्भावप्रत्ययः' इति न्यायात् तस्यापेक्षाविषयत्वम् । हेतौ तृतीया हेतुः फलम् । अतिसूक्ष्मज्ञानविषयत्वार्थमित्यर्थः । ननु 'नीलो घटः' इत्यादिसामानाधिकरण्यस्थले सर्वत्र विशेषणविशेष्ययोरभेदोऽस्त्येवेत्यस्य दृष्टान्तस्याऽतिसूक्ष्मत्वं कथमिति चेदुच्यते पूर्वकाल इत्यादेः पूर्वक्षणवर्तीकाल इत्यादिरर्थः । तथा चैकस्यैव क्षणरूपकालस्याऽधारत्वेन विशेषणत्वम् । आधेयत्वेन विशेष्यत्वम् । उक्तार्थाङ्गीकारादेव **सुधायां** पूर्वत्वं पूर्वकालसम्बन्ध इति सकललोकप्रसिद्ध इत्युक्तं सङ्गच्छते । एवं विशेष्यविशेषणभावकथनेनैकस्यैव गुणगुण्यात्मकत्वं बोधितम्, **टीकायां** पूर्व इति व्यवच्छेदक इत्यस्य पूर्ववृत्तीत्येकदेशभूतपूर्व इत्यर्थेन न तद्विरोध इति ॥ नन्वनेन दृष्टान्तेनाऽलं किं भेदाभेदविषयत्वेन भासमानाऽन्यदृष्टान्तेनेत्यत आहुः- **स्थूलेति** ॥ **प्रदर्शनार्थमिति** ॥ एकस्मिन्नेव विशेष्यविशेषणभावप्रदर्शनार्थमित्यर्थः । उक्तार्थे स्मृतिमाहुः- **'प्रकाशवदित्यादि पाद्मे इति** ॥ (नारायणाध्यात्मे) पाद्मे चैतदधिकरणार्थ उक्त इति शेषः ॥ ३० ॥

---

१. **प्रकाशवदिति** ॥ तृतीयान्ताद्वतिः । अङ्गं शरीरं, शयनमवस्थाविशेषः । आदिना कर्मकर्तृभावग्रहणम् । एवशब्दः एवमित्यर्थकः स्वाभिन्नविशेषण इति शेषः । यथायथमावृत्त्यादिकम् । अयमर्थः- अभिन्न एव तु स्वाश्रयेणात्यन्ताभिन्नोऽपि, ब्रह्मणो मुक्तानां चाऽनन्दः स्वरूपानन्दः, प्रकाशवत् सूर्यादिप्रकाशवत् । कालवद्वा साक्षिसिद्धकालावयववद्वा, यथा शयनादिकं शयनादिवदिति यावत्, विशेषात्स्वाभिन्नविशेषणकः स्वात्यन्ताभिन्नं स्वाश्रयत्वेनाभिमतं यत् तद्विशेषणको भवति । उक्तस्यैव तृतीयदृष्टान्तस्य दार्ष्टान्तिकस्य च विवरणम्- **यथेत्यादि** ॥ यथा शयनादिकम् अङ्गाभिन्नशयनमङ्गे शयनमित्युच्यते, 'अङ्गमङ्गमधिशेते' इत्यत्रैकमेवाङ्गं कर्तृ कर्म च भवति । एवमभिन्न एव आनन्दो ब्रह्मणो मुक्तानां चेत्युच्यते विशेषादिति । अयं भावः-

गुणगुणिनोरभेदमङ्गीकृत्य गुणित्वसाधनापेक्षया भेदाङ्गीकार एव युक्त इति शङ्कावारणाय सूत्रम्-

**॥ ॐ प्रतिषेधाच्च ॐ ॥ ३१ ॥ (इति)**

**चोऽभेदस्येत्यनुक्तस्याऽपि समुच्चये तस्योभयमिति वर्तते । अयमर्थः- भेदस्य ब्रह्मणि गुणादिभेदस्य प्रतिषेधाच्च 'नेहनानाऽस्ति किञ्चिन' इति श्रुत्या निषेधाच्च । तस्य ब्रह्मणः उभयं गुणगुणि-रूपत्वमङ्गीकार्यमिति शेष इति ॥**

**'एकमेवाद्वितीयम्' (छा.६.२.१), 'नेह नानाऽस्ति किञ्चन' (कठ.२.४.११) इति भेदस्य ।**

**॥ इत्युभयव्यपदेशाधिकरणम् ॥ १५ ॥**

**भा.॥** श्रुतिमाहुः- **'एकमेवेत्यादि ॥ भेदस्येति ॥** अस्य सूत्रेऽन्वयः । सूत्रार्थः स्पष्ट इति भावः ॥ ३१ ॥ अ.१५ ॥

**॥ इत्यहिकुण्डलाधिकरणम् ॥**

---

यथा सूर्याद्यभिन्न एव प्रकाशः सूर्यादेः प्रकाश इत्युच्यते, यथा वा पूर्वाभिन्न एव कालः पूर्वकाल-वृत्तिरित्युच्यते, यथा चैकमेवाङ्गं कर्तृ कर्म च भवति, एवमभिन्नोऽप्यानन्दादिः ब्रह्मादिसम्बन्धीत्युच्यते । विशेषबलात् कर्म च भवतीत्यनेन कर्तुराधारो भवतीत्यर्थोऽत्राऽभिमतः । 'अधिशीङ्स्थासां कर्म' इति सूत्रेणाधारस्यैव कर्मसञ्ज्ञाविधानात् । अत्र द्वितीयपादेनाहिकुण्डलदृष्टान्तः सङ्गृहीत इति । **आनन्देनेति ॥** प्रकाशवत् स्वाभिन्नेन प्रकाशेन प्रकाशवान् सूर्य इति व्यवहारवत्, कालवद्वा स्वाभिन्नकालेन पूर्वः काल इति व्यवहारवद्वा, स्वाभिन्नेनाऽनन्देनाऽनन्दवान् भगवानिति व्यवहारो भवति । कालवद्वेत्यस्य विवरणम्- **यथेति ॥** स्वावच्छेदकत्वं स्वविशेषणत्वमित्यर्थः ॥ ३० ॥

१. **एकमेवेति ॥** (छा.६.२.१) ब्रह्म **एकमेव** ज्ञानानन्दादिगुणैरवयवैश्चाभिन्नमेव, न तु भिन्नं नापि भिन्नाभिन्नम्, **अद्वितीयं** समाभ्यधिकरहितमित्यर्थः । **नेहेति** (का.२.४.११) **इह** ब्रह्मणि **किञ्चन** गुणादिकं **नाना** भिन्नं नास्तीत्यर्थः ॥ ३१ ॥

## १६. परमताधिकरणम्

### (परमात्मन आनन्दादिकं लौकिकानन्दादिभ्यः विलक्षणम्)

अत्र नये भगवद्गुणानामलौकिकत्वसमर्थनम् । लौकिकत्वे भक्तिर्न स्यादिति पूर्ववत्सङ्गतिः । भगवद्गुणजातं विषयः । अलौकिकं लौकिकं वेति संशयः । द्विधाऽपि सम्भवस्तद्बीजम् । लौकिकमिति पूर्वपक्षः ॥

**॥ ॐ परमतः सेतून्मानसम्बन्धभेदव्यपदेशेभ्यः ॐ ॥ ३२ ॥**

प्रकृतत्वात् ब्रह्मगुणजातमिति वर्तते । सेतून्मानशब्दौ भावप्रधानौ । व्यपदेशपदं द्वन्द्वान्ते श्रूयमाणत्वात् प्रत्येकमभिसम्बध्यते । अयमर्थः- ब्रह्मगुणजातम् **अतो** लौकिकानन्दादितः **परं** विलक्षणं **सेतून्मानसम्बन्धभेदव्यपदेशेभ्यः** 'एष सेतुर्विधृतिः' इति आनन्दादेः पराकाष्ठात्वरूपसेतुत्व-व्यपदेशात्, 'यतो वाचो' इति पूर्णत्वरूपोन्मानत्वव्यपदेशात् । 'एतस्यैवानन्दस्य' इति बिम्बप्रतिबिम्ब-भावरूपसम्बन्धव्यपदेशात् 'अन्यज्ज्ञानन्तु जीवानाम्' इति भेदव्यपदेशादिति ॥

**न चाऽनन्दादित्वाल्लोकानन्दादिवत् । 'एष सेतुर्विधृतिः' (छा.८.४.१) 'य एष आनन्दः परस्य' 'एष नित्यो महिमा ब्राह्मणस्य' (बृ.६.४.२३) इति सेतुत्वं ह्युच्यते । 'यतो वाचो निवर्तन्ते'(तै.२.४) इत्युन्मानत्वम् ।**

**'एतस्यैवाऽनन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति' इति सम्बन्धः ।**

**'अन्यज्ज्ञानं तु जीवानामन्यज्ज्ञानं परस्य च ।**
**नित्यानन्दाव्ययं पूर्णं परज्ञानं विधीयते ॥' इति भेदः ।**

**अतोऽलौकिकत्वात् परमेव ब्रह्मानन्दादिकम् ॥ ३२ ॥**

भा. ॥ पूर्वपक्षमाहुः- **नचेति** ॥ **आनन्दादित्वादिति** ॥ आनन्दादिशब्दवाच्यत्वादित्यर्थः । ब्रह्मानन्दादिः लौकिक इति वाच्यमिति शेषः । लोकानन्दवत्- जीवानन्दवत् । व्यपदेशस्थलानि (श्रुतीः) आहुः- [1]**एष सेतुरित्यादि** ॥ **सेतुत्वमिति** ॥ हि यतः सेतुत्वमुच्यत इत्यर्थः । हि उच्यत

---

१. **एष सेतुरिति** ॥ शाखान्तरमेतत् य एष परस्य परमात्मन आनन्दः एष विधृतिः धारणसमर्थः । सेतुराश्रय इत्यर्थः । **एप नित्य इति** ॥ (बृ. ६.४.२३) ब्राह्मणस्य विष्णोः एष महिमा सार्वज्ञपूर्णानन्दत्वादिर्नित्य इत्यर्थः।

इति पदद्वयम् उन्मानत्वं, भेदः, सम्बन्ध इत्यग्रिमस्थलत्रयेऽपि सम्बध्यते । **अत इति** ॥ (आवर्तते चेदम् ।) अतो हेतोः अलौकिकत्वात् अलौकिकत्वाऽवगमात् ब्रह्मानन्दादिकं परमेव लौकिक-विलक्षणमेव (अतः न वाच्यमित्यन्वयः ।।) यद्वा- भेद इत्यन्तं भाष्यं सौत्रहेतुव्याख्यानम् । हि यतः सेतुत्वमुन्मानत्वं सम्बन्धः भेद उच्यतेऽतो 'न वाच्यम्' इति सम्बन्धः । तदुत्तरभाष्यन्तु-सौत्रप्रतिज्ञाभागव्याख्यानम् । अत इत्यनूद्य लौकिकत्वादिति विवरणम् । स्वार्थे त्वप्रत्ययः । लौकिकादानन्दादेः परमित्यर्थः ।। ३२ ।।

**हेत्वन्तरेणाऽनन्दादेरलौकिकत्वसाधनाय सूत्रम्-**

**॥ ॐ दर्शनात् ॐ ॥ ३३ ॥ (इति)**

**परमतो ब्रह्मगुणजातमिति वर्तते । यथायथमावृत्तिविपरिणामौ । अयमर्थः- अतः लौकिकानन्दादेः दर्शनात् मनोवाग्गोचरत्वेनाऽनुभवात् ब्रह्मगुणजातस्य दर्शनात् मनोवागगोचरत्वेन 'अदृष्टमव्यवहार्यम्' इत्यादिश्रुतौ दृष्टत्वात् ब्रह्मगुणजातम् अतः लौकिकाऽनन्दादितः परमिति ॥**

**दर्शनादेव चान्यानन्दादीनाम् । 'अदृष्टमव्यवहार्यमव्यपदेश्यं सुखं ज्ञानमोजो बलमिति ब्रह्मणस्तस्माद्ब्रह्मेत्याचक्षते तस्माद्ब्रह्मेत्याचक्षते' इति कौण्डिन्यश्रुतिः ।**

**भा.॥** (सूत्रतात्पर्यमाहुः- **दर्शनादिति** ।।) **एवेति** । एवः प्रसिद्धौ । प्रसिद्धिश्च सर्वाऽनुभवविषय-त्वम् । नन्वन्याऽनन्दादेर्मनोवाग्गोचरत्वमात्रेण कथं ब्रह्मानन्दादेरलौकिकत्वमत आहुः- '**अदृष्ट-मिति** ॥ **श्रुतिरिति** ॥ वक्तीति शेषः । एतच्छ्रुत्युपन्यासात्पूर्वत्र एव चेति चशब्देन ब्रह्मानन्दादेरदर्शनादिति ग्राह्यमिति सूचितम् । तत इति शेषः । अयमर्थः- अन्यानन्दादीनां

---

**यतो वाच इति** ॥ व्या. (५४-पु.) यतः पदेन प्रकृते आनन्दो ग्राह्यः । **एतस्यैवेति** ॥ (बृ.६.३.३२) अन्यानि भूतानि मुक्तामुक्तचतुर्मुखादीनि एतस्य विष्णोरेव आनन्दस्य मात्रामंशमुपजीवन्ति अश्नन्तीत्यर्थः । शिष्टं सुगमम् । **अन्यज्ञानमिति** ॥ जीवानां ज्ञानमन्यत् नियामकादीशज्ञानान्नियम्यत्वेन विलक्षणम्, परस्य विष्णोरन्यत्वं विशिनष्टि - **नित्येति** ॥ परस्य ज्ञानं नित्यानन्दाव्ययं नियमेनानन्दरूपमव्ययं च पूर्णम् अपरिमितं च विधीयते तेन रूपेण व्यपदिश्यते शास्त्रेष्वित्यर्थः ॥ ३२ ॥

१. **अदृष्टमिति ॥ अदृष्टम्** अन्येन सर्वात्मनाऽदृष्टम्, अन्यत्राद्दृष्टं वा अव्यवहार्यं वा । चाव्यपदेश्यं विविक्ततया निरूपयितुमशक्यमित्यर्थः । शिष्टं स्पष्टम् ॥ ३३ ॥

चतुर्मुखानन्दादीनां दर्शनात् सर्वाऽनुभवासिद्धमनोवागोचरत्वात् कौण्डिन्यश्रुतिः इति ब्रह्मानन्दादेर्वाङ्मनसाऽगोचरत्वं वक्ति ततः तत्सिद्धात् ब्रह्मानन्दादेर्वाङ् मनसाऽगोचरत्वादिति ॥ अस्य 'परमेव' इति पूर्वभाष्येऽन्वयः ॥ ३३ ॥

**अप्रसिद्धस्य कथमानन्द इत्यादिव्यपदेश इत्यतो वक्ति—**

उत्तरसूत्रमवतारयन्ति- **अप्रसिद्धस्येति** ॥ अस्मदाद्यनुभवाविषयस्य लौकिकविलक्षणस्यानन्दादेः तद्विषय इति यावत् । कथमित्याक्षेपे । केन निमित्तेन कस्मै प्रयोजनाय च । आनन्दादिव्यपदेशः- श्रुतिपुराणादिषु आनन्दादिपदप्रयोग इत्यर्थः । तथा च लौकिकतद्विलक्षणानन्दादेरनुगतानन्दत्वादि-धर्माभावेन तत्र शक्तिग्रहाभावात्, फलाभावाच्च, तत्राऽनन्दादिपदप्रयोगो न युक्त इति भावः ॥

**॥ ॐ बुद्ध्यर्थः पादवत् ॐ ॥ ३४ ॥**

आनन्दादिपदप्रयोग इति शेषः । पादेति लुप्तसप्तम्यन्तं पृथक्पदं च । अयमर्थः- आनन्दादिपदप्रयोगः अलौकिकानन्दादिविषये श्रुतिपुराणादिषु आनन्दादिशब्दप्रयोगः, **बुद्ध्यर्थः** अर्थविशेषज्ञानार्थः । पादो लोकविलक्षणे, त्रिपादविलक्षणे च, **पादे** जीवाख्ये **पादवत्** 'पादोऽस्य विश्वा भूतानि' इत्यादौ पादशब्दप्रयोगवदिति ॥ अयंभावः- यथा प्रसिद्धपादस्थांशत्वसाम्येन जीवे कृतपादशब्दप्रयोगस्येश्वरांशत्वं ज्ञानं फलं तथा प्रसिद्धानन्दादिनिष्ठानुकूलवेदनीयत्वसाम्येन ब्रह्मानन्दादौ कृताऽनन्दादिशब्द-प्रयोगस्यानुकूलवेदनीयत्वज्ञानमीश्वरीयत्वज्ञानं स्नेहपूर्वकमाहात्म्यज्ञानं च, फलम् । एवं च सादृश्याच्छक्तिग्रहोऽपि सिद्ध इति ॥

**जीवेश्वरसम्बन्धज्ञापनार्थमप्रसिद्धोऽपि पादो यथा पादशब्देन व्यपदिश्यते 'पादोऽस्य विश्वा भूतानि'(ऋ.१०.९०.३) इति तथा ॥**

**'अलौकिकोऽपि ज्ञानादिस्तच्छब्दैरेव भण्यते ।**
**ज्ञापनार्थाय लोकस्य यथा राजेव देवराट् ॥' इति च पाद्मे ।**

॥ इति परमताधिकरणम् (परानन्दाधिकरणम्) ॥ १६ ॥

भा. ॥ सूत्रार्थमाहुः- **जीवेत्यादि** ॥ अत्र भाष्ये यथायथमावृत्तिः । अयमर्थः- यथा अप्रसिद्धोऽपि लोकविलक्षणपादोऽपि जीवः 'पादोऽस्य विश्वा भूतानि' इत्यादौ पादशब्देन जीवेश्वरसम्बन्ध

ज्ञापनार्थं जीवे ईश्वरांशज्ञापनार्थं व्यपदिश्यते, तथा प्रसिद्धोऽप्यानन्दादिः ज्ञापनार्थमनुकूल-वेदनीयत्वज्ञापनार्थम् ईश्वरसम्बन्धज्ञापनार्थं, तदीयत्वज्ञापनार्थं, जीवेश्वरसम्बन्धज्ञापनार्थं, उत्तमजीवस्येश्वरभक्तिरूपज्ञानार्थं च, शब्देन श्रुत्यादिस्थाऽनन्दादिशब्देन व्यपदिश्यत इति ॥ [१]**पादइति** ॥ इयं दृष्टान्तार्था । उक्तार्थे दृष्टान्तान्तरपरस्मृतिमाहुः- [२]**अलौकिकोऽपीति ॥ पाद्म इति** ॥ अयमर्थ उक्त इति शेषः । यद्वा- अलौकिकोऽपीति प्रमाणे पादत्रयमावर्त्य भाष्यकारीयवचनत्वेनापि योज्यम् । अत्रालौकिकत्वं वेदानुपजीविलौकिकप्रमाणागम्यत्वमिति ज्ञेयम् ॥ ३४ ॥ अ.१६ ॥

**॥ इति परमताऽधिकरणम् ॥ १६ ॥**

१. **पादोऽस्येति** ॥ (ऋ.१०.९०.३) स्पष्टम् ।

२. **अलौकिक इति** ॥ ज्ञानादिः परस्येति शेषः । तच्छब्दैरेव लौकिकज्ञानादिवाचकज्ञानादिशब्दैरेव लोकस्य जनस्य ज्ञापनार्थाय ज्ञानोत्पत्त्यर्थं यथा देवराट् देवेन्द्रः लौकिकराजविलक्षणोऽपि राजेव लौकिकराज इव भण्यते इत्यर्थः । इन्द्रे राजत्वेन ज्ञापनम् आनन्दादौ चाऽनुकूलवेदनीयत्वादिना ज्ञापनमिति विवेकः ॥ ३४ ॥ अ.१६॥

## १७. स्थानविशेषाधिकरणम्

### (परमात्मनः रूपगुणेषु भेदो नास्ति)

**परानन्दमात्रात्वे कथं ब्रह्माद्यानन्दादीनां विशेष इत्यत्रोच्यते—**

अत्र नये चतुर्मुखाद्यानन्दादीनां भगवदानन्दादिप्रतिबिम्बत्वसमर्थनम् । तदभावेऽलौकिकत्वासिद्ध्या भक्तिर्न स्यादिति पूर्ववत् सङ्गतिः । चतुर्मुखाद्यानन्दादिर्विषयः । उक्तप्रतिबिम्बो न वेति संशयः । द्विविधोक्तिस्तद्बीजम् । नेति पूर्वपक्षः ॥

पूर्वपक्षमाहुः- **परानन्देति** ॥ परस्य विष्णोः केवलानन्दस्वरूपत्वम् इत्यर्थः । **ब्रह्माद्यानन्दादीनामिति** ॥ प्रतिबिम्बभूतचतुर्मुखाद्यानन्दादीनामित्यर्थः । विशेषः- तारतम्यम् । तथा च प्रतिबिम्बवैचित्र्यस्य बिम्बवैचित्र्याधीनत्वेन बिम्बभूतपरानन्दादौ तदभावात् प्रतिबिम्बे चतुर्मुखाद्यानन्दादौ वैचित्र्यं न स्यात् । अस्तिच तत्र वैचित्र्यं, यदि च भगवदानन्दादौ वैचित्र्यं स्वीक्रियते तर्हि (तस्य) अलौकिकत्वं न स्यादिति भावः ॥

**॥ ॐ स्थानविशेषात्प्रकाशादिवत् ॐ ॥ ३५ ॥**

अर्थाद्विशेषो युज्यत इति लभ्यते । अयमर्थः- विशेषः चतुर्मुखाद्यानन्दादिप्रतिबिम्बवैचित्र्यं **स्थानविशेषात्** उपाधिगुणवैचित्र्यात् **प्रकाशादिवत्** प्रकाशभूतसूर्यादिप्रतिबिम्बवैचित्र्यवद्युज्यत इति ॥ दृष्टान्ते दर्पणाद्युपाधिगतस्वच्छत्वमलिनत्वादिगुणवैचित्र्यात्प्रतिबिम्बेऽपि तादृशवैचित्र्यं सूर्यकान्तादौ प्रतिबिम्बस्य दाहकत्वं जलादौ प्रतिबिम्बस्य तदभावः दार्ष्टान्तिके चतुर्मुखादिस्वरूपोपाधिगतभक्त्यादिगुणवैचित्र्यात्प्रतिबिम्बस्यानन्दादेर्वैचित्र्यमिति भावः ॥

**यथाऽऽदित्यस्य दर्पणादिस्थानविशेषात् प्रतिबिम्बे विशेष एवमानन्दादेरपि ॥**

**'ब्रह्मादिगुणवैशेष्यादानन्दादिः परस्य च ।**
**प्रतिबिम्बत्वमायाति मध्योच्चादिविशेषतः ॥' इति च वाराहे ।**

**भा.** ॥ सूत्रार्थमाहुः- **यथेति** ॥ **आनन्दादेरिति** ॥ स्थानविशेषाद्विशेषो युज्यत इत्यर्थः । अत्र स्मृतिं चाहुः- [1]**ब्रह्मादीति** ॥ **वाराह इति** ॥ तत्रेत्युक्तेश्चैवमित्यन्वयः ॥ ३५ ॥

युक्त्यन्तरेणोक्तवैचित्र्यसाधनाय सूत्रम्-

**॥ ॐ उपपत्तेश्च ॐ ॥ ३६ । (इति)**

युज्यते विशेष इति वर्तते । अयमर्थः- **विशेषः** बिम्बवैचित्र्याऽभावेऽपि चतुर्मुखाद्यानन्दादि-प्रातिबिम्बवैचित्र्यं **युज्यते उपपत्तेश्च** भगवत्सामर्थ्येनोपपन्नत्वादिति ॥

**'ऐश्वर्यात् परमाद्विष्णोर्भक्त्यादीनामनादितः ।**
**ब्रह्मादीनां सूपपन्ना ह्यानन्दादेर्विचित्रता' ॥ इति हि पाद्मे ।**

॥ इति स्थानविशेषाधिकरणम् ॥ १७ ॥

**भा.**॥ उपपत्तौ स्मृतिमाहुः- [2]**ऐश्वर्यादिति** ॥ **पाद्म इति** ॥ तत्रेत्युक्तेरुपपत्तेरिति सूत्रेऽन्वयः ॥ ३६॥ अ.१७ ॥

॥ इति स्थानविशेषाऽधिकरणम् ॥ १७ ॥

---

१. **ब्रह्मादीति** ॥ परस्यानन्दादिः मध्योच्चादिविभेदतः भेदेन ब्रह्मादिगुणवैशेष्यात् ब्रह्मादिगतभक्ति-ज्ञानादिगुणवैचित्र्यात् प्रतिबिम्बत्वं प्रतिफलनम् आयाति प्राप्नोति ब्रह्मादिरूपोपाधौ तारतम्यानुरोधेन प्रतिफलितो भवतीति यावदित्यर्थः ॥ ३५ ॥

२. **ऐश्वर्यादिति** ॥ भक्त्यादीनां ब्रह्मादिभक्त्यादीनां ब्रह्मादीनामानन्दादेरित्यर्थः । शिष्टं सुगमम् ॥ ३६ ॥ अ.१७॥

## १८. प्रतिषेधाधिकरणम्

(ध्यानकाले यद्रूपं प्रतीयते तत् ब्रह्मस्वरूपं न)

**ध्यानकाले यच्चित्ते प्रदृश्यते तदेव हि ब्रह्मरूपम् । अतः कथमव्यक्ततेत्यत आह—**

अत्र नये भगवतः प्रकारान्तरेणाऽव्यक्तत्वसमर्थनम् । व्यक्तत्वे तत्र भक्त्यतिशयायोगात् (पूर्ववत्, अव्यक्तत्व( ३.२.१४) नयेन वा) सङ्गतिः ॥ ब्रह्म विषयः । अव्यक्तं न वेति संशयः । द्विविधवस्तुदर्शनं तद्बीजम् । नेति पूर्वपक्षः ॥ पूर्वपक्षमाहुः- **ध्यानेति ॥ अव्यक्ततेति ॥** पूर्वोक्ता कथं सङ्गच्छत इति भावः ॥

### ॥ ॐ तथान्यत्प्रतिषेधात् ॐ ॥ ३७ ॥

तदिति वर्तते । अयमर्थः:- **तथा** चतुर्मुखाद्याऽनन्दादितः पराऽनन्दादेरन्यत्ववत् तत् ब्रह्म **अन्यत्** ध्यानविषयीभूतवासनामयवस्तुतो विलक्षणं **प्रतिषेधात्** 'नेदं यदिदमुपासते' इति श्रुत्या ध्यानविषयस्य ब्रह्मत्वनिषेधादिति ॥

**यथा जीवानन्दादेरन्यद्ब्रह्म तथोपासाकृतादपि ।**

**'यन्मनसा न मनुते येनाऽहुर्मनो मतम् ।**
**तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते ॥' (के.उ.१.६) इति प्रतिषेधात् ॥**

**'पश्यन्ति परमं ब्रह्म चित्ते यत्प्रतिबिम्बितम् ।**
**ब्रह्मैव प्रतिबिम्बे यदतस्तेषां फलप्रदम् ॥**
**तदुपासनं च भवति प्रतिमोपासनं यथा ।**
**दृश्यते त्वापरोक्ष्येण ज्ञानेनैव परं पदम् ।**
**उपासना त्वापरोक्ष्यं गमयेत्तत्प्रसादतः ॥' इति च ब्रह्मतर्के ॥ ३७ ॥**

॥ इति प्रतिषेधाधिकरणम् ॥ १८ ॥

**भा.** ॥ सूत्रं व्याचक्षते- **यथेति** ॥ **ब्रह्मेति** ॥ ब्रह्माऽनन्दादीत्यर्थः । **कृतादपीति** ॥ अन्यद्ब्रह्मेति वर्तते । परं ब्रह्म उपासनविषयादन्यदित्यर्थः । निषेधकश्रुतिमाहुः- [1]**यन्मनसेति** ॥ ध्यानविषयस्याब्रह्मत्वे कथं ब्रह्म फलदं स्यादित्यत आहुः- [2]**पश्यन्तीति** ॥ **ब्रह्मतर्क इति** ॥ ध्यातवस्तुस्थं ब्रह्मफलदमित्युक्तमिति शेषः । ननु उपासनाविषयस्य वासनामयत्वे 'आध्यानाय प्रयोजनाभावात्'(३.३.१५) इति सूत्रेण श्रुत्यादौ गुणकथनस्य गुणप्रकारकोपासनार्थत्वं वक्ष्यते । तद्विरोधः स्यात् । ब्रह्मण उपासनाविषयत्वाभावात् ध्यानविषयवासनामयस्य श्रुत्युक्तगुणाभावात् वासनामयविशेष्यकश्रुत्युक्तगुणप्रकारकोपासनाङ्गीकारस्तु न युक्तः । तस्य मिथ्योपासनात्वादिति चेदुच्यते । अपरोक्षज्ञानकारणभूतं ध्यानं तु श्रुत्युक्तगुणविशिष्टब्रह्मवासनामयोभयविषयकं मानसज्ञानम् । तच्च नृसिंहाकारमुच्यते परोक्षापरोक्षात्मकमिति यावत् । सुरभिचन्दनखण्डमिति ज्ञानवत् तत्र यथा सौरभांशे अलौकिकविषयता चन्दनखण्डांशे तु लौकिकविषयता तथा ब्रह्मांशे शास्त्रश्रवणमननप्रयोज्यपरोक्षत्वाख्यविषयता वासनामयांशे तु रामकृष्णादि प्रतीकानुभवजन्य-संस्कारप्रयोज्यापरोक्षत्वाख्यविषयताऽस्ति । तथा च ब्रह्मांशे गुणप्रकारकत्वसिद्ध्यर्थं श्रुत्यादौ गुणकथनं, वासनामयांशे गुणप्रकारकत्वाऽभावेन मिथ्योपासनात्वं नेति ॥ एवं च पूर्वपक्षिणा एतादृश विवेकाग्रहेण ध्यानस्य प्रत्यक्षरूपत्वेन तद्विषयत्वाद्ब्रह्मणोऽव्यक्तत्वं नेति शङ्किते तादृशध्यानस्य वासनामयांशे प्रत्यक्षत्वेऽपि ब्रह्मांशे प्रत्यक्षत्वं नेति सिद्धान्तितमिति ज्ञेयम् । भाष्ये 'उपासाकृतात्' इत्यस्य उपासनानिरूपितापरोक्ष[illegible]ख्यविषयताश्रयादित्यर्थः ॥ ३७ ॥ अ.१८ ॥

॥ इति **प्रतिषेधाधिकरणम्** ॥ १८ ॥

---

१. **यन्मनसेति** ॥ (तल.१-६) [illegible] वस्तु उपासते ध्यायन्ति नेदं ब्रह्म किन्तु पुरुषो यद्वस्तु न मनुते साकल्येन न जानाति येन वस्तुना मनो मतं ज्ञातमाहुः कवयः तदेव ब्रह्मेति विद्धि त्वमित्यर्थः ।

२.**पश्यन्तीति** ॥ यत् चित्ते मनसि प्रतिबिम्बितं प्रतिफलितं वासनामयं वस्तु तत्परमं ब्रह्मेत्युच्यते उपचारेण । तदेव ध्यानकाले पश्यन्ति । प्रतिबिम्बिते यद्ब्रह्मास्ति तदेव तेषां ध्यातॄणां फलप्रदं दर्शनाख्यफलप्रदम् । यथा प्रतिमोपासनं प्रतिमायामित्थंभूतो भगवानस्तीति स्मृतिः, तदुपासनं तदधिष्ठितब्रह्मोपासनं भवति । तथा तदुपासनं वासनामयवस्तुध्यानमपि तदुपासनं ब्रह्मोपासनं भवति यतः परं पदं ब्रह्म आपरोक्ष्येणैव स्वार्थे ष्यञ् अपरोक्षज्ञानेनैव दृश्यते विषयीक्रियते न तु ध्यानेन. **उपासना** तु ध्यानं तु **तत्प्रसादतः** ब्रह्मप्रसादतः **आपरोक्ष्यं** ब्रह्मापरोक्षज्ञानं **गमयेत्** प्रापयेदत इत्यर्थः ॥ ३७ ॥ अ.१८ ॥

## १९. सर्वगतत्वाधिकरणम्

**(सर्वत्र सर्वदा सृष्ट्यादिकर्ता हरिरेव)**

भगवद्दत्ततदीयसर्वस्वातन्त्र्येण देशकालान्तरेऽन्यः सृष्ट्यादिकं करोतीति शङ्कावारणाय अत्र नये ब्रह्मणः सार्वकालिकसृष्ट्यादिकर्तृत्वसमर्थनम् । सङ्गतिः पूर्ववत् । हरिर्विषयः । सर्वदेशकालवृत्ति-सृष्ट्यादिकर्ता नवेति संशयः । प्राचीनोक्तेरुभयथाऽपि सम्भवस्तद्बीजम्, नेति पूर्वपक्षः ॥

**देशकालान्तरेऽन्यतोऽपि सृष्ट्यादिर्युक्तेत्यतो ब्रूते—**

पूर्वपक्षमाहुः- **देशेति** ॥ **युक्तमिति** ॥ लोके राजदत्तसर्वस्वातन्त्र्येणान्यस्य पालन-कर्तृत्वादिदर्शनादिति भावः ॥

**॥ ॐ अनेन सर्वगतत्वमायामयशब्दादिभ्यः ॐ ॥ ३८ ॥**

अर्थात् सृष्ट्यादिकं प्रवर्तत इति लभ्यते । सर्वेति लुप्तसप्तमीकं पृथक्पदं च । चेति वर्तते । अयमर्थः- **अनेन** च परमात्मनैव **सर्वेषु** सर्वत्र देशे, सर्वस्मिन्काले, सर्ववस्तुविषये, सृष्ट्यादिकं प्रवर्तते सर्वगतत्वमायामयशब्दादिभ्यः सर्वगतत्व श्रुतेः, मायामयशब्दव्याख्यारूप'सर्वत्र सर्वम्' इत्यादिश्रुतेः, आदिना अन्यस्य कारणत्वे मानाभावाच्चेति ॥

**सर्वदेशकालवस्तुष्वनेनैव सृष्ट्यादिकं प्रवर्तते । 'एष सर्व एष सर्वगत एष ईश्वर एषोऽचिन्त्य एष परमः' इति भाल्लवेयश्रुतिः ।**

**'सर्वत्र सर्वमेतस्मात्सर्वदा सर्ववस्तुषु ।**
**स्वरूपभूतया नित्यशक्त्या मायाख्यया यतः ।**
**अतो मायामयं विष्णुं प्रवदन्ति सनातनम्' ॥ इति चतुर्वेदशिखायाम् ।**

**आदिशब्दादन्यत्र प्रमाणाभावाच्च ॥ ३८ ॥**

॥ इति सर्वमतत्वाधिकरणम् ॥ १९ ॥

**भा.॥** सूत्रार्थमाहुः- **सर्वेति ॥** श्रुतिस्मृती आहुः- [१]**एष सर्व इत्यादि ॥ श्रुतिरिति ॥** यतः श्रुतिरस्ति अतः, शिखायामित्युक्तेः, **आदिशब्दात्-** आदिशब्दसूचितात् । **अन्यस्य-** विष्ण्वन्यस्य कारणत्वे । **प्रमाणाभावाच्च-** दृढतरमानाभावाच्चेत्यर्थः । (त्रयाणामपि पञ्चम्यन्तानां प्रवर्तत इत्यत्राऽन्वयः) ॥ ३८ ॥ अ.१९ ॥।

**॥ इति सर्वगतत्वाधिकरणम् ॥ १९ ॥**

१. **एष सर्व इति ॥ एष** विष्णुः **सर्वः** गुणपरिपूर्णः **सर्वगतः** व्याप्तश्चेत्यर्थः । शिष्टं सुगमम् । **सर्वत्रेति ॥ सर्वत्र** सर्वदेशेषु **सर्वदा** सर्वकालेषु सर्ववस्तुषु सर्ववस्तुसम्बन्धिसृष्ट्यादिकं **एतस्माद्** विष्णोः **प्रवर्तते** भवति. **मायामयम्** उक्तमायास्वरूपकं प्रवदन्तीत्यर्थः । शिष्टं स्पष्टम् ॥ ३८ । अ. १९ ॥ ३९ ॥

## २०. फलदानाधिकरणम्

**(परमात्मैव कर्मणः फलस्य च हेतुः)**

**कर्मापेक्षत्वात् फलदानस्य तदेव ददातीति न वाच्यम् । कुतः–**

अत्र नये विष्णोः कर्मफलप्रदत्वसमर्थनम् । सङ्गतिः पूर्ववत् । विष्णुर्विषयः । कर्मफलदाता न वेति संशयः । विप्रतिपत्तिः तद्बीजम् । नेति पूर्वपक्षः ॥

पूर्वपक्षमाहुः- **कर्माऽपेक्षत्वादिति ॥** ईश्वरस्य फलप्रदत्वपक्षेऽपि कर्मापेक्षाऽस्त्येव अन्यथा कर्म वैयर्थ्यं स्यादिति भावः । **तदेव** - कर्मैव । **ददातीति ॥** फलमिति शेषः । न च वाच्यमित्यत्र हेतुं पृच्छन्ति- **कुत इति ॥** उत्तरत्वेन सूत्रं पठन्ति-

**॥ ॐ फलमत उपपत्तेः ॐ ॥ ३९ ॥**

चेति वर्तते । अयमर्थः- **फलं** कर्मैकजन्यत्वेनाऽभिमतं स्वर्गादिफलम् **अतश्च** ईश्वरादेव भवति न कर्मतः । **उपपत्तेः** परमात्मनश्चेतनत्वेन फलप्रदत्वस्योपपन्नत्वादिति ॥

**अत एवेश्वरात् फलं भवति । न ह्यचेतनस्य स्वतः प्रवृत्तिर्युज्यते ॥**

**भा.॥** सूत्रं व्याचक्षते- **अत एवेति ॥** (अनुवादोऽयं । तदर्थः ईश्वरेति ।) **न ह्यचेतनस्येति ॥** हि यतोऽचेतनस्य कर्मणः स्वतःप्रवृत्तिः स्वातन्त्र्येण फलप्रदत्वं न युज्यतेऽत इत्यर्थः । अस्य भवतीत्यत्रान्वयः ॥ ३९ ॥ नन्वीश्वरस्य चेतनत्वेन फलप्रदत्वसम्भावनायामपि तन्निश्चयः कथमिति शङ्कावारणाय सूत्रम्-

**॥ ॐ श्रुतत्वाच्च ॐ ॥ ४० ॥**

फलमत इति वर्तते । अयमर्थः- **फलं** पूर्वोक्तफलम् **अतो** ब्रह्मतो भवति । **श्रुतत्वाच्च** 'विज्ञानमानन्दम्' इति श्रुत्या तथोक्तत्वाच्चेति ॥

**'विज्ञानमानन्दं ब्रह्म रातिर्दातुः परायणम्'(५.९.२८) इति ॥**

**भा.** ॥ सूत्रोपात्तश्रुतिमाहुः- [१]**विज्ञानमिति ॥ परायणमितीति** ॥ अस्य सूत्रेऽन्वयः । सूत्रस्य 'फलं भवति' इति पूर्वभाष्येऽन्वयः ॥ ४० ॥

**उक्तार्थाक्षेपाय सूत्रम्-**

**॥ ॐ धर्मं जैमिनिरत एव ॐ ॥ ४१ ॥**

**च फलमिति वर्तते । धर्मेत्यधर्मस्याप्युपलक्षणम् । जातमिति मन्यत इति शेषः । फलं जातमिति द्वयमपि विधेयविशेषणम् । यथायथमावृत्तिः । अयमर्थः- जैमिनिः जैमिनिराचार्यः धर्ममेव पुण्यपापरूपकर्माख्यधर्ममेव फलम् उक्तफलप्रदमिति मन्यते । धर्मं फलप्रदं धर्मम् अतः ईश्वराज्जातं मन्यते । अतः 'एष ह्येव' इति श्रुतेरिति ॥ तथा च फलस्य कर्मान्वयव्यतिरेकानुविधायित्वात् न्यायप्राप्तं कर्मणः फलदत्वं जैमिनिसम्मतं चेति भावः ।**

**यतः फलं तदेव कर्म ईश्वराद्भवति ।**

**'एष ह्येव साधुकर्म कारयति' (कौ.३.८) इति श्रुतेरिति जैमिनिः ॥**

**भा.**॥ सूत्रं व्याकुर्वन्ति- **यत इति** ॥ यादृशकर्मत इत्यर्थः । (फलं- भवति) तदेव- फलप्रदं कर्मैव- ईश्वराद्भवति न तु फलमित्यर्थः ॥ अत इत्यस्यार्थान्तरमाहुः- [२]**एष ह्येवेति** ॥ ४१ ॥

**पूर्वसूत्रोक्तशङ्कासमाधानाय सूत्रम्-**

**॥ ॐ पूर्वं तु बादरायणो हेतुव्यपदेशात् ॐ ॥ ४२ ॥**

**फलं, धर्मं, मन्यत, इति वर्तते । तुर्विशेषे । हेत्विति भावप्रधानं च । लुप्तविभक्तिकं पृथक्पदम् । यथायथमावृत्तिविपरिणामौ । अयमर्थः- बादरायणस्तु फले विषये पूर्वं परमात्मानं हेतुं तु हेतुविशेषं कर्तारं धर्मं पुण्यादिरूपं धर्मं हेतुं तु हेतुविशेषं करणं मन्यते । पूर्वधर्मयोःहेतुत्वेन कर्तृत्वकरणत्वाभ्यां**

---

१. **विज्ञानमिति** ॥ (बृ.५.९.२८)'तिष्ठमानस्य तद्विदः' इति वाक्यशेषः । **दातुः** हविर्दातॄणां यजमानानां पूजकानां **रातिः** प्रियः फलप्रद इति यावत् । **तिष्ठमानस्य** स्वस्मिन् मनसा वर्तमानानां **तद्विदः** ब्रह्मज्ञानिनां **परायणं** परमप्रियं **विज्ञानं** ज्ञानपूर्णम् **आनन्दं** सुखपूर्णं ब्रह्मेत्यर्थः ॥ ४० ॥

२. **एष इति** ॥ (कौ.३.८) एषः परमात्मा । अन्यत् स्पष्टम् ॥ ४१ ॥

**व्यपदेशात्** 'पुण्येन पुण्यम्' इति श्रुतावुक्तत्वादिति ॥ ब्रह्मेति वक्तव्ये पूर्वमित्युक्तिः सर्वापेक्षया पूर्वतनत्वबोधनद्वारा कारणत्वबोधनार्था । एवं च लोकेऽपि चेतन एव कर्तृत्वस्य अचेतने करणत्वस्य दृष्टत्वेन तथैव युक्तमिति भावः ॥

**परस्य कर्मणश्चोभयोः फलकारणत्वेऽपि न कर्म परप्रवर्तकम् । पर एव कर्मणः प्रवर्तकः । 'पुण्येन पुण्यं लोकं नयति पापेन पापम्'(प्र.३.७) इति हेतुव्यपदेशात् ॥ 'द्रव्यं कर्म च कालश्च'(भाग.२.५.१४) इति च ॥**

॥ इति फलदानाधिकरणम् ॥ २० ॥

## ॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते श्रीमद्ब्रह्मसूत्रभाष्ये तृतीयाध्याये द्वितीयः पादः ॥

भा.॥ सूत्रार्थमाहुः- **परस्येति** ॥ फलकारणत्वेऽपीति ॥ फलान्वयव्यतिरेकाऽनुविधायित्वेऽपी-त्यर्थः । व्यपदेशस्थलमाहुः- [1]**पुण्येनेति** ॥ कर्मसत्तापि ब्रह्माधीनेत्याहुः- [2]**द्रव्यमिति ॥** इति चेति ॥ इत्युक्तेश्चेत्यर्थः ॥ प्रवर्तक इत्यत्रान्वयः ॥ ४२ ॥ अ.२० ॥

॥ इति फलाधिकरणम् ॥

## ॥ इति तृतीयाध्यायस्य द्वितीयः पादः ॥

१. **पुण्येनेति** ॥ व्या. (सं.१, पृ. ३६०)

२. **द्रव्यमिति** ॥ व्या. (सं.१, पृ. ३६१) ॥ ४२ ॥ अ.२० ॥

# अथ तृतीयाध्यायस्य तृतीयः पादः

## १. सर्ववेदाधिकरणम्

**(सर्ववेदार्थविचारेण ब्रह्म ज्ञेयम्)**

एतत्पादार्थं दर्शयन्ति - **उपासनेति** ॥ जिज्ञासेत्यर्थः । **उच्यत इति ह**। भक्तिसाध्यत्वात्, ज्ञानसाधनत्वाच्च, अवसरप्राप्ता सपरिकरा सप्रमाणातारतम्योपेतोपासनाऽत्र(पादे)कर्तव्यत्वेन निरूप्यत इत्यर्थः । अत्र नये जिज्ञासानयेन कर्तव्यत्वेनोक्तयोः श्रवणमननयोः सर्वशाखाविषयत्वसमर्थनम् । अन्यथाऽस्य शास्त्रस्य सर्वोपादेयत्वं न स्यादिति 'जिज्ञासा' (१.१.१)नयेन सङ्गतिः । वेदोदितं ब्रह्म विषयः । एकैकेन सर्वशाखोक्तगुणकं श्रवणमननाभ्यां ज्ञातव्यमुत स्वस्वशाखोक्तगुणकमेव श्रवण-मननाभ्यां ज्ञातव्यमिति संशयः । ब्रह्मज्ञानविधेरुभयथाऽपि सम्भवस्तद्बीजम् । स्वस्वशाखोक्तगुणकमेव श्रवणादिना ज्ञातव्यमिति पूर्वपक्षः । आद्यनयतात्पर्यमाहुः- **सर्वपरीति** ॥ सर्ववेदार्थविषयकं श्रवणं मननं च प्रथमनये कर्तव्यत्वेनोच्यत इत्यर्थः । अयं भावः- उपासना द्विविधा श्रवणमननरूपा, ध्यानरूपा चेति । तत्र ध्यानाङ्गत्वादाद्योपासनाऽत्र विधीयत इति ॥

**उपासनाऽस्मिन् पाद उच्यते । सर्वपरिज्ञानं प्रथमत उच्यते—**

**॥ ॐ सर्ववेदान्तप्रत्ययं चोदनाद्यविशेषात् ॐ ॥ १ ॥**

सर्वेति लुप्तषष्ठ्यन्तं पृथक्पदं च । पूर्वन्त्विति वर्तते । तुरेवार्थे । सर्ववेदानामन्तो निर्णयः तेन जातः प्रत्ययः, ततोऽर्श आद्यच् । चोदनादीत्यादिना युक्तेर्ग्रहणम् । अयमर्थः- **पूर्वं ब्रह्म सर्ववेदान्तप्रत्ययं** तु सर्ववेदार्थविषयकश्रवणमननजन्यनिर्णयजाततत्त्वनिश्चयविषय एव न तु स्वस्वशाखामात्रप्रयोज्योक्त-निश्चयविषयः **चोदनाद्यविशेषात्** 'आत्मेत्येवोपासीत' इत्युपासनाविधिः, युक्तेश्च 'आत्मत्वोपास्तौ सर्वगुणोपसंहारो भवति' इत्यादियुक्तेश्च, अविशेषात् अधिकारविशेषपुरस्कारेणाप्रवृत्तेरिति ॥

**अन्तो निर्णयः । 'उभयोरपि दृष्टोऽन्तः' (गी.२.१६) इति वचनात् । सर्ववेदनिर्णयोत्पाद्यज्ञानं ब्रह्म । 'आत्मेत्येवोपासीत' (बृ.३.४.७) इत्यादिविधीनां तदुक्तयुक्तीनां चाविशिष्टत्वात् ॥**

भा. ॥ सौत्रान्तःपदस्यार्थमाहुः- **अन्तो** निर्णय इति ॥ तत्र मानमाहुः- [१]**उभयोरिति ॥ वचनादिति** ॥ वचने तथा दृष्टत्वादित्यर्थः । पदार्थमुक्त्वा वाक्यार्थमाहुः- **सर्ववेदेति ॥** सर्ववेदार्थविषयकश्रवणमननजन्यनिर्णयः अस्याः श्रुतेरत्रैव तात्पर्यमिति निर्णयः तेनोत्पाद्यतत्त्वनिश्चयविषयो ब्रह्मेत्यर्थः । हेत्वंशं व्याचक्षते- [२]**आत्मेति ॥** आदिना 'आत्मानमेव लोकमुपासीत' इत्यादेः ग्रहणम् ॥ **तदुक्तयुक्तीनामिति ॥** 'आत्मेत्येवोपासीत' इति विधिसन्निधिपठिताः, 'अत्र ह्येते सर्वमेकं भवन्ति' इत्यर्थवादोक्तयुक्तेः । 'आत्मानमेव लोकमुपासीत' इति विधिसन्निधिस्थ 'न हास्य' इति वाक्योक्ताक्षय्यफलहेतुत्वयुक्तेः, 'तमेवैकं जानथ' इति विधिसहपठित-'अमृतस्यैष सेतुः' इत्यर्थवादोक्तमुक्तप्राप्यत्वादियुक्तेश्चेत्यर्थः ॥ १ ॥

**उक्तमाक्षिप्य समादधत्सूत्रम्-**

## ॥ ॐ भेदान्नेति चेदेकस्यामपि ॐ ॥ २ ॥

**पूर्वं, सर्ववेदान्तप्रत्ययमिति वर्तते । भेदादित्यावर्तते । अयमर्थः- पूर्वं ब्रह्म सर्वेषामधिकारिणां**

---

१. **उभयोरपीति** ॥ (गी.२.१६) 'नासतो विद्यते भावो नाभावो विद्यते सतः'इति पूर्वार्धम् । 'असतः' तच्छब्दितस्य कारणस्य प्रकृतेः 'सतः' तच्छब्दितस्य ब्रह्मणश्च अभावः प्रागभावो न विद्यते अभावः प्रध्वंसश्च न विद्यते । अनयोरुभयोः सदसतोरन्तो निर्णयोऽनादिनित्यत्वावधारणं तत्त्वदर्शिभिःतत्त्वज्ञानिभिरपि दृष्टः कृतश्चेत्यर्थः ।

२. **आत्मेत्येवेति** ॥ (बृ.३.४.७)'स प्राणन्नेव प्राणो नाम भवति वदन् वाक् पश्यंश्चक्षुः शृण्वन् श्रोत्रं मन्वानो मनः तान्यस्यैतानि कर्मनामान्येव स योऽत एकैकमुपास्ते न स वेद अकृत्स्नो ह्येषोऽत एकैकेन भवति । आत्मेत्येवोपासीत अत्र ह्येते सर्व एकं भवन्ति' इति श्रूयते । अस्यार्थः- **स** देहप्रविष्टो हरिः **अकृत्स्नः** एकैकगुणवाचकशब्दवाच्यो हि भवति खलु, तदेवोपपादयति- **प्राणन्नेवेत्यादिना ॥ प्राणन्नेव** श्वासव्यापारं कुर्वन्नेव प्राणः तन्नामको भवति । नाम प्रसिद्धम् एवमग्रेऽपि ज्ञेयम् । तान्येतानि प्राणादिनामानि **अस्य** देहप्रविष्टस्य हरेः **कर्मनामानि** एकैकक्रियानिमित्तकानि न त्वशेषगुणवाचीनि **सः** प्रसिद्धो योऽधिकारी **अत** एषु प्राणनादिषु **एष** उपासकः अतः एषु प्राणनादिषु **एकैकेन** एकैकगुणोपासनेन **अकृत्स्नः** स्वाभिमत-सच्चिदानन्दत्वादिरूपफलवान्नभवति, तर्हि कथमुपास्य इत्यत आह- **आत्मेति ॥** अत्र आत्मशब्दार्थे एते बुद्धिस्था आनन्दादयः पूर्वोक्ताः प्राणत्ववक्तृत्वद्रष्टृत्वश्रोतृत्वमन्तृत्वादयश्च सर्वे गुणाः एकं भवन्ति अन्तर्भवन्ति यतः आत्मेत्येव आत्मशब्दवाच्यगुणवत्त्वेनैवोपासीतेति । शिष्टं स्पष्टम् ॥ १ ॥

सर्ववेदान्तप्रत्ययं न, **भेदात्** प्रतिशाखं 'विज्ञानमानन्दं ब्रह्म', 'प्राणो ब्रह्म कं ब्रह्म', 'सत्यं ज्ञानमनन्तं ब्रह्म' इति तत्तद्गुणविशिष्टवस्तुभेदोक्तेरिति चेन्न । **एकस्यामपि** स्वस्वशाखायामपि **भेदात्** 'विज्ञानमानन्दं ब्रह्म' इत्यादिना तत्तद्गुणवद्वस्तुभेदोक्तेरिति ॥ तथा च एकेनाऽपि एकशाखोक्तमपि सर्वं वस्तु न प्रत्येतव्यं स्यात् यदि च गुणानां भेदेऽपि धर्मिण एकत्वादेकशाखोक्तं सर्वं ज्ञेयमित्युच्यते, तर्हि सर्ववेदोक्तमप्येवमेवेति भावः ॥

**'विज्ञानमानन्दं ब्रह्म'(बृ.५.१.२८) । 'सत्यं ज्ञानमनन्तं ब्रह्म' (तै.२.१) इत्यादि प्रतिशाखमुक्तिभेदान्नैकाधिकारिविषयाः सर्वशाखा इति चेन्न । एकस्यामपि शाखायां 'आत्मेत्येवोपासीत'(छा.४.१०.५) 'खं ब्रह्म' (बृ.३.४.६) इत्यादि भेददर्शनात् ॥**

भा. ॥ (श्रुत्युपन्यासेन सौत्र) पूर्वपक्षमाहुः- [1]**विज्ञानमिति** ॥ सिद्धान्तयन्ति- **नेति** ॥ एकशाखामाहुः- [2]**आत्मेत्येवेत्यादि** ॥ २ ॥

हेत्वन्तरेणोक्तार्थसाधनाय सूत्रम्-

**॥ ॐ स्वाध्यायस्य तथात्वेन हि समाचारेऽधिकाराच्च ॐ ॥ ३ ॥**

पूर्वं सर्ववेदान्तप्रत्ययमिति वर्तते । हिः स्मृतिसमुच्चये । अयमर्थः- पूर्वं ब्रह्म सर्वेषां सर्ववेदान्तप्रत्ययं **स्वाध्यायस्य** 'स्वाध्यायोऽध्येतव्यः' इत्यध्ययनविधेः **तथात्वेन** सर्वाधिकारिसाधारण्येन प्रवृत्तत्वात्, 'वेदः कृत्स्नोऽधिगन्तव्यः' इति स्मृतेश्च, **समाचारे** सर्ववेदोक्तकर्मकरणे **अधिकाराच्च** 'सर्ववेदोक्तमार्गेण' इति स्मृत्युक्ताधिकाराच्चेति ॥

**'स्वाध्यायोऽध्येतव्यः' (तै.आ.२.१५) इति सामान्यविधेः । हिशब्दात् 'वेदः कृत्स्नोऽधिगन्तव्यः सरहस्यो द्विजन्मना' इति स्मृतेः ॥**

**'सर्ववेदोक्तमार्गेण कर्म कुर्वीत नित्यशः ।**
**आनन्दो हि फलं यस्माच्छाखाभेदो ह्यशक्तिजः ॥**

१. **विज्ञानमिति** ॥ व्या.(सं.१. पृ. १६९) सत्यंज्ञानमिति ॥ व्या. (सं.१. पृ. ९३)

२. **आत्मेत्येवेति** ॥ व्या.(पृ. ९१) ॥ २ ॥

**सर्वकर्मकृतौ यस्मादशक्ताः सर्वजन्तवः ।**
**शाखाभेदं कर्मभेदं व्यासस्तस्मादचीक्कृपत् ॥' इति ।**

**समाचारे सर्वेषामधिकाराच्च ॥ ३ ॥**

भा.॥ स्वाध्यायपदार्थमाहुः- [1]**स्वध्यायोऽध्येतव्य इति ॥ हिशब्दादिति ॥** सूचिताया इति शेषः । तामेव स्मृतिमाहुः- [2]**वेदःकृत्स्न इति ।** अधिकारे स्मृतिमाहुः- [3]**सर्ववेदोक्तेति ॥ अचीक्कृपदिति ॥** इत्युक्ताधिकाराच्चेत्यन्वयः । भाष्यस्य 'सर्ववेदोत्पाद्यज्ञानम्' इति पूर्वभाष्येऽन्वयः ॥ ३ ॥

**सर्ववेदजन्यज्ञानवतामेव ध्यानेऽधिकारे मन्दानां ज्ञानाभावप्रसङ्ग इति शङ्कावारणाय सूत्रम्-**

## ॥ ॐ सलिलवच्च तन्नियमः ॐ ॥ ४ ॥

**चोऽवधारणे । अयमर्थः- तन्नियमः तेषामधिकारिणां सर्ववेदनिर्णयेन ब्रह्म ज्ञातव्यमिति नियमः सलिलवच्च सर्वसलिलसम्बन्धिसमुद्राश्रयत्वनियमवदेवेति ॥ अयंभावः- यथा सर्वासामपां 'समुद्र एकायनम्' इति श्रुत्या सर्वसलिलानां समुद्राश्रयत्वोक्तावपि प्रतिबन्धकाऽभाव एव सर्वेषां तदाश्रयकत्वं प्रतिबन्धके सति तु केषाञ्चित्तदाश्रयकत्वं नाऽस्ति । तथा सर्वाधिकारिणां सर्ववेदाध्ययनपूर्वकं ब्रह्मज्ञानबोधनेऽपि येषां सर्ववेदाध्ययने, ज्ञाने च, शक्त्यभावः तेषां यथाशक्ति ज्ञातव्यमिति ॥ लोकेऽपि सर्वं भुज्यतामित्युक्ते यथाशक्त्येव भुज्यते न तु सर्वमित्यपि ज्ञेयम् ॥**

**यथा सर्वं सलिलं समुद्रं गच्छति एवं सर्वाणि वचनानि ब्रह्मज्ञानार्थानीति नियमः । आग्नेये च–**

---

१. **स्वाध्याय इति ॥** (तै.आ.२.१५) स्वाध्यायो वेदः अध्येतव्यः प्रयोजनवदर्थज्ञानोद्देशेनाध्येय इत्यर्थः ॥

२. **वेद इति ॥ द्विजन्मना** त्रैवर्णिकेन **सरहस्यः** उपनिषदादिसहितः, रहस्यार्थसहितो वा, **कृत्स्नः** सर्वो वेदः अर्थज्ञानार्थमधिगन्तव्य इत्यर्थः ।

३. **सर्ववेदेति ॥** सर्ववेदान् सर्वशाखाश्च अधिगम्य **सर्ववेदोक्तमार्गेण** तदुक्तप्रकारेण **कर्म** यज्ञादिकं **कुर्वीत हि** यतः ज्ञानिकर्मणः **आनन्दः** मुक्तावानन्दोत्राहः फलम्, अन्यकर्मणस्तु अन्यत् फलम्, अतः कुर्वीतित्य-न्वयः। हि यतः शाखाभेदः कर्मभेदश्च, अशक्तिजः असामर्थ्यनिमित्तकः तस्मात्सः न प्रकृतविरोधीति शेषः । जन्तवो द्विजा इत्यर्थः । शिष्टं स्पष्टम् ॥ ३ ॥

**'यथा नदीनां सलिलं शक्ये सागरगं भवेत् ।**
**एवं वाक्यानि सर्वाणि पुंशक्त्या ब्रह्मवित्तये ॥' इति ।**

भा. ॥ सूत्रार्थमाहुः- **यथेति** ॥ **गच्छन्तीति** ॥ इति नियम इत्यर्थः । सूत्रार्थे स्मृतिमाहुः- [1]**यथेति** ॥ **वित्तय इति** ॥ आग्रेये इत्युक्तेश्चेत्यर्थः ॥ ४ ॥

श्रुतिस्मृतिभ्यामुक्तार्थसाधनाय सूत्रम्-

**॥ ॐ दर्शयति च ॐ ॥ ५ ॥**

अर्थात् श्रुतिरिति, तेन स्मृतिरिति च लभ्यते । पूर्वं सर्ववेदान्तप्रत्ययमिति वर्तते । अयमर्थः- श्रुतिः 'सर्वैश्च वेदैः' इति श्रुतिः, 'सर्वान् वेदान्' इति स्मृतिः च पूर्वं ब्रह्म सर्वेषां सर्ववेदान्तप्रत्ययं दर्शयति बोधयतीति ॥

**'सर्वैश्च वेदैः परमो हि देवो जिज्ञास्योऽसौ नाल्पवेदैः प्रसिद्ध्येत् । तस्मादेनं सर्ववेदानधीत्य विचार्य च ज्ञातुमिच्छेन्मुमुक्षुः' इति चतुर्वेदशिखायाम् ॥**

**'सर्वान् वेदान् सेतिहासान् सपुराणान् सयुक्तिकान् ।**
**सपञ्चरात्रान् विज्ञाय विष्णुर्ज्ञेयो न चान्यथा' ॥ इति च ब्रह्मतर्के ।**

॥ इति सर्ववेदाधिकरणम् ॥ १ ॥

भा. ॥ सूत्रोपत्ता श्रुतिस्मृती आहुः- [2]**सर्वैश्चेत्यादि** ॥ **शिखायामिति** ॥ तत्रेतिवचनं, ब्रह्मतर्के इति वचनं च, 'दर्शयति च' इति सूत्रेणाऽन्वयः ॥ ५ ॥ अ.१ ॥

॥ इति सर्ववेदाधिकरणम् ॥ १ ॥

---

१. **यथेति** ॥ शक्ये सति प्रतिबन्धकाभावे सति वाक्यानि पुंशक्त्या पुरुषशक्त्यनुसारेण ब्रह्मवित्तये ब्रह्मज्ञानायेत्यर्थः । शिष्टं सुगमम् ॥ ४ ॥

२. **सर्वैश्चेति** ॥ **प्रसिध्येत्** ज्ञातो भवेत् अल्पैर्वेदैरित्यर्थः । शिष्टं सुगमम् ॥ **सर्वानिति** ॥ इतिहासो भारतं युक्तिर्मीमांसा विज्ञाय स्थितेनेति शेषः । **अन्यथा** अल्पवेदान् जानतेत्यर्थः । स्पष्टमन्यत् ॥ ५ ॥ अ.१ ॥

## २. उपसंहाराधिकरणम्

**(सर्ववेदोक्तगुणान् प्रकरणानुसारेण उपसंहृत्य उपासना कार्या)**

अत्र नये उपासनार्थं सार्वत्रिकगुणोपसंहारसमर्थनम् । तदभावे सर्वपरिज्ञानं व्यर्थं स्यादिति पूर्वनयेन (३.३.१) सङ्गतिः । ध्यानं विषयः । सर्ववेदोक्तगुणोपसंहारेण कर्तव्यमन्यथा वेति संशयः । ध्यानविधेरुभयथाऽपि पर्यवसानं (न सम्भवः) तद्बीजम्, अन्यथेति पूर्वपक्षः ॥ पूर्वपक्षमाहुः- **सर्वैर्वेदै-रिति ॥ अशक्यत्वादिति ॥** ज्ञानं क्रमिकत्वादुपपन्नं भवेत् ध्यानन्तु युगपत्सर्वगुणविषयकमिति सर्व-वेदोक्तसर्वगुणवत्त्वेन ध्यानमशक्यमिति भावः ॥

**सर्वैर्वेदैर्ज्ञेयो नोपास्योऽशक्यत्वादित्यत आह–**

**॥ ॐ उपसंहारोऽर्थाभेदाद्विधिशेषवत्समाने च ॐ ॥ ६ ॥**

उपसंहारो नाम एकशाखोक्तगुणानां शाखान्तरोक्तगुणैस्सहैकबुद्धिविषयीकरणम् । प्रकृते तत्पूर्वकं ध्यानमुपसंहारपदेन लक्ष्यते । विधिना शिष्यत इति विधिशेषः । ततो वतिः । विधिशेषेति लुप्तपञ्चम्यन्तं भावप्रधानं, पृथक्पदं च । अभेदादिति पञ्चमी ल्यब्लोपे । कर्तव्य इति शेषः । उपसंहार इत्यावर्तते । अयमर्थः- **अर्थाभेदात्** अर्थानां गुणानां दोषाभावानां चाविभागं सम्पाद्य **उपसंहारः** उपसंहारपूर्वकं ध्यानं कर्तव्यः । विधिशेषात् 'उपास्य एकः' इति विधिरूपश्रुत्या विहितत्वात् **विधिशेषवत्** विधिविहित-सन्ध्यादिकर्मवत् । यद्वा **विधिशेषवत्** विधेः ज्योतिष्टोमादेः शेषवत् अङ्गभूतप्रयाजादिवत् उपसंहारश्च उपसंहारस्तु **समाने च** पूर्णत्वाऽविरोधिगुणविषय एव न तु दोषविषये 'सोऽरोदीत्' इत्यादिश्रुति-जन्यापातप्रतीतिविषयदोषविषय इति यावत् इति ॥

तथा च साङ्कर्षणसूत्रम्- 'अचेतनासत्यायोग्यान्यनुपास्यानि अफलत्वविपर्ययाभ्याम्' इति ॥

**सर्ववेदोक्तान् गुणान् दोषाभावांश्चोपसंहृत्यैव परमात्मोपास्यः । 'उपास्य एकः परतः परो यो वेदैश्च सर्वैः सह चेतिहासैः । सपञ्चरात्रैः सपुराणैश्च देवः सर्वैर्गुणैस्तत्र तत्र प्रतीतैः' इति हि भाल्लवेयश्रुतिः । आग्नेये च–**

**'विधिशेषाणि कर्माणि सर्ववेदोदितान्यपि ।**
**यथा कार्याणि सर्वैश्च सर्वाण्येवाविशेषतः ॥**

**एवं सर्वगुणान् सर्वदोषाभावांश्च यत्नतः ।**
**योजयित्वैव भगवानुपास्यो नान्यथा क्वचित्' इति ॥**

**समानविषये चोपसंहारः । न तु 'सोऽरोदीत्' (तै.सं.१.५.१) इत्यादीनाम् ।**

**'गुणैरेव स तूपास्यो नैव दोषैः कथञ्चन ।**
**गुणैरपि न तूपास्यो ये पूर्णत्वविरोधिनः' इति हि बृहत्तन्त्रे ॥ ६ ॥**

**भा.** ॥ सूत्रार्थमाहुः- **सर्ववेदेति** ॥ **उपसंहृत्यैवेति** ॥ कस्यापि गुणस्य त्यागमकृत्वैवेत्यर्थः । विधिविहितसर्वगुणोपासनस्य कर्तव्यत्वे श्रुतिमाहुः- [1]**उपास्य एक इत्यादि** ॥ सर्वगुणोपसंहारस्य आवश्यकत्वविषये स्मृतिमाहुः- [2]**विधिशेषाणीति** ॥ **श्रुतिरिति** ॥ यतःश्रुतिरस्ति अतः, आग्रेये इत्युक्तेश्च, उपास्य इत्यन्वयः । **इत्यादीनामिति** ॥ विषयत्वं षष्ठ्यर्थः । तत्र मानमाहुः- [3]**गुणैरेवेति** ॥ **बृहत्तन्त्र इति** ॥ तत्रेत्युक्तेरित्यर्थः ॥ ६ ॥

**उक्तमाक्षिप्य समाधानाय सूत्रम्-**

## ॥ ॐ अन्यथात्वं च शब्दादिति चेन्नाविशेषात् ॐ ॥ ७ ॥

विशेषादित्यपि पृथक्पदम् । अयमर्थः- **अन्यथात्वं** सर्वगुणोपसंहारस्याभावः **शब्दात्** 'आत्मेत्येवोपासीत' इति श्रुतेरितिचेन्न, **अविशेषात्** 'एते गुणा नोपास्या' इति विशेषप्रमाणाभावात् । विशेषाच्च 'सर्वैर्गुणैरेक एव' इति विशेषवचनसत्त्वाच्चेति ॥

---

१. **उपास्य इति** ॥ यः **परतः** रमादेः **परः** देवः स **एकः** अविभक्तः अविभागेनेति यावत् । इतिहासाद्युपबृंहितवेदैरुपास्यत्वस्य विवरणम्- **सर्वैर्गुणैरिति** ॥ तत्र तत्र वेदादिषु प्रतीतैः प्रतिपादितैरित्यर्थः । शिष्टं स्पष्टम् ।

२. **विधिशेषाणीति** ॥ **विधिना** ज्योतिष्टोमेनेत्यादिविधिशास्त्रेण विहितानि सर्ववेदोदितान्यपि अनेन स्वस्वशाखामात्रविहितानीति शङ्का निरस्ता । **अविशेषतः** शाखिविशेषाविभागेन **सर्वैः** शाखिभिः **यत्नतः** श्रवणादिरूपयत्नेन योजयित्वा उपसंहृत्य **क्वचित्** कालदेशपुरुषेषु अन्यथा उक्तस्यान्यथाभावः नेत्यर्थः । शिष्टं स्पष्टम् । **सोऽरोदीदिति** ॥ (तै.स. १.५.१) **सः** प्रकृतो महादेवः **अरोदीत्** रोदनमकार्षीत् । विष्णुपक्षे रोदनस्वामित्वं रुद्रत्वमिति बोध्यम् ।

३. **गुणैरेवेति** ॥ गुणैर्ज्ञानानन्दादिभिः गुणैरपि रोदनादीनां विधिमुखवेद्यत्वेन गुणत्वेऽपि तेषां पूर्णत्वविरोधित्वात् तैर्गुणैरपि नोपास्य इत्यर्थः । शिष्टं स्पष्टम् ॥ ६ ॥

**'आत्मेत्येवोपासीत' (बृ.३.४.७) इति शब्दादुपसंहारस्यान्यथात्वमिति चेन्न। 'एते गुणा नोपास्याः' इति विशेषवचनाभावात्। 'सर्वैर्गुणैरेकः एवेशिताऽसावुपासितव्यो न तु दोषैः कदाचित्' इति विशेषवचनाच्च।**

**आत्मेत्येवेत्यवधारणमनात्मत्वनिवृत्त्यर्थम्॥ ७॥**

**भा.** ॥ श्रुत्युपन्यासपूर्वं सूत्रं व्याचक्षते- [1]**आत्मेति** ॥ विशेषपदार्थमाहुः- [2]**सर्वैर्गुणैरिति** ॥ श्रुतौ एवकारकृत्यमाहुः- **अवधारणं तु इति** ॥ एवकारस्त्वित्यर्थः । **अनात्मनिवृत्त्यर्थम्**- आत्मत्वानिवृत्त्यर्थमित्यर्थः । एवोऽयोगव्यवच्छेद इति भावः ॥ ७ ॥

सर्वगुणोपसंहारस्याऽशक्यत्वमभ्युपेत्याऽकर्तव्यत्वविधानाय सूत्रम्-

**॥ ॐ न वा प्रकरणभेदात्परोवरीयस्त्वादिवत् ॐ ॥ ८ ॥**

उपसंहारः कर्तव्य इति वर्तते। अयमर्थः- उपसंहारः सर्वगुणोपसंहारः **न वा** कर्तव्यः **प्रकरणभेदात्** सर्वगुणानां भिन्नप्रकरणस्थत्वात् **परोवरीयस्त्वादिवत्** यथाऽऽकाशप्रकरणोक्तपरोवरीयस्त्वाऽनन्तत्वोपासनायां, वैश्वानरप्रकरणोक्तप्रादेशमात्रत्वोपासनायां च, न सर्वगुणोपसंहारः प्रकरणभेदात् तथेति॥ वा शब्दो व्यवस्थितविकल्पे॥

**प्रकरणभेदान्न वोपसंहारः कार्यः। परोवरीयस्त्वादिषु तावदेव ह्युक्तम्।**

**भा.**॥ सूत्रं व्याचक्षते- **प्रकरणेति** ॥ ननु प्रकरणभेदेऽपि तत्तत्प्रकरणोक्तोपासनायां सर्वगुणोपसंहारो न विरुध्यते । अन्यथैकप्रकरणोक्तकतिपयानेकगुणानामपि तत्तदुपासनायामुपसंहारो न स्यात् तथा च परोवरीयस्त्वाद्युपासनायां सर्वगुणानामनुपसंहारे न प्रमाणमतस्तत्रेयत्तामाहुः- **परोवरीयस्त्वादिष्विति** ॥ तत्प्रकरणेष्वित्यर्थः । **तावदेवेति** ॥ परोवरीयस्त्वाऽनन्तत्व एव । प्रादेशमात्रत्वाऽभिविमानत्वैवमादय एवोपास्या इत्युक्तमित्यर्थः । प्रकरणभेदादेवाधिकारिभेदेनैवं कल्प्यमिति भावः । हि यतः तावदेवोक्तमतो न कर्तव्यमित्यन्वयः ॥ ८ ॥

---

१. **आत्मेति** ॥ व्या.(पृ. ९१)

२. **सर्वैरिति** ॥ सर्वैः सर्ववेदोक्तैर्गुणैरित्यर्थः । स्पष्टमन्यत् ॥ ७ ॥ ८ ॥

उक्तमाक्षिप्य समाधानाय सूत्रम्-

**॥ ॐ सञ्ज्ञातश्चेत्तदुक्तमस्ति तु तदपि ॐ ॥ ९ ॥**

उपसंहारः, कर्तव्यः, सर्वेति वर्तते। षष्ठ्या विपरिणम्यते। सञ्ज्ञेति भावप्रधानम्। अयमर्थः- **सर्वासां** सर्वविद्यानां **सञ्ज्ञातः** ब्रह्मनामत्वात् **उपसंहारः** सर्वगुणोपसंहारः कर्तव्य इति **चेत् तत्** सर्वगुणोपसंहारकर्तव्यत्वम् **उक्तम्** 'उपसंहारोऽर्थाभेदात्' (३.३.६)इति सूत्रे उक्तं **तदपि** तत्प्रमाणमपि **अस्ति** 'नाम वा एताः' इति श्रुतिरिति ॥

**सर्वविद्या उक्त्वा 'सोऽहं नामविदेवास्मि नाऽत्मवित्' (छां.७.१.३) इति वचनात् सर्वस्य ब्रह्मनामत्वात्तदुपसंहारः कार्यः ॥**

**'नामत्वात् सर्वविद्यानां गुणानामुपसंहृतिः ।**
**कार्यैव ब्रह्मणि परे नात्र कार्या विचारणा' ॥ इति च ब्रह्मतर्के ।**

**इति चेत्सत्यम्। उक्तो ह्युपसंहारः, तत्प्रमाणमप्यस्त्येव। 'नाम वा एता ब्रह्मणः सर्वविद्यास्तस्मादेकः सर्वगुणैर्विचिन्त्यः' इति कौण्डिन्यश्रुतौ ॥**

॥ इत्युपसंहाराधिकरणम् ॥ २ ॥

**भा.॥** सूत्रं व्याचक्षते- **सर्वविद्या इति** ॥ 'ऋग्वेदं भगवोऽध्येमि' इत्यादिनेति भावः । **'सोऽहं नामविदेवेति** ॥ सनत्कुमारं प्रति नारदवाक्यमेतत् । यद्यपि (छा.७) 'मन्त्रविदेवास्मि' इति श्रूयते तथाप्युपसंहारे 'यद्वै किञ्चिदध्यगीष्ठा नामैवैतत् । नाम वा ऋग्वेदः .............. नामैवैतत् । नामोपास्व । स यो नाम ब्रह्मेत्युपास्ते, यावान्नाम्नो गतं ....... योनाम ब्रह्मेत्युपास्ते, अस्ति भगवो नाम्नो भूयः । वाग्वाव नाम्नो भूयसी' इति मन्त्रपदार्थं प्रकृत्य दशकृत्वो नामपद-प्रयोगान्मन्त्रपदस्य नामपदसमानार्थत्वादर्थतस्तद्वाक्यमुपात्तं 'नामविदेवास्मि' इति । शाखान्तरं वैतत् । **वचनादिति** ॥ उक्तत्वादित्यर्थः । **उपसंहार इति** ॥ नामत्वे गुणाभिधायकत्वं गुणाऽभिधानं

१. **सोऽहमिति** ॥ (छा.७.१.३) सः सर्वविद्यावेत्ताऽप्यहं भगवन्नामविदेवास्मि न परमात्मविदित्यर्थः । सर्वविद्यानिर्णेतव्यज्ञानाभावादिति भावः ।

चोपसंहारार्थमिति भावः । तत्र मानमाहुः- [1]**नामत्वादिति ॥** ननु सर्वस्य ब्रह्मनामत्वे तद्गुणवाचकत्वेन 'नाऽत्मवित्' इति कथं सङ्गतं स्यादिति चेन्न- सामान्यज्ञानसत्त्वेऽपि निर्णयाऽभावेन तथोक्तिसम्भवात् । **ब्रह्मतर्क इति ॥** तत्रेत्युक्तेरित्यर्थः । **उक्तोऽपीति ॥** उक्तो हीत्यर्थः । **तत्प्रमाणमिति ॥** तस्मिन् सर्वविद्यानां भगवन्नामत्वे, परम्परया तत्प्रयुक्तध्याने च, प्रमाणमित्यर्थः । प्रमाणस्वरूपमाहुः- [2]**नाम वा इति ॥ श्रुताविति ॥** श्रुतौ विचिन्त्य इति तत्प्रमाणमित्यन्वयः ॥ ९ ॥ अ.२ ॥

॥ **इत्युपसंहाराधिकरणम्** ॥ २ ॥

---

१. **नामत्वादिति ॥** नामत्वात् भगवन्नामत्वादित्यर्थः । शिष्टं सुगमम् ॥

२. **नाम वा इति ॥** स्पष्टम् ॥ ९ ॥ अ.२ ॥

## ३. प्राप्त्यधिकरणम्

**(विरिञ्च एव सर्ववेदोक्तसर्वगुणैः उपासनां कर्तुं योग्यः)**

अत्र नये अधिकारिभेदेन सर्वगुणोपसंहाराऽनुपसंहारयोः कर्तव्यतासमर्थनम् । अन्यथा अनुपसंहार-मानविरोधेन सर्वगुणोपसंहारो न स्यादिति पूर्व (३.३.२) नयेन सङ्गतिः, सर्वगुणोपसंहारानुपसंहारौ विषयः । युक्तौ न वेतिसंशयः । उभयत्र मानदर्शनं तद्बीजम् । नेति पूर्वपक्षः ॥

### ॥ ॐ प्राप्तेश्च समञ्जसम् ॐ ॥ १० ॥

उपसंहारो, नेति वर्तते । उपसंहारपदमावर्तते । अर्थादधिकारिभेदेनेति लभ्यते । अयमर्थः- **उपसंहारः** सर्वगुणोपसंहारः **नोपसंहारः** सर्वगुणोपसंहाराभावश्चेत्येतद्द्वयं च **समञ्जसं** च युक्तमपि । **प्राप्तेः** अधिकारिभेदेन उपसंहारानुपसंहारयोः प्राप्तिसम्भवादिति ॥

**युज्यते चोपसंहारोऽनुपसंहारश्च योग्यताविशेषात् ।**
**'गुणैस्सर्वैरुपास्योऽसौ ब्रह्मणा परमेश्वरः ।**
**अन्यैर्यथाक्रमं चैव मानुषैः कैश्चिदेव तु ॥' इति । भविष्यत्पर्वणि ॥**

॥ इति प्राप्त्यधिकरणम् ॥ ३ ॥

भा.॥ सूत्रं व्याचक्षते- **युज्यत इति** ॥ उक्तार्थे मानमाहुः- [1]**गुणैरिति** ॥ **पर्वणीति** ॥ तत्रेत्युक्तेरित्यर्थः ॥ १० ॥ अ.३ ॥

॥ इति प्राप्त्यधिकरणम् ॥ ३ ॥

---

१. **गुणैरिति** ॥ सर्वैः गुणैः युगपत्प्रतीतसर्वगुणैः ब्रह्मणा चतुर्मुखेन अन्यैः चतुर्मुखादन्यैर्यथाक्रमं युगपत्स्वस्वप्रतीतगुणाननतिक्रम्य कैश्चिदल्पसंख्याकैरानन्दादिगुणैरित्यर्थः । स्पष्टमन्यत् ॥ १० ॥ अ.३ ॥

# ४. सर्वाभेदाधिकरणम्

## (उपासनाधिक्येन फलाधिक्यम्)

अत्र नये बहुगुणोपसंहारः । अन्यथा पूर्वोक्तसामञ्जस्यादिति पूर्व (३.३.३) नयेन सङ्गतिः । उक्तोपसंहारो विषयः । कर्तव्यो न वेति संशयः । द्विविधक्रियादर्शनं तद्बीजम् । नेति पूर्वपक्षः ॥

**॥ ॐ सर्वाभेदादन्यत्रेमे ॐ ॥ ११ ॥**

उपसंहारः, कर्तव्यः, चेति वर्तते । चो हेतौ । अयमर्थः- **च यतः इमे** बहुगुणोपसंहारकत्वेन बुद्धिसन्निहिता ब्रह्मादयः **सर्वाऽभेदात्** बहुगुणानामविभागेन गुणेषु उपसंहार्याऽनुपसंहार्यभेदमकृत्वेति यावत् । उपसंहारकत्वाद्धेतोः **अन्यत्र** अल्पगुणोपसंहारफलादन्यफले महाफले भवन्ति तादृशफलभाजो भवन्तीति यावत् । अतः उपसंहारो बहुगुणोपसंहारः कर्तव्य इति ॥

**सर्वगुणयुक्तत्वेनोपासनादन्यत्रैव फले ब्रह्मादयो भवन्ति ।**

**'सम्पूर्णोपासनाद्ब्रह्मा सम्पूर्णानन्दभाग्भवेत् ।**

**इतरे तु यथायोगं सम्यङ्मुक्तौ भवन्ति हि ॥' इति पाद्मे ।**

॥ इति सर्वाभेदाधिकरणम् ॥ ४ ॥

भा.॥ सूत्रार्थमाहुः - **सर्वेति** ॥ **उपासनादिति** ॥ उपासनाद्धेतोरित्यर्थः । तत्र मानमाहुः- '**सम्पूर्णेति** ॥ पाद्मे ॥ इति पाद्म इत्युक्तेरित्यर्थः ॥ ११ ॥ अ.४ ॥

॥ इति सर्वाभेदाधिकरणम् ॥ ४ ॥

---

१. **सम्पूर्णेति** ॥ इतरे चतुर्मुखादन्ये यथायोगं यथायोग्यं उपासनात् मुक्तौ सम्यक् यथायोगमतिशयितवन्तो भवन्तीत्यर्थः । शिष्टंस्पष्टम् ॥ ११ ॥ अ.४ ॥

## ५. आनन्दाद्यधिकरणम्

**(सत्-चित्-आनन्द-आत्मेति चतुर्गुणोपासा विहिता)**

अत्र नये अशेषमुमुक्षुसाधारणगुणानां सङ्ख्यानिर्देशाभ्यामुपसंहारसमर्थनम् । सङ्ख्याया आनन्दत्वादिविशेषधर्मेण च गुणाऽनिर्णये उपासनासामान्यं न स्यादिति पूर्व(३.३.२)नयेन सङ्गतिः । गुणा विषयः । सर्वमुमुक्षूपास्याः सङ्ख्यानिर्देशाभ्यां क्लृप्तास्सन्ति पृथक् सन्ति न वेति संशयः । विशेषानुक्तिस्तद्बीजम् । नेति पूर्वपक्षः ॥ **कियदिति** ॥ कियत्सङ्ख्याकं नियमेन कर्तव्यमपरित्यागेन कर्तव्यमित्यर्थः । **इतीति** ॥ इति शङ्कायामित्यर्थः । अतः- एतच्छङ्कापरिहारार्थमित्यर्थः ॥

**सर्वेषां मुमुक्षूणां कियन्नियमेनोपास्यमित्यत आह—**

**॥ ॐ आनन्दादयः प्रधानस्य ॐ ॥ १२ ॥**

उपसंहारः, सर्वेति वर्तते । यथायथं विपरिणामः । अयमर्थः- **प्रधानस्य** मुख्यफलभूतमोक्षस्य उद्देश्यत्वं षष्ठ्यर्थः । सर्वैर्मुमुक्षुभिः **आनन्दादयः** आनन्दः ज्ञानं सत्त्वमात्मत्वमिति चत्वारो गुणा उपसंहारा उपसंहर्तव्या इति ॥

**प्रधानफलस्य मोक्षस्यार्थे आनन्दो ज्ञानं सदात्मेत्युपास्य एव ।**

**'सच्चिदानन्द आत्मेति ब्रह्मोपासा विनिश्चिता ।**
**सर्वेषां च मुमुक्षूणां फलसाम्यादपेक्षिता ॥' इति ब्रह्मतर्के ।**

॥ इत्यानन्दाद्यधिकरणम् ॥ ५ ॥

**भा.** ॥ सूत्रं व्याचक्षते- **प्रधानेति** ॥ **सत्त्वं**- निर्दोषत्वम् । **आत्मत्वं**- स्वामित्वम् । आनन्दादित्रयं मुक्तौ स्वापेक्षितत्वादुपास्यम् । स्वामित्वस्वसम्बन्धित्वज्ञापनेन विष्णुप्रीत्यर्थमिति ज्ञेयम् । अत्र स्मृतिमाहुः- '**सच्चिदिति** ॥ **ब्रह्मतर्क इति** ॥ तत्रेत्युक्तेरित्यर्थः ॥

॥ **इति आनन्दाधिकरणम्** ॥ ५ ॥

---

१. **सच्चिदिति** ॥ सर्वेषां मुमुक्षूणां कर्मक्षयादिचतुर्विधमोक्षेच्छूनां तद्योग्यानां सत् चित् आनन्दः आत्मा स्वामी इति इत्येतत्प्रकारिका ब्रह्मोपासा उपासनफलसाम्यात् फलानुगुण्यात् अपेक्षिता । अत उक्ता सर्वेषामुक्तोपासना विनिश्चिता विहितेत्यर्थः ॥ १२ ॥ अ.५ ॥

## ६. प्रियशिरस्त्वाद्यधिकरणम्

**(प्रियशिरस्त्वादिगुणाः सर्वैः नोपास्याः)**

अत्र नये प्रियशिरस्त्वाद्युपासनायाः सर्वसाधारण्यनिरासः । साधारण्ये आनन्दादयश्चत्वार एवेति नियमो नस्यादिति पूर्व (३.३.५) नयेन सङ्गतिः । प्रियशिरस्त्वादिगुणा विषयः । सर्वमुमुक्षूपास्या नवेति संशयः । द्विविधगुणदर्शनं तद्बीजम् । सर्वोपास्या इति पूर्वःपक्षः ॥

**॥ ॐ प्रियशिरस्त्वाद्यप्राप्तिरुपचयापचयौ हि भेदे ॐ ॥ १३ ॥**

प्रधानस्योपसंहारः, सर्वेति वर्तते । भेदे इति निमित्तसप्तमी । अपेक्षिताविति शेषः ।(उपचयः- उपास्यगुणनिष्ठयावद्विशेषविषयकत्वम् । अपचयः- उपास्यगुणगतकतिपयविशेषविषयकत्वरूपाल्पत्वम्) यथायथं विपरिणामः । अयमर्थः- सर्वेषां मुमुक्षूणां **प्रियशिरस्त्वाद्यप्राप्तिः** 'तस्य प्रियमेव शिरः' इत्यादि श्रुत्युक्तप्रियशिरस्त्वादिगुणोपसंहारपूर्वकोपासनायाः प्राप्तिः योग्यता नास्ति । **हि** यतः प्रधानस्य मोक्षस्य **भेदे** भेदनिमित्तं श्रुत्युक्ततारतम्यार्थमिति यावत् । **उपसंहारे** गुणोपसंहारपूर्वकोपासनायाम् **उपचयापचयौ** अपेक्षितावत इति ॥

**फलभेदार्थमुपचयापचययोर्भावान्न सर्वेषां प्रियशिरस्त्वादिगुणोपासाप्राप्तिः ।**

**'नैव सर्वगुणाः सर्वैरुपास्या मुक्तिभेदतः ।**
**विरिञ्चस्यैव यन्मुक्तावानन्दस्य सुपूर्णता' ॥ इति हि वाराहे ॥ १३ ॥**

॥ इति प्रियशिरस्त्वाद्यधिकरणम् ॥ ६ ॥

भा. ॥ सूत्रं व्याचक्षते - **फलभेदार्थमिति** ॥ मुक्तौ 'आनन्द' इति श्रुत्युक्तफलतारतम्यार्थमित्यर्थः । तत्र मानमाहुः- [1]**नैवेति** ॥ **वाराह इति** ॥ तत्रेत्युक्तेरित्यर्थः ॥ १३ ॥ अ.६ ॥

॥ इति प्रियशिरस्त्वाधिकरणम् ॥ ६ ॥

---

१. **नैवेति** ॥ मुक्तिभेदतः मुक्तौ फलतारतम्यात् विरिञ्चस्यैव नान्येषां यत् यस्मात् सर्वैर्विरिञ्चेतरैरित्यर्थः । शिष्टं सुगमम् ॥ १३ । अ.६ ॥ १४ ॥ अ.७ ॥

## ७. इतराधिकरणम्

**(देवाः बहुगुणोपासकाः)**

**अत्र नये देवादीनामानन्दादिचतुरधिकबहुगुणोपसंहारसमर्थनम् । अन्यथा 'सर्वाभेदादन्यत्र' (३.३.४) इति नयोक्तबहुगुणोपसंहारो व्यर्थः स्यादिति तेन नयेन सङ्गतिः, चतुरधिकगुणा विषयः । चतुर्मुखेतरदेवादिभिरुपास्या न वेति संशयः । फलाधिक्यं विशेषहेत्वदर्शनं च तद्बीजम् । नेति पूर्वपक्षः ॥**

## ॥ ॐ इतरे त्वर्थसामान्यात् ॐ ॥ १४ ॥

**तुः एवार्थे । समान्यादिति ल्यब्लोपे पञ्चमी । उपसंहारा इति वर्तते । देवादिभिरिति शेषः । अयमर्थः- इतरे आनन्दादिचतुर्गुणेभ्यः, सर्वगुणेभ्यश्च, अन्ये मध्यमगुणाः अर्थसामान्यात् अर्थस्य नियतगुणरूपदिष्टस्वस्वयोग्यस्य फलस्य साम्यमपेक्ष्य देवादिभिः उपसंहारा उपसंहारपूर्वकमुपास्या इति ॥**

**इतरे गुणाः फलसाम्यापेक्षयोपसंहर्तव्याः ॥**

॥ इतराधिकरणम् ॥ ७ ॥

भा. ॥ सूत्रं व्याचक्षते- **इतरे गुणा इति** ॥ १४ ॥ अ.७ ॥

॥ इतीतराधिकरणम् ॥ ७ ॥

## ८. आध्यानाधिकरणम्

**(सर्वगुणोपसंहारानुपसंहारयोः कर्तव्यत्वे प्रमाणम्)**

अत्र नये सर्वगुणोपसंहारानुपसंहारयोः प्रमाणपूर्वकं समर्थनम् । अन्यथा उक्तसर्वगुणोपसंहाराऽनुपसंहारावयुक्तौ स्यातामिति 'उपसंहारोऽर्थाः' (३.३.२.) इति नयेन सङ्गतिः । तौ विषयः । कर्तव्यौ नवेति सन्देहः । द्विविधक्रियादर्शनं तद्बीजम् । नेति पूर्वपक्षः ।। **उपसंहारेति ।।** सर्वगुणोपसंहारानुपसंहारे प्रमाणमाहेत्यर्थः । (तेनेदं न गतार्थम् ।)

**उपसंहारानुपसंहारप्रमाणमाह—**

### ।। ॐ आध्यानाय प्रयोजनाभावात् ॐ ।। १५ ।।

सर्वेत्यनुवर्त्य प्रथमया विपरिणम्यते । अयमर्थः- सर्वासर्वगुणोक्तिः **आध्यानाय** आ सम्यक् उपसंहारपूर्वकं ध्यानार्थमेव **प्रयोजनाभावात्** मुख्यप्रयोजनानन्तराभावादिति । एवं च मुख्यप्रयोजनान्तराभावे सति सर्वगुणोक्त्यन्यथाऽनुपपत्त्या मोक्षफलकध्यानाङ्गसर्वगुणोपसंहारः कल्प्य इति सर्वगुणोपसंहारे मानं भवतीदमिति भावः ।।

**'आध्यानार्थं हि सर्वे गुणा उच्यन्ते प्रयोजनान्तराभावात् ।'**

**'ज्ञानार्थमथ ध्यानार्थं गुणानां समुदीरणा ।**
**ज्ञातव्याश्चैव ध्यातव्या गुणास्सर्वेऽप्यतो हरेः ।।**
**नान्यत्प्रयोजनं ज्ञानाद्ध्यानात्कर्मकृतेरपि ।**
**श्रवणाच्चाथ पाठाद्वा विद्याभिः किञ्चिदिष्यते ।।' इति परमसंहितायाम् ।।**

**'गुणास्सर्वेऽपि वेत्तव्या ध्यातव्याश्च न संशयः ।**
**नान्यत्प्रयोजनं मुख्यं गुणानां कथने भवेत् ।।'**
**'ज्ञानध्यानसमायोगाद्गुणानां सर्वशः फलम् ।**
**मुख्यं भवेन्न चान्येन फलं मुख्यं क्वचिद्भवेत् ।।' इति बृहत्तन्त्रे ।**

**भा.** ॥ सूत्रार्थमाहुः- **आध्यानार्थमिति** ॥ अत्र स्मृतिमाहुः- [1]**ज्ञानार्थमिति** ॥ **परमसंहिताया-मिति** ॥ तत्रेत्युक्तेः सर्वे गुणा उच्यन्त इत्यन्वयः । ननु परमसंहितायां गुणाभिधानस्य ज्ञानं, कर्मकरणं श्रवणं चेत्यादिप्रयोजनमुक्तं तत्कथं प्रयोजनान्तराभाव इत्यत आहुः- [2]**गुणा स्सर्व इति** ॥ एवं च पूर्वोक्तं कर्मकरणादिकं विद्याया न मुख्यं फलं किन्तु ध्यानमेव । ज्ञानं तु तदुपयोगि । अत एव सूत्रे प्रयोजनाभावादित्यस्य मुख्यप्रयोजनान्तराभावादित्यर्थ उक्त इति ज्ञेयम् । **बृहत्तन्त्र इति** ॥ तत्रेत्युक्तेः प्रयोजनान्तराभावादित्यन्वयः ॥ इदमुपसंहारे मानम् ॥ १५ ॥

**एतावत्पर्यन्तमात्मेत्येवकारस्यायोगव्यवच्छेदार्थमुपेत्योपसंहार उक्तः, अथ अन्ययोगव्यवच्छेदार्थमुपेत्य आत्मशब्दोक्तैकैकगुण चतुर्गुणमध्यमगुणसर्वगुणोपास्तिविधानार्थम् 'आत्मशब्दाच्च' इत्यारभ्य 'न वा विशेषात्' (३.३.२२) इत्यन्ता चतुःसूत्रीप्रवृत्ता तत्रैकगुणोपास्ति बोधनार्थम्, अनुपसंहारे मानकथनाय च सूत्रम्-**

## ॥ ॐ आत्मशब्दाच्च ॐ ॥ १६ ॥

**उपसंहारो, नेति वर्तते । अयमर्थः- उपसंहारः सर्वगुणमध्यमगुणोपसंहारो न सिद्धः । आत्मशब्दात् आत्मन आत्मत्वमात्रोपास्तेः बोधक 'आत्मेत्येव' इति श्रुतेरिति ॥**

**'आत्मेत्येवोपासीत' (बृ.३.४.७) इत्यनुपसंहारप्रमाणम् ॥**

**॥ इत्याध्यानाधिकरणम् ॥ ८ ॥**

**भा.**॥ [3]**आत्मेत्येवोपासीतेतीति** ॥ इति श्रुतिरित्यर्थः ॥ १६ ॥ अ.८ ॥

॥ इति **आध्यानाधिकरणम्** ॥ ८ ॥

---

१. **ज्ञानार्थमिति** ॥ यतो विद्याभिर्वेदादिभिः भगवद्गुणानां कर्मणां चेति शेषः, समुदीरणायाः प्रतिपादनस्य ज्ञानात् ध्यानात् कर्मकृतेः श्रवणात् पाठात् अभ्यासरूपात् अन्यत् किञ्चित्प्रयोजनं नेष्यते नोपयते अतो विद्याभिर्गुणानां, कर्मणां च, समुदीरणा ज्ञानार्थमेव ध्यानार्थमेव कर्मकरणार्थमेवेत्यर्थः ।

२. **गुणाः सर्वे इति** ॥ ज्ञानध्यानसमायोगात् शास्त्रजन्यज्ञानपूर्वकध्यानरूपोपायात् फलमपरोक्षज्ञानं मुक्तिश्च कचित्कालेऽपीत्यर्थः शिष्टं स्पष्टम् ॥ १५ ॥

३. **आत्मेति** ॥ व्या.(पृ. ९१) ॥ १६ अ.८ ॥

# ९. आत्मगृहीत्यधिकरणम्

(चतुर्गुणा उपास्या एव)

अत्र नये उपासने आनन्दादिचतुर्गुणनियमसमर्थनम् । अन्यथा पूर्वसूत्रेऽनुपसंहारे प्रमाणोक्तिमुखेन आत्मत्वमात्रस्यैव सर्वसाधारणत्वापत्त्योक्तनियमभङ्ग इति 'आनन्द'(३.३.५)नयेन सङ्गतिः । गुणा विषयः । आनन्दादयश्चत्वारः सर्वोपास्या, आत्मत्वमात्रं वेति संशयः । उभयोक्तिस्तद्बीजम् । आत्मत्वमात्रमिति पूर्वपक्षः ॥

## ॥ ॐ आत्मगृहीतिरितरवदुत्तरात् ॐ ॥ १७ ॥

अयमर्थः- **इतरवत्** 'सत्यं ज्ञानमनन्तं ब्रह्म' इति, 'विज्ञानमानन्दं ब्रह्म' इति च वाक्ये आपातप्रतीतार्थापेक्षया अन्यार्थग्रहवत् **आत्मगृहीतिः** 'आत्मेत्येवोपासीत' इति वाक्यस्थाऽऽत्मशब्दे आपातप्रतीतार्थापेक्षया इतरार्थानां सच्चिदानन्दानामपि ग्रहणम् **उत्तरात्** 'अत्र ह्येते सर्व एकं भवन्ति' इत्युत्तरवाक्यानुरोधादिति ॥ अयं भावः- यथा 'सत्यं ज्ञानमनन्तम्' इत्यत्र सत्यपदेन जगत्स्रष्टृत्वं, जीवनप्रदत्वं, चेष्टकत्वं, संहर्तृत्वं च, ज्ञानपदेन स्वपरगताशेषसामान्यविशेषविषयकज्ञानरूपत्वम्, अनन्तपदेन देशकालगुणापरिच्छिन्नत्वं, गृह्यते, उत्तरप्रकरणानुरोधात् एवं प्रकृते आत्मशब्देन सच्चिदात्मानन्दा गृह्यन्ते उक्तोत्तरवाक्यादिति ॥

**नच 'आनन्दादयः प्रधानस्य' इत्युक्तिविरोधः । यतः 'सत्यं ज्ञानमनन्तं ब्रह्म' (तै.२.१) 'विज्ञानमानन्दं ब्रह्म' इतिवदेवाऽऽत्मशब्दगृहीतिः ।**

**'अत्र ह्येते सर्व एकं भवन्ति' (बृ.५.९.२८) इत्युत्तरात् ।**

**'आनन्दानुभवत्वाच्च निर्दोषत्वाच्च भण्यते ।**
**नित्यत्वाच्च तथाऽऽत्मेति वेदवादिभिरीश्वरः ॥' इति हि बृहत्तन्त्रे ॥ १७ ॥**

॥ इत्यात्मगृहीत्यधिकरणम् ॥ ९ ॥

भा.॥ सूत्रं व्याचक्षते- **नचेति** ॥ **आनन्दादयः प्रधानस्येति** ॥ तत्सूत्रोक्तचतुर्गुणोपासननैयत्यविरोध इति न च वाच्यमित्यर्थः । इतरवदित्यंशं श्रुत्युपन्यासेन व्याख्यान्ति- [1]**सत्यमित्यादि** ॥

१. **सत्यमिति** ॥ व्या.(सं.१, पृ. ९६) विज्ञानमिति ॥ व्या. (सं.१, पृ. २६९

उत्तरवाक्यमाहुः- [१]**अत्र ह्येते इति ॥** अत्र स्मृतिमाहुः- [२]**आनन्देति ॥** उत्तरात्, बृहत्तन्त्र इत्युक्तेश्च, आत्मगृहीतिः यत अतो न वाच्यमित्यन्वयः ॥ १७ ॥ अ.९ ॥

**॥ इति आत्मगृहीत्यधिकरणम् ॥ ९ ॥**

१. **अत्र हीति ॥** व्या. (पृ. ९१)

२. **आनन्देति ॥** आनन्दरूपत्वात् ज्ञानरूपत्वात् । निर्दोषत्वान्नित्यत्वाच्च ईश्वर आत्मेति भण्यते वेदवादिभिरित्यर्थः ॥ १७ ॥ अ.९ ॥

# १०. अन्वयाधिकरणम्

**(आत्मशब्दः विरिञ्चस्य सर्वगुणबोधकः)**

अत्र नये आत्मशब्दोक्तगुणोपासनस्य सर्वैः कर्तव्यतासमर्थनम् । अन्यथा आत्मशब्दस्य सर्वगुणबोधकत्वेनाल्पाधिकारिकत्वाभावे स्वामित्वमात्रोपास्त्यभिप्रायेण 'आत्मशब्दाच्च' इत्यत्रोक्तानुपसंहारमानत्वं न स्यादिति 'आत्मशब्दाच्च' इति सूत्रघटित 'आध्यान' (३.३.८) नयेन सङ्गतिः । आत्मशब्दोक्तागुणा विषयः । सर्वोपास्या नवेति संशयः । द्विविधगुणदर्शनं तद्बीजम् । नेति पूर्वपक्षः ॥

## ॥ ॐ अन्वयादिति चेत्स्यादवधारणात् ॐ ॥ १८ ॥

सर्वेति, आत्मशब्दात्, आत्मगृहीतिरिति च, वर्तते । कांश्चित्प्रत्येवेति शेषः यथायथमावृत्तिविपरिणामौ । अयमर्थः- सर्वेषां सर्वगुणानाम् आत्मशब्दे **अन्वयात्** सम्बन्धात् । 'आप्तव्याप्तेः' इति वचनेन आत्मशब्दस्य सर्वगुणवाचित्वादिति यावत् । आत्मगृहीतिः 'आत्मेत्येव' इति श्रुतिस्थाऽत्मशब्देन सर्वगुणग्रहणं स्यात् **इति चेत् स्यात्** उक्ताऽत्मगृहीतिः कांश्चित् ब्रह्माद्युत्तमाधिकारिणः प्रत्येव न तु सर्वान्प्रति (स्यात्) **अवधारणात्** 'गुणैस्सर्वैरुपास्योऽसौ' इति निर्धारणात्मकवचनसत्त्वात् अवधारणात् अन्ययोगव्यवच्छेदार्थकैवकारयुक्तत्वात् अन्वयात् अस्मदादीनामात्मशब्देनाल्पगुणग्रहणस्यैवानुभवाच्चेति । अयं भावः- उक्तरीत्या आत्मशब्देन सर्वगुणबोधने 'आत्मशब्दाच्च' (३.३.१६) इति सूत्रोक्तमनुपसंहारमानमयुक्तं स्यादिति चेन्न । चतुर्मुखाद्यतिरिक्तान्प्रति अल्पगुणबोधकत्वेन तद्विवक्षयाऽनुपसंहारमानत्वोपपत्तेः । यद्यन्यान्प्रत्यपि आपातप्रतीतात्मत्वमात्रमानन्दादिगुणचतुष्टयमात्रं, वा न बोधयेत् किं तु सर्वगुणानेव बोधयेदात्मशब्दः तर्हि व्यावर्त्याभावेन अवधारणं व्यर्थं स्यादिति ॥

**सर्वगुणानामन्वय आत्मशब्दे भवति । 'आप्तव्याप्तेरात्मशब्दः परमस्य प्रयुज्यते' इति वचनादिति चेत्सत्यम् ।**

**स्याच्चैवम् । 'आत्मेत्येव' (बृ.३.४.७) इत्यवधारणात् । अन्यथा सर्वोपसंहारवचनविरोधात् ॥**

॥ इत्यन्वयाधिकरणम् ॥ १० ॥

**भा.** ॥ (सूत्रार्थमाहुः- **सर्वगुणानामिति** ॥ [१]**आप्तव्याप्तेरिति** ॥ (इदं पूर्वपक्षसाधकवचनम् ।) **चेदिति** ॥ तथा च 'आत्मशब्दाच्च' इति सूत्रोक्तमनुपसंहारमानमयुक्तमितिभावः । सिद्धान्तमाहुः- **सत्यमिति** ॥ परोक्तमङ्गीक्रियत एवेत्यर्थः । ननु परोक्तं कथमङ्गीक्रियत इत्यत आहुः- **स्याच्चेति** ॥ चोऽनुक्तसमुच्चये । च परोक्तमेवं स्यात् चतुर्मुखादीन् प्रत्येव स्यात् न तु सर्वान्प्रतीत्यर्थः । सर्वान्तःपातिनामस्मदादीनां सर्वगुणग्रहणाननुभवादिति हृदयम् । नन्वात्मशब्दो ब्रह्मादीन् प्रत्यपि अल्पगुणानेव कुतो न बोधयेदत आहुः- [२]**आत्मेतीति** ॥ **अवधारणादिति** ॥ अन्ययोग-व्यवच्छेदार्थकैवकारयुक्तत्वादित्यर्थः । ब्रह्मादीन्प्रत्यप्यल्पगुणबोधने एवकारेणेतरव्यावृत्तिः स्यादिति भावः । तथा सति को दोष इत्यत आहुः- **अन्यथेति** ॥ उक्तादन्यथा ब्रह्मादीन् प्रत्यप्यल्प-गुणबोधकत्वस्वीकारे, एवेनेतरव्यावृत्तौ च, सर्वोपसंहारवचनविरोधः स्यादित्यर्थः । इदमुपलक्षणम्- 'आप्तव्याप्तेः' इति वचननिर्विषयत्वस्यापीति ज्ञेयम् । **तत्वप्रदीपे तु** इदं भाष्यमेवं व्याख्यातम् । (तत्र) पूर्वपक्षार्थः समानः । सत्यमिति पूर्वपक्षिणोक्तमङ्गीक्रियत एवेत्यर्थः । **स्याच्चैवम्** ॥ **आत्मेतीति** ॥ 'आत्मेत्येव' इति वाक्यम् । एवं च एवमपि सर्वगुणोपसंहारेऽपि मानमपि स्यात् अवधारणात् आत्मत्वेन सर्वगुणवत्त्वेनैवोपासीत न तु न्यूनगुणवत्त्वेनेत्यवधारणात् अन्यथा एवमर्थाऽनङ्गी-कारे सर्वोपसंहारवचनविरोधादिति ॥ **केचिदाहुः-** सूत्रेऽवधारणादिति ल्यब्लोपे पञ्चमी अनुवृत्त्यादिकं पूर्ववत् । अयमर्थः- आत्मशब्दे सर्वगुणानामन्वयात् आत्मगृहीतिः आत्मशब्देन सर्वगुणबोधनं स्यादिति चेत्- अवधारणात् अवधारणमनपेक्ष्य स्यादेवेति । अयोगव्यवच्छेदार्थपक्षे सर्वगुणबोधकत्वम् अन्ययोगव्यवच्छेदार्थपक्षे अनुपसंहारमानत्वमिति भावः । अत्र पक्षे भाष्यादिकं फलितार्थपरमिति ॥ अत्रेत्थं भाति- आत्मशब्देनैव सर्वगुणग्रहणे कस्य धर्मस्यायोगव्यवच्छेद इति । परन्तु आत्मशब्देन स्वामित्वमात्रग्रहणे विध्यन्तरेण सर्वगुणबोधने च अयोगव्यवच्छेदो घटेतेति ॥ १८ ॥ अ.१० ॥

॥ **इत्यन्वयाधिकरणम्** ॥ १० ॥

---

१. **आप्तेति** ॥ आप्ता व्याप्तिर्देशकालादिभिः यस्य सः तस्य तादृशस्य परमस्य परमात्मनः आत्मशब्दः प्रयुज्यते इत्यर्थः । आप्तव्याप्तेरिति हेतुगर्भविशेषणम् ।

२. **आत्मेति** ॥ व्या. (पृ. ९१) ॥ १८ ॥ अ.१० ॥

## ११. कार्याधिकरणम्

**(मोक्षार्थम् उपास्यमानगुणाः लोकविलक्षणाः)**

अत्र नये उपास्यगुणानामलौकिकत्वसमर्थनम् । अन्यथा 'परमतः सेतून्मान' इति नयोक्ताऽलौकिकत्वं न स्यादिति तेन नयेन(३.२.१६) सङ्गतिः । (भगवतो) गुणा विषयः । अलौकिका ध्येया लौकिका वेति संशयः, 'परमत' इत्यत्रोन्मानत्वोक्तिः लोकदृष्टिश्च तद्बीजम् । लौकिका एवेति पूर्वपक्षः ॥

### ॥ ॐ कार्याख्यानादपूर्वम् ॐ ॥ १९ ॥

ब्रह्मगुणजातमिति प्रकृतत्वाल्लभ्यते । उपसंहार इति वर्तते । अयमर्थः- **कार्याख्यानात्** कार्यस्य उपसंहारपूर्वकध्यानजन्यफलस्य मोक्षस्य **'आख्यानात्'** 'अलौकिकास्तस्य गुणाः' इति श्रुतावलौकिकत्वोक्तेः ब्रह्मगुणजातम् **अपूर्वम्** अलौकिकम् । उपसंहारपूर्वकं ध्यातव्यमिति । यद्यपि पूर्वपादे 'परमत' (३.२.३२) इति सूत्रे भगवद्गुणानामलौकिकत्वं समर्थितम् । तथाऽपि तत्र वस्तुस्थितिरुक्ता । अत्र ध्यानविषयत्वप्रसक्त्या अलौकिकानामननुभवेन बुद्धावनारोहाल्लौकिका एव ध्यातव्या इति । 'यो वज्रहस्तः स पुरन्दरः' इतिवत् योऽनुकूलतया वेदनीयत्वादिमान् स आनन्दादिरिति विवेकेनानुभवोपपत्तेः, ब्रह्मोपासनं मिथ्योपासनमेव स्यादिति प्राप्ते सिद्धान्तितम् । अलौकिका एव ध्यातव्याः, तथा च गुणप्रकारकब्रह्मोपासनं सत्योपासनमेवेति ज्ञेयम् ।

**'अलौकिकास्तस्य गुणा ह्युपास्या अलोकिकं मुक्तिकार्यं यतोऽस्य' इति कार्याख्यानादन्यत्रादृष्टा एव गुणा उपास्याः ॥ १९ ॥**

॥ इति कार्याधिकरणम् ॥ ११ ॥

भा.॥ (सूत्रं व्याचक्षते- [१]**अलौकिका इति** ॥) **यतोऽस्येति** ॥ इति श्रुत्यर्थः । **अन्यत्रेति** ॥ लोके इत्यर्थः । अनेन वचनेन कार्यभूतमोक्षस्यालौकिकत्वेऽपि कारणभूतध्यानविषयस्य लौकिकत्वे किं बाधकमिति शङ्का परास्ता ॥ १९ ॥ अ.११ ॥

॥ इति कार्याधिकरणम् ॥ ११ ॥

१. **अलौकिका इति ॥** यतोऽस्योपासनस्य मुक्तिकार्यं मुक्तिरूपं फलम् अलौकिकं लौकविलक्षणम् अतस्तस्य परमस्य अलौकिका गुणा उपास्या इत्यर्थः ॥ १९ ॥ अ. ११ ॥ २० ॥

## १२. समानाधिकरणम्

**(वाण्याः त्रिविक्रमत्वादिक्रियायां पृथग् उपासना नास्ति)**

अत्र नये उपासनस्य स्वसदृशफलप्रदत्वसमर्थनम् । अन्यथा 'इतरा' इति नयोक्तोपासनं न स्यादिति तेन (३.३.७) नयेन सङ्गतिः । उपासनं विषयः । स्वसदृशफलप्रदं न वेति संशयः । कृष्यादिक्रियासूभयथादृष्टिस्तद्बीजम् । नेति पूर्वपक्षः ॥ २-सू. अ. ॥

### ॥ ॐ समान एवं चाभेदात् ॐ ॥ २० ॥

उपसंहारो नेति वर्तते । अभेदादिति ल्यब्लोपे पञ्चमी । चोऽवधारणे, समुच्चये, त्वर्थे च । कर्तव्य इति शेषः । यथायथमावृत्तिः । अयमर्थः- **एवं च** ब्रह्मगुणजातस्यालौकिकत्वेऽपि अत्याश्चर्यत्वेनावश्यमुपास्यमित्युत्कण्ठाविषयत्वेऽपीति यावत् **समाने** च । स्वयोग्यगुणविषये एवोपसंहारो नत्वयोग्ये न समाने च अयोग्यविषये तु **अभेदात्** ऐक्यमपेक्ष्योपसंहारः कर्तव्य इति ॥ अयंभावः- वाण्याश्चतुर्मुखवत् सर्वगुणोपासकत्वेऽपि कादाचित्कत्रिविक्रमत्वादिक्रियासु विशिष्योपसंहारो न भवति । तद्विषये योग्यताभावात् । तासां चानित्यत्वात्, किन्तु नित्यविक्रान्त्याद्यभेदेनैवोपसंहारो भवतीति ॥ एवं च साधनतारतम्यात्फलमपि तारतम्योपेतमेवेति ज्ञेयम् ॥

**अपूर्वत्वेऽपि समानानामेवोपसंहारः । न तु त्रिविक्रमत्वादीनां कादाचित्कानां पृथक्त्वेन । नित्यविक्रान्त्यादिष्वन्तर्भावात् ॥ २० ॥**

भा.॥ सूत्रार्थमाहुः- **अपूर्वत्वेऽपीति** ॥ **समानानामेवेति** ॥ स्वयोग्यानामेवेत्यर्थः । **उपसंहार** इति ॥ वाण्या इति भावः । पृथक्त्वेन- **तत्तद्रूपेण** । किन्त्विति शेषः । **अन्तर्भावादिति** ॥ अन्तर्भाव्येत्यर्थः । एकीकृत्येति यावत् ॥ २० ॥

चतुर्मुखविषये वाण्याधिक्यबोधनाय सूत्रम्-

### ॥ ॐ सम्बन्धादेवमन्यत्राऽपि ॐ ॥ २१ ॥

उपसंहार इति वर्तते । युज्यत इति शेषः । अयमर्थः- **अन्यत्रापि** त्रिविक्रमत्वादिक्रियास्वपि एवं गुणोपसंहारवत् नित्यमुपसंहारो युज्यते **सम्बन्धात्** परमात्मसम्बन्धित्वेन त्रिविक्रमत्वादीनां नित्यत्वादिति ।

**परमात्मसम्बन्धित्वेन नित्यत्वात् त्रिविक्रमत्वादिष्वप्युपसंहार्यत्वं युज्यते ।**

**'गुणास्त्रैविक्रमाद्याश्च संहर्तव्या न संशयः ।**
**विरिञ्चस्यैव नान्येषां स हि सर्वगुणाधिकः ॥' इति हि बृहत्तन्त्रे ।**

**॥ इति समानाधिकरणम् ॥ १२ ॥**

**भा.**॥ सूत्रार्थमाहुः- **परमात्मेति** ॥ **युज्यत इति** ॥ चतुर्मुखस्येति भावः । एतदुपासनं चतुर्मुखस्यैव युज्यत इति स्मृत्या बोधयन्ति- **[1]गुणा इति** ॥ **बृहत्तन्त्र इति** ॥ तत्र इति एवमुक्तमित्यर्थः ॥ २१ ॥ अ.१२ ॥

**॥ इति समानाधिकरणम् ॥ १२ ॥**

---

१. **गुणा इति** ॥ **त्रैविक्रमाद्याः** त्रिविक्रमसम्बन्धिक्रियारूपधर्माः आदिना हननभक्षणादिकं **विरिञ्चस्यैव** चतुर्मुखेनैव **संहर्तव्याः** उपसंहारपूर्वकं ध्यातव्याः **अन्येषामन्यैः** वाण्यादिभिः **हि** यस्मात् स चतुर्मुख एव **सर्वगुणाधिकः** सर्वेभ्योऽधिकारिभ्यो गुणाधिकोऽत इत्यर्थः ॥ २१ ॥ अ.१२ ॥ २२ ॥

## १३. विशेषाधिकरणम् (नवाधिकरणम्)

### (आत्मशब्दः तत्तदधिकारियोग्यगुणाभिधायकः)

अत्र नये आत्मशब्दोक्तगुणेषु यस्य यावन्तो गुणा युगपद्भासन्ते तेन तावन्त एवोपास्या एवेति समर्थनम्। अन्यथा आत्मशब्दोक्तसर्वगुणोपासनं केनापि न क्रियेत आत्मशब्देन सर्वगुणानामुपस्थितेः उपासकापेक्षितगुणानामेवोपस्थितिरिति नियमाभावादिति 'आत्माशब्दाच्च' (३.३.१६) इति सूत्रस्यानुपसंहारमानत्वं न स्यादिति (आध्याननयेन) (३.३.८) सङ्गतिः। आत्मशब्दोक्तगुणा विषयः। सर्वोपास्या न वेति संशयः। द्विविधगुणदर्शनं तद्बीजम्। नेति पूर्वपक्षः॥

## ॥ ॐ न वा विशेषात् ॐ ॥ २२ ॥

आत्मगृहीतिरिति वर्तते। वाशब्दो व्यवस्थितविकल्पे। आत्मगृहीतेरित्यपि विपरिणम्यते। अयमर्थः- **आत्मगृहीतिः** आत्मशब्देन सर्वगुणानां ग्रहणं **न वा भवति**। **विशेषात्** अधिकारिसामर्थ्यविशेष-मपेक्ष्यैव आत्मगृहीतेः आत्मशब्देन गुणबोधनाङ्गीकारादिति॥ आत्मशब्देन सर्वान् प्रति सर्वगुण-बोधकत्वाभावात् 'आत्मशब्दाच्च' इति सूत्रस्यानुपसंहारमानत्वं युक्तमिति भावः। तथा च यस्याऽधिकारिणो यावन्तो गुणा आत्मशब्देन युगपत्प्रतीयन्ते तावन्त एव ध्यातव्यास्तेनाऽधिकारिणेति नियमो न त्वमुकसङ्ख्याका एवेति नियम इति तत्त्वम्॥

**न वाऽत्मशब्देन सर्वगुणगृहीतिः। अधिकारिविशेषात्॥ २२॥**

भा.॥ सूत्रं व्याचक्षते- **न वेति**॥ अधिकारीति॥ किन्त्वित्यादिः। विशेषादिति॥ तमपेक्ष्ये-त्यर्थः॥ २२॥

युक्तिसिद्धार्थस्य श्रुत्याऽपि साधनाय सूत्रम्-

## ॥ ॐ दर्शयति च ॐ ॥ २३ ॥

उक्तं श्रुतिरिति शेषः। अयमर्थः- श्रुतिश्च 'सर्वान् गुणानात्मशब्दः' इति श्रुतिरपि उक्तं पूर्वसूत्रोक्तमर्थं दर्शयति प्रतिपादयतीति॥

**'सर्वान् गुणानात्मशब्दो ब्रवीति ब्रह्मादीनामितरेषां न चैव' इति च भाल्लवेयश्रुतिः ॥ २३ ॥**

**॥ इति विशेषाधिकरणम् (नवाधिकरणम्) ॥ १३ ॥**

**भा.॥** कर्त्राकाङ्क्षायां श्रुतिमाहुः- **'सर्वानिति ॥ भाल्लवेयश्रुतिरिति** ॥ सूत्रेऽन्वेति । (सूत्रार्थः स्पष्ट इति भावः ।) ननु आत्मशब्देन यस्याधिकारिणो यावन्तो गुणा भासन्ते युगपत् तेनाधिकारिणा तावन्तो गुणा उपास्या इत्युक्तम् एवमङ्गीकारेऽन्ययोगव्यवच्छेदार्थकैवकारो व्यर्थः । अभासमान-गुणव्यावृत्तिस्तु अभासमानत्वादेव सिद्धा । नचैवकारस्याऽयोगव्यवच्छेदोऽर्थः, तेनाऽत्मत्वं न त्याज्यमित्यर्थ एव लभ्यते इति वाच्यम् । अन्ययोगव्यवच्छेदार्थमङ्गीकृत्यैव 'आत्मशब्दाच्च' इत्यादिसूत्राणां प्रवृत्तेः । आत्मशब्देनाऽत्मत्वातिरिक्तगुणानामपिग्रहणे आत्मत्वमात्रस्य पृथगुपस्थित्यभावेनाऽत्मत्वमात्रेऽयोगव्यवच्छेदस्यैवेन कर्तुमशक्यत्वाच्चेति चेन्न- यावान्तो भासन्ते तावतां गुणानामपरित्यागस्यैव एवेनाऽयोगव्यवच्छेदार्थकेन बोधनात् । चतुर्मुखाद्यतिरिक्तविषये आत्मशब्देन अभासमानगुणानां यत्नेन भानसम्भावनाव्यावृत्त्यर्थमेवस्यान्ययोगव्यवच्छेदकत्वपक्षेऽपि साफल्याच्च । न चाऽत्मत्वमात्रोपासनस्याऽकृत्स्नोपासनत्वं स्यादिति वाच्यम् । प्राणनत्वाद्येकैक-गुणोपासनस्याकृत्स्नोपासनत्वेऽपि आत्मत्वेऽन्यगुणानामनन्तर्भावेऽपि आत्मत्वोपसनस्य स्वयोग्य-कृत्स्नोपासनत्वात् । स्यादेतत् - यदि 'आत्मेत्येव' इति एकमेव वाक्यमधिकारिभेदेन न्यूनाधिक-गुणान्, अन्ययोगायोगव्यवच्छेदौ च, कथं बोधयेत् सकृदुच्चरितशब्देऽनेकार्थत्वस्याऽन्याय्यत्वात् वैरूप्याच्चेति चेत्, अत्रोच्यते । एकस्यैव शब्दस्य तत्तदधिकारियोग्यतानुसारेणार्थभेदो दृश्यते । यथा बृहदारण्यके (७.२.१)'त्रयाः प्राजापत्याः प्रजापतौ पितरि ब्रह्मचर्यमूषुः' इत्यादि श्रूयते । तत्र देवान् मनुष्यान् असुरान् प्रति प्रजापतिना एकमक्षरमुपदिष्टं 'द' इति । तत्र 'द' इति पदस्य देवैः 'दाम्यते' इत्यर्थो गृहीतः । मनुष्यैः 'दत्त' इति, असुरैः 'दयध्वम्' इति योग्यतानुसारात् देवानां सद्गुणोच्छ्रयादिरूपैश्वर्यवत्त्वेनाहङ्कारो न कर्तव्यः किन्तु दमः कार्य इत्यर्थो गृहीतः । मनुष्यैर्निष्कामनया हविर्दानादिकं कुरुतेत्यर्थो गृहीतः । असुरैः क्रूरस्वभावं त्यक्त्वा दयाकार्येत्यर्थो

---

१. **सर्वानिति ॥** आत्मशब्दः ब्रह्मादीनां चतुर्मुखवाण्यादीनां तान् प्रति सर्वान् बहून् गुणान् भगवद्धर्मान् ब्रवीति प्रतिपादयति । अन्येषां देवगन्धर्वाणां मनुष्योत्तमानां च बहून्न ब्रवीति किंत्वल्पगुणानित्यर्थः । ध्यानकाले बहूनल्पांश्च प्रकाशयतीति भावः ॥ २३ ॥ अ.१३ ॥

गृहीतः । एवं च स्वस्वयोग्यतानुसारेणैकस्यैव शब्दस्याऽर्थभेदो दृश्यते । एवं- छान्दोग्ये (८.७.३) 'तौ ह प्रजापतिरुवाच' इत्यादिप्रकरणे इन्द्रविरोचनौ प्रति प्रजापतिना 'य एषोऽक्षिणि पुरुषो दृश्यते, एष आत्मेति होवाच' इत्यादिनाऽऽत्मोपदेशे कृतेऽपि विरोचनस्य स्वयोग्यतानुसारेण देहे आत्मत्वज्ञानं जातम् । इन्द्रस्य तु प्रकारान्तरेणैव ज्ञानमुत्पन्नमिति प्रतिपाद्यते । तथा च प्रकृतेऽपि तस्य साम्यात् । किञ्च पाणिनितन्त्रे 'विप्रतिषेधे परं कार्यम्' इति सूत्रं तृजादिदृष्टान्तेन पूर्वपरसूत्रयोः पर्यायेण प्राप्तौ परमेव भवतीति नियमार्थम्, एकप्रेष्यदृष्टान्तेन पूर्वपर(विधि)सूत्रयोर्लक्ष्येऽप्रवृत्तौ परं भवतीति विध्यर्थमित्येकस्यैव सूत्रस्य नियमार्थत्वं विध्यर्थत्वं च स्वीकृतं तथा प्रकृतेऽप्यस्तु । विप्रतिषेधसूत्रे दृष्टान्तभेदेन पक्षभेदः, इह तु अधिकारिभेदेन पक्षभेद इति विशेषः । किञ्च 'तत्प्रकृतवचने मयट्' इति सूत्रे वचनशब्दस्याधिकरणल्युडन्तत्वं, भावल्युडन्तत्वं च स्वीकृत्य सूत्रस्यार्थद्वयमुक्तम् । एवम् 'अचःपरस्मिन् पूर्वविधौ' इति सूत्रे पूर्वविधाविति पदस्यार्थचतुष्टयं सिद्धान्ते उक्तम् । पूर्वस्य कार्ये कर्तव्ये, पूर्वस्मात्परस्य कार्ये कर्तव्ये, पूर्ववृत्तिधर्माऽवच्छिन्नोद्देश्यक-कार्ये कर्तव्ये पूर्वस्य स्थितौ कर्तव्यायामिति 'तत्प्रकृतेति, अचःपरस्मिन्' इति च सूत्रद्वयोपन्यासः एकस्य अनेकार्थकरणे कृतः । न तु अधिकारिभेदेन पक्षभेदविषये । किञ्च प्रकृते 'आत्मेत्येव' इत्यस्यानेकार्थत्वे 'अत्र ह्येते सर्व एकं भवन्ति' इत्यादि श्रुतिस्मृतिसूत्राणि सन्तीत्यलम् ॥ २३ ॥ अ.१३ ॥

**॥ इति विशेषाधिकरणम् (नवाधिकरणम्) ॥ १३ ॥**

## १४. सम्भृत्यधिकरणम्

**(सम्यग्भरणम्, अन्तरिक्षादिलोकव्यापनं च देवादिभिरुपास्यम्)**

अत्र नये देवादीनामेव सम्भृत्यादिगुणोपासनसमर्थनम् । अन्यथा चतुर्गुणोपासननियमभङ्गः स्यादिति 'आनन्द'(३.३.५)नयेन सङ्गतिः । सम्भृत्यादिगुणा विषयः । सर्वोपास्या न वेति संशयः । द्विविधगुणदर्शनं तद्बीजम् । सर्वोपास्या इति पूर्वपक्षः ॥

### ॥ ॐ सम्भृतिद्युव्याप्त्यपि चातः ॐ ॥ २४ ॥

सम्यग्भरणं सम्भृतिः । दिवा कान्त्या व्याप्तिः द्युव्याप्तिः । कान्त्यर्थकदिव्धातोर्भावे डिवि-प्रत्ययः । सम्भृतिद्युव्याप्तीत्यत्र समाहारद्वन्द्वः । अपिना नोपसंहारः सर्वेति समाकृष्यते । च एवार्थे । यथायथं विपरिणामः । अयमर्थः- **सम्भृतिद्युव्याप्ति** 'उक्षा स द्यावापृथिवी' इत्यादिश्रुत्युक्तसम्भरणं 'एष हि सर्वेषु लोकेषु भाति' इत्यादिश्रुत्युक्तप्रकाशव्याप्तिश्च सर्वेषामधिकारिणां नोपसंहार्यौ नोपसंहर्तव्यौ **अतश्च** उपसंहारस्य योग्यताविशेषापेक्षत्वादेवेति ॥ एवं च सम्भृत्यादिर्देवादिभि-रेवोपास्यस्तद्योग्यत्वात् नाऽन्यैस्तदभावादिति भावः ।

**सम्भृतिद्युव्याप्ती अपि देवादीनामुपसंहर्तव्ये नान्येषाम् । 'अत एव' योग्यताविशेषात् ।**

**'देवादीनामुपास्यास्तु भृतिव्याप्त्यादयो गणाः ।**
**आनन्दाद्यास्तु सर्वेषामन्यथाऽनर्थकृद्भवेत् ॥' इति च ब्रह्मतर्के ।**

॥ इति सम्भृत्यधिकरणम् ॥ १४ ॥

**भा.**॥ सूत्रं व्याचक्षते- **सम्भृतिद्युव्याप्ती अपीति** ॥ अपिना सूत्रान्तरोक्तगुणान्तरसङ्ग्रहः । **देवादीनामिति** ॥ 'कृत्यानां कर्तरि' इति कर्तरि षष्ठी । चार्थसहितसौत्राऽत इत्यस्याऽनुवादः- **अत एवेति** ॥ तस्याऽर्थः- **योग्यतेति** ॥ उक्तार्थे मानमाहुः- [1]**देवादीनामिति** ॥ **ब्रह्मतर्के इति** ॥ तत्रेत्युक्तेश्चेत्यर्थः ॥ २४ ॥ अ.१४ ॥

॥ इति सम्भृत्यधिकरणम् ॥ १४ ॥

---

१. **देवादीनामिति** ॥ **देवादीनां** तु तेषामेव **भृतिव्याप्त्यादयः** भृतिसम्भृतिव्याप्तिः द्युव्याप्तिः आदिना वीर्यादयः वेधादयोऽपि आनन्दाद्यास्तु सर्वेषामुपास्याः अन्यथा एवं व्यवस्थां विहायोपासने अनर्थकृत् उपासकस्य एतदुपासनमनर्थकृत् भवेदित्यर्थः ॥ २४ ॥ अ.१४ ॥

# १५. पुरुषविद्याधिकरणम्

**(सर्ववेदोक्तगुणैरेव उपासना कर्तव्या)**

अत्र नये शङ्कान्तरवारणाय सर्वगुणोपसंहारसमर्थनम्। अन्यथा सर्वपरिज्ञानं व्यर्थमिति 'सर्ववेदान्त' (३.३.१) नयेन सङ्गतिः। सर्वगुणोपसंहारो विषयः। कर्तव्यो न वेति संशयः। द्विविधक्रियादर्शनं तद्बीजम्। नेति पूर्वपक्षः॥ पूर्वपक्षयन्ति- **यस्यामिति॥ महागुणाः**- विशिष्टगुणाः। **उत्तमानाम्**- उत्तमाधिकारिणाम्। **इतरा**- तद्व्यतिरिक्तविद्या। **अन्येषां**- मध्यमाधमाधिकारिणामित्यर्थः। तथा च - सर्वगुणप्रतिपादकविद्ययैव निर्वाहे सर्वगुणोपसंहारो व्यर्थ इति भावः। **नेति**॥ निषेधे हेतुतया सूत्रं पठन्ति-

**यस्यां विद्यायां महागुणा उच्यन्ते सोत्तमानामितराऽन्येषामिति चेन्न–**

**॥ ॐ पुरुषविद्यायामपि चेतरेषामनाम्नानात् ॐ ॥ २५ ॥**

अपिः प्रसिद्धौ, कैमुत्ये च। चोऽनुक्तसमुच्चये। उपसंहार इति वर्तते। अयमर्थः- **पुरुषविद्यायामपि** विद्योत्तमत्वेन प्रसिद्धपुरुषसूक्तविद्यायामपि केषाञ्चिदाम्नानेऽपि **इतरेषाम्** अपेक्षितेतरगुणानाम् **अनाम्नानात्** उपसंहारः सर्वगुणोपसंहारः कर्तव्य इति। सर्वगुणपरविद्याया अप्रसिद्धत्वात्सर्वगुणोपसंहार आवश्यक इति भावः॥

**पुरुषसूक्तोक्तविद्यायामपि केषाञ्चिद्गुणानामनाम्नानात्।**

**'सर्वतः पौरुषे सूक्ते गुणा विष्णोरुदीरिताः।**
**तत्रापि नैव सर्वेऽपि तस्मात्कार्योपसंहृतिः॥' इति ब्रह्मतर्के।**

॥ इति पुरुषविद्याधिकरणम् ॥ १५ ॥

भा.॥ सूत्रं विवृण्वते- **पुरुषेति** ॥ सूत्रार्थे स्मृतिमाहुः- **'सर्वत इति** ॥ **ब्रह्मतर्क इति** ॥ तत्रेत्युक्तेश्चेत्यर्थः ॥ २५ ॥ अ.१५ ॥

॥ इति पुरुषविद्याधिकरणम् ॥ १५ ॥

१. **सर्वत इति** ॥ सर्वतः सर्वविद्यात आधिक्येन यद्वा सर्वतः सर्वत्र आदावन्ते मध्ये च। अथवा सर्वतः सर्वे बहव इति यावत् तत्रापि पुरुषसूक्तेऽपीत्यर्थः। शिष्टं स्पष्टम् ॥ २५ ॥ अ.१५ ॥

# १६. वेधाधिकरणम्

### (सर्वैः भेदनादिगुणा नोपास्याः)

अत्र नये भेदनादिगुणानां सर्वोपास्यत्वनिरसनम्। अन्यथा चतुर्गुणोपासननियमभङ्ग इति 'आनन्द' (३.३.५) नयेन सङ्गतिः । भेदनादिगुणा विषयः। सर्वोपास्या नवेति संशयः। द्विविधगुणदर्शनं तद्बीजम् । सर्वोपास्या इति पूर्वपक्षः ॥ १- सू.अ. ॥

## ॥ ॐ वेधाद्यर्थभेदात् ॐ ॥ २६ ॥

नोपसंहारः, सर्वेति वर्तते। विपरिणम्यते च। अयमर्थः- वेधादि 'अग्ने त्वचं यातुधानस्य भिन्धि, तं प्रत्यञ्चमर्चिषा विध्यमर्मन्, पराशृणीहि तपसा यातुधानान्' इत्यादिमन्त्रेषु श्रुता भेदनादिगुणाः सर्वेषां नोपसंहाराः नोपसंहर्तव्याः अर्थभेदात् अर्थस्य दुष्टनिग्रहरूपफलस्य विलक्षणत्वादिति ॥ तत्र च यत्यादीनामधिकाराभावादिति भावः ॥

**'भिन्धि विद्धि शृणीहीति फलभेदेन सर्वशः ।**
**यत्यादीनां तेष्वयोगान्नाधिकारैकता भवेत् ।**
**अयोग्योपासनादीयुरनर्थं चार्थनाशनेम्' ॥ इति बृहत्तन्त्रे ।**

॥ इति वेधाधिकरणम् ॥ १६ ॥

भा.॥ स्मृत्यैव सूत्रार्थमाहुः- **'भिन्धीति ॥ तन्त्र इति** ॥ एतत्सूत्रार्थ उक्त इति शेषः ॥ २६ ॥ १६ ॥

॥ इति वेधाधिकरणम् ॥ १६ ॥

---

१. **भिन्धि विद्धि शृणीहीति** ॥ 'अग्ने त्वचं यातुधानस्य भिन्धि' इति, 'तं प्रत्यञ्चमर्चिषा विध्य मर्मन्' इति, 'पराशृणीहि तपसा यातुधानान्' इत्यादिमन्त्रोक्तोपासनेषु सर्वशः सर्वेषां अधिकारैकता अधिकारसाम्यं न भवेत् । यतो यत्यादीनां तेषूपासनेषु अयोगात् अधिकाराभावात् फलभेदेन फलभेदाच्च एतदुपासनफलस्य यत्यादियोग्यफलविलक्षणत्वाच्चेति यावत् । यतोऽयोग्योपासनात् स्वायोग्योपासनकरणात् अनर्थम् अर्थनाशनं च ईयुः प्राप्नुयुरत इत्यर्थः । उक्तमन्त्रेषु प्रथममन्त्रस्यार्थः- हे अग्ने हर यातुधानस्य त्वचं शरीरं भिन्धीति, द्वितीयस्य प्रत्यञ्चं पृथक् स्थितं तं राक्षसम् अर्चिषा विष्णुलिङ्गेन मर्मन् मर्मस्थाने विध्य वेधयेत्यर्थः । तृतीयमन्त्रस्य परा परेण तपसा तुष्टः त्वं यातुधानात् शृणीहि जहीत्यर्थः ॥ २६ ॥ अ.१६ ॥

# १७. मुक्तोपासनाधिकरणम्

## (मोक्षे मुक्तानाम् उपासना ऐच्छिकी)

अत्र नये मुक्तावप्युपासनस्यानुवृत्तिसमर्थनम् । अन्यथा उपासनायामतिशयो न स्यादिति पूर्वनयैः सङ्गतिः । उपासनं विषयः । मुक्तैःक्रियते नवेति सन्देहः । अफलत्वम् उपासनश्रवणं च तद्बीजम् । नेति पूर्वपक्षः । **मुक्तस्येति** ।। 'कृत्यानां कर्तरि वा' इति कर्तरि षष्ठी । **न वेति** ।। इति शङ्कायामिति शेषः । (अनेन विषयसंशयौ सूचितौ ।) **अत इति** ।। शङ्कापरिहारार्थमित्यर्थः । (तथा च) मुक्तावुपासनापक्षे विधिबद्धत्वं, नेति पक्षे 'एतत्सामगायन्नास्ते' इत्यादिश्रुतिविरोध इति भावः ।।

**मुक्तस्योपासना कर्तव्या नवेत्यतो ब्रवीति–**

**।। ॐ हानौ तूपायनशब्दशेषत्वात्कुशाच्छन्दस्तुत्युपगानवत्तदुक्तम् ॐ ।। २७ ।।**

दृष्टान्तबलेन स्वेच्छयैवेति लभ्यते । स्तुत्युपमानपदं मन्त्रसामाध्ययनपरम् । नियतब्रह्मयज्ञानन्तरमिति शेषः । यथायथमावृत्तिविपरिणामौ । अयमर्थः- **हानौ तु** सकलदुःखहानिरूपे मोक्षेऽपि **तत्** उपासनम् **उक्तम्** 'एतत्सामगायन्नास्ते' इति । श्रुत्योक्तं तत्तु मुक्तिकालिकमुपासनन्तु नियतब्रह्मयज्ञानन्तरं **कुशाच्छन्दस्तुत्युपगानवत्** 'कुशेन कुशग्रहणेन आच्छन्देन(न्दसा) स्वेच्छया मन्त्रसामाध्ययनवत् स्वेच्छयैव क्रियते न विधितः । तस्य उपासनाविधेः **उपायनशब्दशेषत्वात्** मोक्षवाक्यशेषत्वादिति ।। मोक्षफलकोपासनाविधेर्मोक्षदानेन चरितार्थस्य मोक्षानन्तरं न व्यापारः किन्तु स्वेच्छयैव क्रियते उपासनमिति भावः ।।

**नियतस्वाध्यायानन्तरं स्वेच्छया कुशाग्रहणस्तुत्युपगानवदेव मोक्ष उपासनादिः । 'ब्रह्मविदाप्नोति परम्' (तै.उ.२.१.१) इति मोक्षवाक्यशेषत्वादितरेषाम् । तच्चोक्तम्– 'एतत्साम गायन्नास्ते' (तै.३.२०) इत्यादि ।**

**ब्रह्मतर्के च–**

**'मुक्ता अपि हि कुर्वन्ति स्वेच्छयोपासनं हरेः ।**
**नियमानन्तरं विप्राः कुशाद्यैरप्यधीयते' ।। इति ।**

**'कृष्णो मुक्तैरिज्यते वीतमोहैः ।।' इति च भारते ।**

**भा.**॥ सूत्रं व्याचक्षते- **नियतस्वाध्यायेति** ॥ नियतब्रह्मयज्ञेत्यर्थः । (श्रुत्युपन्यासेन सौत्रोपायनेति वाक्यं व्याख्यान्ति) [1]**ब्रह्मविदिति** ॥ **शेषत्वादिति** ॥ मोक्षकारणज्ञानपरवाक्याङ्गत्वादित्यर्थः । ज्ञानकारणोपासनापरत्वादङ्गत्वमिति भावः । **इतरेषाम्**- उपासनाविधीनाम् । मुक्तस्योपासनाऽस्तीत्यत्र मानमाहुः । तच्चोक्तम् - [2]**एतत्सामेति** ॥ **इत्यादीति** ॥ इत्यादावित्यर्थः । **तच्च**- मोक्षे उपासनं चेत्यर्थः । मोक्षे स्वेच्छयोपासनमित्यत्र मानमाहुः- [3]**मुक्ता अपीति** ॥ मुक्तौ कर्माप्यस्ति किमु उपासनमिति भावेनाऽऽहुः- **कृष्ण इति** ॥ **भारत इति** ॥ तच्चोक्तमिति वर्तते भारते, ब्रह्मतर्के च, तच्चोक्तमित्यर्थः ॥ २७ ॥

**मुक्तौ तदा तदा प्राप्ताऽनिष्टपरिहारार्थमुपासनमिति शङ्कापरिहाराय सूत्रम्-**

## ॥ ॐ साम्पराये तर्तव्याभावात्तथाह्यन्ये ॐ ॥ २८ ॥

**स्वेच्छयैव तदिति वर्तते । अयमर्थः- साम्पराये मुक्तौ तर्तव्याभावात् निवर्तनीयानिष्टाभावात् तत् उपासनं स्वेच्छयैव क्रियते नत्वनिष्टनिवृत्त्यर्थं हि यतः अन्ये शाखिनः तथा मोक्षे तर्तव्यानिष्टाभावपर 'तीर्णो हि तदा सर्वान्' इति पठन्ति अत इति ॥**

**स्वेच्छयेत्यङ्गीकर्तव्यम् । मुक्तस्य तीर्णत्वात् । 'तीर्णो हि तदा सर्वांश्छोकान् हृदयस्य भवति' इति ह्यन्ते पठन्ति ।**

**वायुप्रोक्ते च–**

**'स्थितप्रज्ञत्वमाप्ता ये ज्ञानेन परमात्मनः ।**
**ब्रह्मलोकं गतास्सर्वे ब्रह्मणा च परं गताः ।**
**तीर्णतर्तव्यभागाश्च स्वेच्छयोपासते परम् ॥' इति ।**

॥ इति मुक्तोपासनाधिकरणम् (हान्यधिकरणम्) ॥ १७ ॥

---

१. **ब्रह्मविदिति** ॥ व्या. (सं.१, पृ. ९६)

२. **एतत्सामेति** ॥ तै.३.१० एतत् वक्ष्यमाणं 'हा उहा' इत्यादिकं 'साम गायन्नास्ते' मुक्तचतुर्मुख इत्यर्थः।

३. **मुक्ता इति** ॥ नियमानन्तरं नियतस्वाध्यायानन्तरं विप्राः द्विजन्मानः कुशाद्यैः कुशग्रहणप्राङ्मुखत्वादिभिः सहिताः यथा तथेति शेषः इत्यर्थः । शिष्टं सुगमम् । **कृष्ण इति** ॥ कृष्णः मूलरूपी नारायणः वीतमोहैः मुक्तैरिज्यते उपास्यते इत्यर्थः ॥ २७ ॥

**भा.॥** सूत्रं व्याचक्षते- **स्वेच्छयैवेति ॥** तच्चेति वर्तते । मोक्षे उपासनं चेति तदर्थः । **तीर्णत्वादिति ॥** सर्वानिष्टतरणकर्तृत्वादित्यर्थः । तॄधातोः कर्तरि क्तप्रत्ययः । तत्र श्रुतिमाहुः- [1]**तीर्णो हीति ॥** हि यतः अन्ये शाखिन इति पठन्ति अतः, तीर्णत्वादित्यन्वयः । अत्र स्मृतिं चाहुः- [2]**स्थितेति ॥** वायुप्रोक्ते इत्युक्तेश्च तीर्णत्वादिति सम्बन्धः ॥ २८ ॥ अ.१७ ॥

**॥ इति हान्यधिकरणम् ॥ १७ ॥**

---

१. **तीर्णो हीति ॥** (बृ. ६.३.२२) **तदा** मुक्तौ **सर्वान् शोकान् तीर्णः** अतिक्रान्तः पुरुषः **हृदयस्य** हृदि अयनात्स्थितेर्हेतोः हृदयशब्दितस्य विष्णोः **भवति** विशेषेण प्रतिबिम्बो भवतीत्यर्थः ।

२. **स्थितेति ॥** ये स्थितप्रज्ञत्वं दृढपरोक्षज्ञानवत्त्वं प्राप्ताः परमात्मनो ज्ञानेन परोक्षज्ञानेन ब्रह्मलोकं चतुर्मुखलोकं गताश्च अथ ते सर्वे ब्रह्मणा सह परं परमात्मानं गताः सन्तः तीर्णतर्तव्यभागाश्च तर्तव्यविषयकतरणवन्तोऽपि स्वेच्छयैव परं परमात्मानम् उपासत इत्यर्थः । प्रतीकालम्बनाधिकारिविवक्षया ब्रह्मलोकप्राप्तिरुक्तेति केचित् ॥ २८ ॥ अ. १७ ॥

# १८. छन्दाधिकरणम्

**(मोक्षे मुक्ताः स्वेच्छया कर्म कुर्वन्ति)**

अत्र नये मुक्तानां भगवत्कर्मणि नियमाभावसमर्थनम् । अन्यथा कर्मण उपासनस्य च नियमेन प्राप्तौ उपासनस्याऽधिक्यं न स्यादिति पूर्वनयेन(१७)सङ्गतिः । कर्म विषयः । मुक्ता नियमेन कुर्वन्ति न वेति सन्देहः । उभयथाऽपि विरोधादर्शनं तद्बीजम् । नियमेन कुर्वन्तीति पूर्वपक्षः ॥ **कर्मापीति ॥** मुक्ता इति शेषः । **न वेतीति ॥** शङ्कायामिति शेषः । (अनेन विषयः, संशयश्च सूचितः) **अत इति ॥** इति शङ्कापरिहारार्थमाहेत्यर्थः । यद्वा- मुक्ताः कदाचित्कर्म कुर्वन्ति कदाचिन्नैव कुर्वन्तीत्याह सूत्रकार इत्यर्थः ॥

**कर्मापि कुर्वन्ति न वेत्यत आह–**

**॥ ॐ छन्दत उभयाविरोधात् ॐ ॥ २९ ॥**

साम्पराय इति वर्तते । अर्थात्कर्मकरणमिति लभ्यते । अयमर्थः:- **साम्पराये** मुक्तौ कर्मकरणं **छन्दतः** स्वेच्छयैव **उभयाविरोधात्** उभयोःकर्मकरणाकरणविषये विधिप्रत्यवाययोरभावादिति ॥

**स्वेच्छया कुर्वन्ति न वा । बन्धप्रत्यवाययोरभावात् ॥ २९ ॥**

भा. ॥ सूत्रं व्याचक्षते- **स्वेच्छयैवेति** ॥ मुक्ताः कर्मेति वर्तते । कदाचिदिति अर्थाल्लभ्यते । **बन्धेति** ॥ विधीत्यर्थः ॥ २९ ॥

मुक्तानां बन्धप्रत्यवायाभावः कथं सिद्ध इति शङ्कावारणाय सूत्रम्-

**॥ ॐ गतेरर्थवत्त्वमुभयथाऽन्यथा हि विरोधः ॐ ॥ ३० ॥**

अयमर्थः:- **उभयथा हि** बन्धप्रत्यवाययोरभावादेव **गतेः** ईश्वरप्राप्तिरूपमोक्षस्य **अर्थवत्त्वम्** अर्थः इच्छा तद्वत्त्वमिच्छाविषयत्वं पुरुषार्थत्वमिति यावत् । **अन्यथा** मुक्तौ विधिप्रत्यवायसत्त्वे **विरोधः** मुक्तेः पुरुषार्थत्वहानिः स्यादिति ॥ अतो मुक्तौ विधिप्रत्यवायाभावः सिद्ध इति भावः ॥

**बन्धप्रत्यवायाभावे हि मोक्षस्यार्थवत्त्वम् । अन्यथा मोक्षत्वमेव न स्यात् ।**

**'कदाचित् कर्म कुर्वन्ति कदाचिन्नैव कुर्वते ।**
**नित्यज्ञानस्वरूपत्वान्नित्यं ध्यायन्ति केशवम् ॥'**

**'तीर्णतर्तव्यभागा ये प्राप्तानन्दाः परात्मनः ।**
**प्रत्यवायस्य बन्धस्याप्यभावात् स्वेच्छया भवेत्' ॥ इति हि ब्रह्माण्डे ।**

भा.॥ सूत्रं व्याचक्षते- **बन्धेति** ॥ ननु मुक्तानां कर्मण्यनियमश्चेदुपासनायामपि तथा स्यादविशेषादिति शङ्कावारणायोक्तार्थे स्मृतिमाहुः- '**कदाचिदिति** ॥ **ब्रह्माण्ड इति** ॥ अधिकरणद्वयार्थ उक्त इति शेषः ॥ ३० ॥

**मुक्तौ विध्यभावः कर्मानियमे सम्भावक एव स्यान्नतूपपादकः ईश्वरसृष्ट्यादिकर्मणि व्यभिचारादिति शङ्कावारणाय सूत्रम्-**

**॥ ॐ उपपन्नस्तल्लक्षणार्थोपलब्धेर्लोकवत् ॐ ॥ ३१ ॥**

**तत् कर्मलक्षणं ज्ञानद्वारा निमित्तं यस्य स तल्लक्षणः स चासावर्थश्च प्रयोजनं तस्योपलब्धेरिति विग्रहः । सांपराय इति वर्तते । एवं भाव इति शेषः । अयमर्थः- सांपराये एवंभावः कदाचित्कर्मकरणं कदाचिन्नेत्येवं भावः । उपपन्नश्च युक्तश्च तल्लक्षणार्थोपलब्धेः ज्ञानद्वारा कर्मफलमोक्षस्य प्राप्तत्वात् । लोकवत् लोके यथायागादिसमाप्तिफलकं विष्णुक्रमणाख्यं विष्णुप्रीतिकरं कर्म यागादिसमाप्त्यनन्तरमपि केचित्कुर्वन्ति केचिन्न कुर्वन्ति, यद्वा- कस्यचिद्यागस्य समाप्त्यनन्तरमपि तत्कर्म कुर्वन्ति कस्यचिद्यागादेस्समाप्त्यनन्तरं न कुर्वन्ति च तथेति ॥ अत्रानुमानप्रयोगस्तु टीकायां स्पष्टः ॥**

**उपपन्नश्चैवम्भावः । प्राप्तत्वाल्लक्षणस्य फलस्य । यथा लोके विध्यर्थत्वेन विष्णुक्रमणादिकं कृत्वा समाप्तकर्मेच्छया करोति न करोति च ॥ ३१ ॥**

॥ इति छन्दाधिकरणम् ॥ १८ ॥

---

१. **कदाचिदिति** ॥ मुक्ता इति शेषः । अनेनार्धेन कर्मण्यनियम उक्तः । **ज्ञानस्वरूपत्वादिति** ॥ ध्यानस्यापि ज्ञानरूपत्वेन नित्यं ध्यायन्तीति तात्पर्यम् । विध्याद्यभावेऽपि अनिष्टनिवृत्त्यर्थमानन्दप्राप्त्यर्थं वा कर्मनियमः किं न स्यादित्यत आह- **तीर्णेति** ॥ ये तीर्णतर्तव्यभागाः परमात्मनः सकाशात् प्राप्ताऽनन्दाः तेषां प्रत्यवायस्य बन्धस्य चाभावात्स्वेच्छयैव कर्म भवेदित्यर्थः ॥ ३० ॥ ३१ ॥ अ.१८ ॥

**भा.**॥ सूत्रार्थमाहुः- **उपपन्न इति** ॥ तथेति शेषः । **प्राप्तत्वादिति** ॥ ननु कर्मफलस्य प्राप्तत्वात् कर्मणि अनियमवत् उपासनाफलस्यापि प्राप्तत्वात्तत्राप्यनियमः किं न स्यादिति चेन्न । नित्यज्ञानस्वरूपत्वादिति (पूर्वसूत्रोदाहृत) विशेषहेतुबलात्तन्नियमोपपत्तेः । तल्लक्षणस्य- ज्ञानद्वारा कर्मनिमित्तकस्य । फलस्य- मोक्षस्य । विध्यर्थत्वेन- विधिविहितयागादिसमाप्तिफलकत्वेन । वैशिष्ट्यं तृतीयार्थः । विष्णुक्रमणादावन्वेति । **समाप्तकर्मेति** ॥ समाप्तं कर्म येन सः समाप्तकर्मा यजमानः । **न करोति चेति** ॥ इत्येवंभावो यथोपपन्नः तथा एवं भाव उपपन्न इति सम्बन्धः ॥ ३१ ॥ अ.१८ ॥

**॥ इति छन्दाधिकरणम् ॥ १८ ॥**

## १९. अनियमाधिकरणम्

**(सर्वेषां ज्ञानिनां मुक्तिरस्ति)**

अत्र नये उपासनेन प्राप्तज्ञानानां सर्वेषामपि मोक्षनैयत्यसमर्थनम् । केषाञ्चिदेव मोक्षप्राप्तौ उपासने निःशङ्कप्रवृत्तिर्न स्यात् । तथा चोपासनाविचारो व्यर्थः स्यादिति पूर्वनयैः सङ्गतिः । मोक्षो विषयः । सर्वज्ञानिभिः प्राप्यः कैश्चिदेवेति संशयः । साधनवत्सु फलद्वैविध्यदर्शनं तद्बीजम् । कश्चिदेवेति पूर्वपक्षः ॥

### ॥ ॐ अनियमः सर्वेषामविरोधाच्छब्दानुमानाभ्याम् ॐ ॥ ३२ ॥

गतेरिति वर्तते । न नियम इति च्छेदः । अयमर्थः- गतेर्मोक्षविषये नियमः केषाञ्चिदेव ज्ञानिनां मोक्षः न सर्वज्ञानिनामिति व्यवस्था नास्ति । **सर्वेषां** ज्ञानिनाम् **अविरोधात्** कस्यापि ज्ञानिनो मोक्षनिषेधाभावात्, **शब्दानुमानाभ्यां** 'न कश्चिद्ब्रह्मवित्' इति श्रुतेः **अनुमानाच्चेति** ॥ अनुमान-प्रयोगस्तु- 'ज्ञानिनो नियतमोक्षा अपरोक्षज्ञानित्वाच्चतुर्मुखवत्' इति ॥ यथा सर्वगुणोपसंहारविषये चतुर्मुखस्यैव सर्वगुणोपसंहारकत्वमिति नियमोऽस्ति तथा केषाञ्चिदेव ज्ञानिनां मोक्ष इति नियमो नेति भावः ।

**प्राप्तज्ञानानामपि केषाञ्चिन्मुक्तिप्राप्तिः केषाञ्चिन्न, यथोपसंहारनियम इति न मन्तव्यम् ।**

**'सर्वे गुणा ब्रह्मणैव ह्युपास्या नान्यैर्देवैः किमु सर्वैर्मनुष्यैः'**

**इत्युपसंहारविरोधादन्यत्राविरोधात् । 'न कश्चिद्ब्रह्मवित्सृतिमनुभवति मुक्तो ह्येव भवति तस्मादाहुः सृतिहेति' इति कौण्डिन्यश्रुतेश्च ।**

**यथा केषाञ्चिन्मोक्ष एवमन्येषामित्यनुमानाच्च ॥ ३२ ॥**

॥ इत्यनियमाधिकरणम् ॥ १९ ॥

भा.॥ पूर्वपक्षमाहुः- **प्राप्तज्ञानानामिति** ॥ तथेत्यादौ शेषः । **उपसंहारनियम इति** ॥ केषाञ्चिदेव सर्वगुणोपसंहारनियमः केषाञ्चिन्नेति नियम इत्यर्थः । (अन्येषां सर्वगुणोपसंहार) निषेधकमानमाहुः-

[1]**सर्वे गुणा इति । विरोधात्** - निषेधात् । **अन्यत्र**- सर्वेषां मोक्षे । **अविरोधात्**- निषेधाभावादित्यर्थः । (सर्वेषां मोक्ष इत्यत्र) श्रुतिमाहुः- [2]न कश्चिदिति ॥ ३२ ॥ अ.१९ ॥

॥ **इत्यनियमाधिकरणम्** ॥ १९ ॥

---

१. **सर्वेति** ॥ स्पष्टम् । चतुर्मुखेतरेषां वेदोक्तसर्वगुणोपासनेऽनधिकारात् उक्तेरवैय्यर्थ्याय ब्रह्मैव सर्वगुणोपासकत्वेनाभिमत इति भावः ॥

२. **न कश्चिदिति** ॥ कोऽपि ब्रह्मवित् अपरोक्षज्ञानी सृतिं संसारं नानुभवति सदेति शेषः । हि यतः सृतेः मुक्तो भवति अतः एनं जीवं सृतिहा सृतिमुक्त इत्याहुः । यद्वा तस्मात् सृतिनिवर्तकज्ञानविषयत्वात् एनं परमात्मानं सृतिहा सृतिघ्न इत्याहुरित्यर्थः ॥ ३२ ॥ अ.१९ ॥

## २०. यावदधिकाराधिकरणम्

### (मुक्तानां योग्यतातारतम्यानुसारेणाऽऽनन्दानुभवः)

अत्र नये मौक्तानन्दादितारतम्येनोपासनाधिकारतारतम्यसाधनम् । अन्यथा 'प्राप्तेश्च समञ्जसम्' (३.३.१०) इति सूत्रमयुक्तं स्यादिति तेन नयेन (३.३.३) सङ्गतिः । उपासनाधिकारो विषयः । तारतम्यवान् न वेति संशयः । प्राप्तेश्चेति सूत्रं लौकिकक्रियायामदृष्टिश्च तद्बीजम् । नेति पूर्वपक्षः ॥

**॥ ॐ यावदधिकारमवस्थितिराधिकारिकाणाम् ॐ ॥ ३३ ॥**

साम्पराय इति वर्तते । अधिकारो योग्यता । सञ्शीलं येषान्तेषामाधिकारिकाणाम् । 'शीलम्' इति सूत्रेण ठक्प्रत्ययः । वृत्तावधिकारपदं योग्यतानुसार्यनुष्ठानपरम् । 'शीलम्' इति सूत्रोदाहरणे प्रकृतिभूतप्रथमान्तपदस्य स्वार्थपूर्वकक्रियापरत्वात् । यावदधिकारमित्यत्र 'यावदवधारणे' इत्यव्ययीभावः । तत्राऽवधारणं सङ्ख्यादिनेयत्ता (परिच्छेदः) । अयमर्थः- **आधिकारिकाणां** स्वस्वयोग्यताऽनुसार्यनुष्ठानशीलवतां ब्रह्मादीनां **साम्पराये** मुक्तौ **अवस्थितिः** आनन्दाद्यनुभवरूपा स्थितिः **यावदधिकारं** स्वस्वयोग्यतानिष्ठाऽतिशयसदृशातिशयवत्येवेति तारतम्योपेतेति यावत् । तथाचोपसंहारोऽपि यावदधिकारमेवेति भावः ।

**यथा यथाऽधिकारो विशिष्यते एवं मुक्तावानन्दो विशिष्यते । 'मनुष्येभ्यो गन्धर्वाणां गन्धर्वेभ्य ऋषीणामृषिभ्यो देवानां देवेभ्य इन्द्रस्य इन्द्राद्रुद्रस्य रुद्राद्ब्रह्मण एष ह्येव शतानन्दः' इति चतुर्वेदशिखायाम् ।**

**अध्यात्मे च–**

**'ज्ञानं चोपासनं चैव मुक्तावानन्द एव च ।**
**यथाधिकारं देवानां भवन्त्येवोत्तरोत्तरम्' ॥ इति ।**

भा. ॥ (सूत्रतात्पर्यमाहुः-**यथेति** ॥) **विशिष्यत इति** ॥ अधिको भवतीत्यर्थः । **आनन्दोऽपीति** ॥ मुक्तावानन्दतारतम्यमुपासनातारतम्यकल्पकमिति भावः । मुक्तावानन्दतारतम्यनियामक(श्रुति)माहुः- '**मनुष्येभ्य इति । शिखायामिति** ॥ तत्रेत्युक्तेरानन्दो विशिष्यत इति सम्बन्धः ।

१. **मनुष्येभ्य इति** ॥ मनुष्योत्तमानन्देभ्यो गन्धर्वाणामानन्दोऽधिक इत्यर्थः । एवमुत्तरत्रापि ज्ञेयम् ।

ननु मुक्तावानन्दतारतम्यं नोपासनातारतम्यकल्पकं किन्तूपासनादिप्रयत्नतारतम्यकल्पकं भवेदत आहुः- अध्यात्मे च - [1]**ज्ञानं चेति** ॥ अध्यात्मे इत्युक्तेश्चेत्यर्थः ॥ ३३ ॥

**मुक्तावानन्दतारतम्यं नोपपन्नं मुक्तानां मिथो विरोधापत्तेरिति शङ्कावारणाय सूत्रम्-**

## ॥ ॐ अक्षरधियां त्वविरोधः सामान्यतद्भावाभ्यामौपसदवत्तदुक्तम् ॐ ॥ ३४ ॥

औपसदवत् उपपूर्वकसदधातोर्भावे क्विप् । गुर्वनुवर्तनं तदर्थः । उपसद इमौ औपसदौ गुरुशिष्यौ तयोरुपसत्सम्बन्धित्वात् । ततो वतिः अक्षरधियामिति हेतुगर्भमक्षरधीत्वादिति । **तुरसमत्वेऽपीत्यनुक्तसमुच्चये, हेतौ च। साम्पराय इति वर्तते। अयमर्थः- साम्पराये मुक्तौ अक्षरधियां ब्रह्मज्ञानिनां चतुर्मुखादीनामसमत्वेऽपि मिथः साम्यऽभावेऽपि औपसदवत् गुरुशिष्ययोरिव अविरोधः मिथोऽविरोधेन अक्षरधीत्वात्** ब्रह्मज्ञानित्वात् **सामान्यतद्भावाभ्यां** सामान्यात् विषयलम्पटत्व-मात्सर्यादिदोषाभावसाम्यात् **तद्भावात्** तस्य उपकार्योपकारकभावस्य सत्त्वात् **तु** यतः **तत्** उक्तप्रमेयजातम् उक्तं 'नानाविधा जीवसङ्घा' इति श्रुतौ प्रतिपादितमत इति ॥

**न चासमत्वेन विरोधो भवति । ब्रह्माधीनत्वाद्दोषाभावसाम्यादुत्तमेभ्योऽन्येषां भावाच्च । औपसदवच्छिष्यवत् ।**

**उक्तं हि तुरश्रुतौ–**

**'नानाविधा जीवसङ्घा विमुक्तौ न चैव तेषां ब्रह्मधियां विरोधः ।**
**दोषाभावाद्गुरुशिष्यादिभावाल्लोकेऽपि नासौ किमु तेषां विमुक्तेः'** ॥ **इति ।**

॥ इति यावदधिकाराधिकरणम् ॥ २० ॥

---

१. **ज्ञानमिति** ॥ देवानां मुक्तियोग्यानां यथाऽधिकारं योग्यतानुसारेण यथोपासनम् एवं ज्ञानं यथाज्ञानम् एवं मुक्तावानन्द इत्येते गुणा उत्तरोत्तरं परस्परं सापेक्षा भवन्तीत्यर्थः । एवं च मुक्तावानन्दतारतम्यं न प्रयत्नसाध्यं किन्तु योग्यतानुसारीति भावः ॥ ३३ ॥

भा. ॥ सूत्रार्थमाहुः- **नचाऽसमत्वेनेति** ॥ अर्थान्मुक्तानामिति लभ्यते । **अन्येषामिति** ॥ उपकारस्येति शेषः । श्रुतिमाहुः- [१]**नानाविधा इति** ॥ ३४ ॥ अ.२० ॥

॥ **इति यावदधिकाराधिकरणम्** ॥ २० ॥

१. **नानाविधा इति** ॥ देवसङ्घाः मुक्तियोग्यसङ्घाः कचित्तु जीवसङ्घ इति पाठः । विमुक्तौ नानाविधा तारतम्योपेताः तथाऽपि ब्रह्मधियां तेषां मुक्तानां दोषाभावात् गुरुशिष्यादिभावात् आदिना स्वामिभृत्यादिभावात् विरोधो न ब्रह्मधियां लोकेऽपि संसारेऽपि ब्रह्मधीत्वात् गुरुशिष्यादिभावात् असौ विरोधोनास्ति किमु विमुक्तेरनन्तरमिति शेष इत्यर्थः ॥ ३४ ॥ अ.२० ॥

## २१. इयदामननाधिकरणम्

**(मुख्यप्राणादूर्ध्वम् अधिकारिणोऽभावात् प्राणावसानमेवाधिकारितारतम्यम्)**

अत्र नये उपासनाऽधिकारिणां मुख्यप्राणावधित्वसमर्थनम् ।

निरवधिकत्वे 'प्राप्तेश्च' इति सूत्रोदाहृत 'गुणैस्सर्वैरुपास्योऽसौ ब्रह्मणा परमेश्वरः' इति स्मृतिसिद्धोपासनायोग्यत्वं प्राणस्यैवेति नियमो न स्यादिति तेन नयेन (३.३.३) सङ्गतिः । उपासनाऽधिकारिणो विषयः । प्राणावधिका न वेति संशयः । प्राणादुत्तमानुक्तेरुभयथाऽपि दर्शनं तद्बीजम् । नेति पूर्वपक्षः ॥

## ॥ ॐ इयदामननात् ॐ ॥ ३५ ॥

आधिकारिकाणां, तु इति वर्तते । इयत्पदेन छन्दोगश्रुत्युक्तप्राणावधिकमित्यर्थस्य परामर्शः । तुरेवार्थे । तारतम्यमिति शेषः । अयमर्थः- **आधिकारिकाणाम्** अधिकारे नियुक्तनामादिदेवानां तारतम्यम् **इयत्तु** प्राणावधिकमेव **आमननात्** 'प्राणो वाव सर्वेभ्यः' इति कौण्ठरव्यश्रुतौ तथोक्तत्वा-दिति ॥

**नामाद्यारभ्य प्राणान्तमुत्तरोत्तारमुत्तमत्वमुक्तम् । न प्राणात्किञ्चिद्भूय उक्तम् । तथाऽपि पूर्ववत्स्यादपीति न वाच्यम् । 'प्राणो वाव सर्वेभ्यो भूयान्न हि प्राणाद्भूयान् प्राणो ह्येष भूयांस्तस्माद्भूयान्नाम' इति कौण्ठरव्यश्रुतेः ॥**

भा. ॥ सूत्रं व्याचक्षते- **नामाद्यारभ्येति** ॥ नामादिप्राणान्तसमुदायं प्रकृत्येत्यर्थः । **भूय इति** ॥ उत्तममित्यर्थः । नामादयस्तु नामवाङ्मनःसङ्कल्पचित्तध्यानविज्ञानबलान्नाप्तेजआकाशस्मराशाप्राण-शब्दवाच्याः 'उषा स्वाहा च पर्जन्यो मित्रोऽग्निर्वरुणो विधुः । प्रवहोऽनिरुद्ध इन्द्रो मे रुद्रो वाणी च मारुतः' इत्यनुव्याख्यानोक्ता देवताः । **तथाऽपीति** ॥ प्राणादुत्तमस्याऽकथनेऽपीत्यर्थः । अनुमानेन प्राणादुत्तमः सिध्यतीत्याहुः- **पूर्ववदिति** ॥ प्राणापेक्षया पूर्वं प्रक्रान्तनामादिवदित्यर्थः अनेन भाष्येण 'प्राणः स्वोत्तमाधिकारियुक्तोऽधिकारित्वान्नामादिवत्' इत्यनुमानं सूचितम् । स्वोत्तमयुक्त इत्येव साध्योक्तौ परमात्मानं श्रियं चादाय सिद्धसाधनं स्यात् । अधिकारीति विशेषणे

तु तयोस्तदभावान्न सिद्धसाधनम् । इदं चानुमानमुत्तरसूत्रे वक्ष्यमाणमेव पूर्वपक्षसौकर्यायोक्तम् । आमननादित्यंशं श्रुत्युपन्यासेन व्याख्यान्ति - '**प्राणो वावेति** ॥ ३५ ॥

**श्रुत्यपेक्षयाऽनुमानस्य प्राबल्यं मन्वानस्य शङ्कायां श्रुतेरेव प्राबल्यात्तदनुसारेणैव निर्णय इति बोधनाय सूत्रम्-**

## ॥ ॐ अन्तरा भूतग्रामवदिति चेत्तदुक्तम् ॐ ॥ ३६ ॥

**अक्षरेत्येकदेशो, नेति वर्तते । भूतग्रामवदित्यनेनाऽऽक्षेपात् 'प्राणः स्वोत्तमयुक्तोऽधिकारित्वात्' इति लभ्यते । यथायथमावृत्तिविपरिणामौ ॥ अयमर्थः- प्राणः, अक्षरं विष्णुं, श्रियं च, अन्तरा विना स्वोत्तमयुक्तः तदतिरिक्तस्वोत्तमयुक्त इति यावत् अधिकारित्वात् भूतग्रामवत् नामाद्याशान्त-भूतसमूहवत् इति चेन्न । यतः तत्र प्राणादुत्तमाधिकार्यभावे तत् प्रमाणमुक्तमत इति ॥ तथाचाऽनुमानं प्रमाणबाधितमिति भावः ।**

**यथा भूतग्राम एकस्मादेक उत्तमोऽस्त्येव एवं प्राणादपि परमात्मानमन्तरा विद्यत इति चेन्न । प्राणादुत्तमाभावे प्रमाणमुक्तम् । अन्यत्रोत्तमाभावे न प्रमाणम् । दृश्यते चान्यत्रोत्तमत्वम् ॥ ३६ ॥**

**भा.॥** सूत्रार्थमाहुः- **यथेति** ॥ **परमात्मानमिति** ॥ इदमुपलक्षणं श्रियोऽपि । **विद्यत इति** ॥ उत्तम इति वर्तते । **प्रमाणमिति** ॥ कौण्ठरव्यश्रुतिरूपं प्रमाणम् । उक्तं- पूर्वसूत्रे उक्तमित्यर्थः । ननु प्राणादुत्तमाभावे नामादिभ्योऽप्युत्तमो न स्यादत आहुः - **अन्यत्रेति** ॥ नामादिभ्य उत्तमाभावे इत्यर्थः । नामादिभ्य उत्तमसत्त्वे प्रमाणं चास्तीत्याहुः- **दृश्यत इति** ॥ अन्यत्र- **वागादौ** । 'वाग्वाव नाम्नो भूयसी' इत्यादिप्रमाण इति भावः ॥ ३६ ॥

**प्राणस्य सर्वोत्तमत्वमेव साधनीयं न त्वधिकार्युत्तमत्वमात्रं 'प्राणो वाव सर्वेभ्यः' इति श्रुतिस्थसर्वशब्दसङ्कोचे मानाऽभावादिति शङ्कावारणाय सूत्रम्-**

---

१. **प्राणो वावेति** ॥ हि यतः प्राणात् मुख्यप्राणात् भूयानधिकः कोऽपि नास्ति अतः प्राण एव सर्वेभ्यो भूयान्. निगमयति- **प्राणो ह्येव भूयनिति** ॥ तस्मात् भूयान्नाम लोके प्राणाधिकाभावात् भूयःशब्दवाच्यतया प्रसिद्ध इत्यर्थः ॥ ३५ ॥ ३६ ॥ ३७ ॥ अ.२१ ॥

**॥ ॐ अन्यथा भेदाऽनुपपत्तिरिति चेन्नोपदेशवत् ॐ ॥ ३७ ॥**

प्राणोऽक्षरेति वर्तते । उपदेशपदं कर्म घञन्तं ततः 'तदर्हम्' इति सूत्रेण वतिः । यथायथं विपरिणामः। अयमर्थः- **अन्यथा** पूर्वव्यत्यासे प्राणस्य सर्वोत्तमत्व इति यावत् । अक्षरेण परमात्मना प्राणस्य **भेदानुपपत्तिः** 'आत्मत एष प्राणो जायते' इत्यादिश्रुतिसिद्धभेदस्यायोगः **स्यादिति चेन्न- उपदेशवत्** 'एष तु वा अतिवदति' इत्यादिश्रुत्युपदिष्टप्रकारेणोपपत्तेरिति ॥ उपदेशप्रकारस्तु अग्रे व्यक्तः ।

**प्राणस्य सर्वोत्तमत्वे परमात्मना भेदानुपपत्तिरिति चेन्न । श्रुत्युपदिष्टवदुपपत्तेः । अन्येभ्यः प्राणस्योत्तमत्वं तस्मात्परमात्मनो ह्युपदिष्टम् ॥**

॥ इति इयदामननाधिकरणम् ॥ २१ ॥

**भा.॥** सूत्रार्थमाहुः- **प्राणस्येति ॥ भेदानुपपत्तिरिति ॥** प्राणस्यापि सर्वोत्तमत्वे सर्वोत्तमद्वयायोगेन प्राणपरमात्मनोरैक्यापत्त्या भेदो न स्यादिति भावः । **उपपत्तेरिति ॥** भेदोपपत्तेरित्यर्थः । तस्मात्- प्राणात् । **परमात्मन इति ॥** उत्तमत्वमिति वर्तते । हि प्रसिद्धम् ॥ ३७ ॥ अ.२१ ॥

॥ इति इयदामननाधिकरणम् ॥ २१ ॥

## २२. व्यतिहाराधिकरणम्

**(परमात्मा प्राणादधिकः)**

अत्र नये प्राणात्परमात्मन उत्तमत्वसमर्थनम् । अन्यथा उपासनं व्यर्थमिति पूर्वनयैः सङ्गतिः । विष्णुर्विषयः । प्राणादुत्तमो नवेति संशयः । प्राणस्य हिरण्यगर्भत्वात् विप्रतिपत्तिस्तद्बीजम् । नेति पूर्वपक्षः ॥ **नेतीति** ॥ तस्मात्परमात्मन उत्तमत्वमुपदिष्टमिति वर्तते । श्रुताविति शेषः । तस्मात्प्राणात्परमात्मन उत्तमत्वं छन्दोगश्रुतौ नोपदिष्टमित्यर्थः । तत्र तादृशशब्दाभावात् प्राणस्यैवोपदिष्टमिति भावः ।

**नेति चेन्न–**

**॥ ॐ व्यतिहारो विशिंषन्ति हीतरवत् ॐ ॥ ३८ ॥**

विशिंषन्तीत्यनेनाऽक्षेपात् छन्दोगाः सत्यातिवादिनं प्राणातिवादित इति लभ्यते । व्यतिहारपदेनाऽक्षेपात् प्रश्नप्रतिवचनयोः सत्यप्रकरणे कार्य इति लभ्यते । अयमर्थः- छन्दोगाः **इतरवत्** 'वाग्वाव नाम्नो भूयसी' इत्यादिविशेषणेन नामादिभ्यो वागादिकमिव प्राणातिवादितः सत्यातिवादिनं 'यः सत्येनाऽतिवदति' इति श्रुत्युक्तसत्यातिवादिनं **विशिंषन्ति** 'एष तु वा अतिवदति' इति तुशब्देन व्यावर्तयन्ति । हि तस्मात् तत्सिद्धात् प्राणसत्यप्रकरणयोर्भिन्नत्वावगमात् नामादिप्रकरणप्रायपाठाच्च प्रश्नप्रतिवचनयोः 'अस्ति भगवः प्राणाद्भूयः' इति 'प्राणाद्वाव भूयोऽस्ति' इति 'तन्मे भवान्ब्रवीतु' इति 'सत्यं वाव प्राणाद्भूयः' इति प्रश्नपरिहारयोः सत्यप्रकरणे **व्यतिहारः** अध्याहारः कार्य इति ॥ एवं च प्राणाद्विष्णुरुत्तम इति सिद्धमिति भावः ।

**उक्तं प्राणात् परमात्मन उत्तमत्वं पूर्वोक्ताध्याहारेण । 'एष तु वा अतिवदति' (छां.७.१६) इति विशिंषन्ति हि । यथेतरेषु विशेषणम् ।**

**'उत्तमत्वं हि देवानां मुक्तावपि हि मानवात् ।**
**तेभ्यः प्राणस्य तस्माच्च नित्यमुक्तस्य वै हरेः' ॥ इति च बृहत्तन्त्रे ।**

॥ इति व्यतिहाराधिकरणम् ॥ २२ ॥

भा. ॥ सूत्रं व्याचक्षते- **उक्तमिति** ॥ छान्दोग्ये उक्तमित्यर्थः । **पूर्वोक्तेति** ॥ पूर्वभूतनामादि-

प्रकरणपठितप्रश्नप्रतिवचनसदृशप्रश्नप्रतिवचनयोरध्याहारेणेत्यर्थः । अध्याहारे हेतुतया श्रुतिमेवाहुः- [1]'एष तु वा' इति **हीति** ॥ हि यस्मात् 'एष तु वा' इति तुशब्देन विशिंषन्ति तस्मात्पूर्वोक्ताऽध्याहारेण प्राणात्परमात्मन उत्तमत्वमुक्तमित्यन्वयः । अत्र स्मृतिमाहुः- [2]**उत्तमत्वमिति** ॥ **तन्त्रे इति** ॥ तत्र इत्युक्तेरित्यर्थः ॥ ३८ ॥ अ. २२ ॥

**॥ इति व्यतिहाराधिकरणम् ॥ २२ ॥**

---

१. **एष तु वेति** ॥ (छा.७.१६) 'यः सत्येनातिवदति' इति वाक्यशेषः । योऽधिकारी सत्येन सत्यशब्दितं विष्णुमतिवदति प्राणादुत्तमत्वेन वदति एष तु एष एव अतिवदति विशेषेणातिशयितवस्तुवादीत्यर्थः ।

२. **उत्तमत्वमिति ॥ हि** यतो मुक्तावपि मानवान् मनुष्योत्तमोपलक्षिताधममध्यमाधिकारिसकाशात् देवानां नामादिदेवानामुत्तमत्वं तेभ्यो देवेभ्यः प्राणस्योत्तमत्वं तस्माच्च नित्यमुक्तस्य हरेरुत्तमत्वात् । अतः संसारे प्राणस्य देवाद्यपेक्षयोत्तमत्वं किमु वक्तव्यमिति तात्पर्यार्थः ॥ ३८ ॥ अ.२२ ॥

## २३. सत्याद्यधिकरणम्

**(छान्दोग्ये सत्यादिप्रकरणोक्ताः सत्यादयः भगवत्स्वरूपभूताः)**

**अत्र नये शङ्कान्तरवारणाय प्राणाद्विष्णोरेवोत्तमत्वसमर्थनम् । अनेकेषामुत्तमत्वे पूर्वनयोक्तं विष्णोरेव निरुपचरितोत्तमत्वं न स्यादिति पूर्वनयेन (२२) सङ्गतिः । प्राणो विषयः । विष्णुमात्रनिष्ठोत्तमता-निरूपकः विष्ण्वादिबहुनिष्ठोत्तमतानिरूपको वेति संशयः । प्राणाद्विष्णोरुत्तमत्वोक्तेरुभयथाऽपि सम्भवस्तद्बीजम् । बहुनिष्ठोत्तमतानिरूपक इति पूर्वपक्षः ॥ पूर्वपक्षमाहुः- कृतिरिति ॥ ननु छान्दोग्ये सत्यादनन्तरं विज्ञानस्यैव पाठेन तद्विहाय कृतेरादौ ग्रहणं कुत इति चेन्न 'सत्यं पूर्णं कृतिः पूर्णा निष्ठापूर्णा श्रद्धापूर्णाः' इति श्रुत्यनन्तरानुरोधात् । विज्ञानमिति ॥** एतेषामिति शेषः । इत्यादीनां च भेदात् तत्तत्प्रकरणे 'विज्ञानन्त्वेव' इत्यादि तुशब्देनाऽवगतभेदाद्बहवोऽपि प्राणादुत्तमा इत्यर्थः ॥

**कृतिर्निष्ठा विज्ञानमित्यादीनां भेदाद्बहव उत्तमा इति चेन्न–**

**॥ ॐ सैव हि सत्यादयः ॐ ॥ ३९ ॥**

सत्यादय इति अतद्गुणसंविज्ञानो बहुव्रीहिः । पूर्वनये प्राणादुत्तमत्वेनोक्तस्य सत्यस्य विषये विवादाभावात् । विवादपक्षे तु तद्गुणसंविज्ञानोऽस्तु । हिः प्रसिद्धौ । अयमर्थः- **सत्यादयः** सत्य-विज्ञानमतिश्रद्धानिष्ठाकृतिसुखभूमाऽहङ्कारात्मशब्दवाच्याः सत्यादिगुणाः **सैव** विष्ण्वाख्यपरदेवतैव नान्ये । **हि** 'नामादिप्राणपर्यन्तात्' इति स्मृतिप्रसिद्धमिति ॥ सूत्रे सेति स्त्रीलिङ्गनिर्देशः सत्यादौ स्त्रीलिङ्गानां प्रचुरत्वादिति ज्ञेयम् ।

**सत्यादिगुणास्तस्या एव परदेवतायाः स्वरूपभूताः । ब्रह्मतर्के च–**

**'नामादिप्राणपर्यन्तात् यो हि सत्यादिरूपवान् ।**
**तस्मै नमो भगवते विष्णवे सर्वजिष्णवे ॥' इति ।**

**'सत्याद्या अहमात्मान्ता यद्गुणास्समुदीरिताः ।**
**तस्मै नमो भगवते यस्मादेव विमुच्यते ॥' इति चाध्यात्मे ।**

॥ इति सत्याद्यधिकरणम् ॥ २३ ॥

**भा.** ॥ सूत्रं व्याचक्षते- **सत्यादिगुणा इति** ॥ यतोऽत इति शेषः । यतः सत्यादिगुणाः तस्या एव परदेवतायाः स्वरूपभूता एव अत इति चेन्नेति सम्बन्धः ।

अत्र स्मृतिमाहुः- [1]**नामादीति** ॥ ननु भूमान्तानां श्रुतौ भगवद्गुणत्वोक्त्याऽभेदोऽस्तु न त्वहङ्कारात्मनोः तयोर्गुणत्वानुक्तेः पृथग्भेदानुक्तेश्चेत्यत आहुः- [2]**सत्याद्या इति** ॥ **अध्यात्म इति** ॥ ब्रह्मतर्के इत्युक्तेश्च अध्यात्म इत्युक्तेश्चेत्यर्थः । तथा च 'विज्ञानन्त्वेव' इत्यादौ श्रूयमाणतुशब्दस्य प्रकरणभेदद्योतकत्वेऽपि तत्तत्प्रकरणबोध्यप्रधानवस्तूनां भेदो न प्रमाणबलादिति बोध्यम् ॥ ३९ ॥ अ.२३ ॥

॥ **इति सत्याद्यधिकरणम्** ॥ २३ ॥

---

१. **नामादीति** ॥ यः सत्यादिरूपवान् विष्णुः नामादिप्राणपर्यन्तादधिकारिवर्गात् अधि अधिकः । यद्वा नामादिप्राणपर्यन्तादधि उपरि सत्यादिरूपवान् तस्मै इति सम्बन्धः । शिष्टं स्पष्टम् । यो हीति पाठे तु उपरीति शेषो बोध्यः ।

२. **सत्याद्या इति** ॥ सत्याद्या अहमात्मान्ताः सत्यविज्ञानमतिश्रद्धानिष्ठाकृतिसुखभूमाऽहङ्काराऽत्मशब्दाः यद्गुणाः यस्य परमात्मनः गुणवाचकाः समुदीरिताः तस्मै नम इति सम्बन्धः । यस्मात् कारणादहङ्कारात्मज्ञानाद्विमुच्यते मुक्तो भवतीत्युक्तं 'स वा एष एवं पश्यन्' इत्यादिना । इदमुपलक्षणमहङ्कारात्मनोरहमेवाधस्तादित्यादिना, 'आत्मैवाधस्तात्' इत्यादिना भूम्न इव पूर्णत्वमुच्यते । तस्मात्कारणादहङ्कारात्मानौ विष्णुगुणवाचकाविति शेषः । तथा च सत्यादाविव गुणप्रश्नपूर्वकमभेदानुक्तावपि हेत्वन्तरबलात्तयोर्विष्णुस्वरूपत्वमस्त्येवेति भावः ॥ ३९ ॥ अ.२३ ॥

## २४. कामाधिकरणम्

**(लक्ष्मीः नित्यमुक्ताऽपि भक्तिविशेषाद् उपासनां करोति)**

**प्रकृतेरपि जन्मादेः संसारप्राप्तेः किमिति नामादिष्वपाठ इत्यत्रोच्यते–**

अत्र नये भगवद्दर्शनसाधनोपासने श्रियोऽनधिकारसमर्थनम् । अन्यथाऽधिकारिणां प्राणावधित्वं न स्यादिति 'इयदामननात्'(३.३.२१) इति नयेन सङ्गतिः, श्रीर्विषयः, अधिकारिणी नवेति संशयः । द्विविधचेतनदर्शनं तद्बीजम् । अधिकारिणीति पूर्वपक्षः ॥ पूर्वपक्षमाहुः- **प्रकृतेरिति** ॥ श्रियइत्यर्थः । **जन्मादेरिति** ॥ सीतारुग्मिण्यादिरूपेणजन्मादिसम्भवात् । **संसारप्राप्तेः**- सुखदुःखादिप्राप्तेरित्यर्थः । अपाठ इति ॥ पाठाऽभावः कुतो हेतोरित्यर्थः । तथा च संसारनिवर्तकभगवद्दर्शनसाधनोपासने श्रियोऽप्यधिकारात्प्राणादुत्तमत्वाच्च प्राणादुपरि अध्याहारेण पाठे स्वीकर्तव्ये सति उक्तप्राणावधित्वं न सम्भवतीति भावः । **अत्रेति** ॥ एवं पूर्वपक्षे सति । उच्यते- सिद्धान्त उच्यत इत्यर्थः ।

**॥ ॐ कामादितरत्र तत्र चाऽयतनादिभ्यः ॐ ॥ ४० ॥**

चशब्देन, आक्षेपाद्वा, श्रीः स्थिताऽवतरतीति लभ्यते । कामादित्यावर्तते । अयमर्थः:- **कामात्** स्वेच्छया **इतरत्र** भगवत्समीपे स्थिता श्रीः **कामात्** भगवदिच्छयैव न कर्मवशतः **इतरत्र** भूम्यादौ अवतरति **आयतनादिभ्यः** आयतनादिशब्दघटित 'सर्वायतन' इत्यादिश्रुतेरिति ॥ तथा च श्रियो जन्माद्यभावेन संसाराभावात् उक्तोपासनेऽनधिकारान्नामादिष्वपाठ इति भावः ।

**स्वेच्छयैव मूलस्थाने स्थिताऽन्यत्र चावतारान् करोतीश्वरेच्छानुसारेण । 'सर्वायतना सर्वकाला सर्वेच्छा सर्वज्ञा न बद्धा बन्धका सैषा प्रकृतिरविकृतिः' ॥ इति वत्सश्रुतेः ।**

**'नामादयस्तु बद्धत्वान्मोचकत्वात्परोऽपि च ।**
**उभयोरप्यभावेन यथाऽव्यक्तं न तूदितम् ॥**
**श्रुतौ तथा जीवपरावुच्येते किञ्च नेतरत् ।**
**नोच्यते च तदा तत्वद्वयं वै समुदाहृतम् ॥' इति ब्रह्मतर्के ॥ ४० ॥**

भा.॥ सूत्रार्थमाहुः- **स्वेच्छयेति** ॥ **मूलस्थाने इति** ॥ मूलस्य परमात्मनः स्थाने समीपदेशे वैकुण्ठादौ

**भा.** ॥ सूत्रं व्याचक्षते- **सत्यादिगुणा इति** ॥ यतोऽत इति शेषः । यतः सत्यादिगुणाः तस्या एव परदेवतायाः स्वरूपभूता एव अत इति नेन्नेति सम्बन्धः ।

अत्र स्मृतिमाहुः- [1]**नामादीति** ॥ ननु भूमान्तानां श्रुतौ भगवद्गुणत्वोक्त्याऽभेदोऽस्तु न त्वहङ्कारात्मनोः तयोर्गुणत्वानुक्तेः पृथग्भेदानुक्तेश्चेत्यत आहुः- [2]**सत्याद्या इति** ॥ **अध्यात्म इति** ॥ ब्रह्मतर्के इत्युक्तेश्च अध्यात्म इत्युक्तेश्चेत्यर्थः । तथा च 'विज्ञानन्त्वेव' इत्यादौ श्रूयमाणतुशब्दस्य प्रकरणभेदद्योतकत्वेऽपि तत्तत्प्रकरणबोध्यप्रधानवस्तूनां भेदो न प्रमाणबलादिति बोध्यम् ॥ ३९ ॥ अ.२३ ॥

॥ इति **सत्याद्यधिकरणम्** ॥ २३ ॥

---

१. **नामादीति** ॥ यः सत्यादिरूपवान् विष्णुः नामादिप्राणपर्यन्तादधिकारिवर्गात् अधि अधिकः । यद्वा नामादिप्राणपर्यन्तादधि उपरि सत्यादिरूपवान् तस्मै इति सम्बन्धः । शिष्टं स्पष्टम् । यो हीति पाठे तु उपरीति शेषो बोध्यः ।

२. **सत्याद्या इति** ॥ सत्याद्या अहमात्मान्ताः सत्यविज्ञानमतिश्रद्धानिष्ठाकृतिसुखभूमाऽहङ्काराऽत्मशब्दाः यद्गुणाः यस्य परमात्मनः गुणवाचकाः समुदीरिताः तस्मै नम इति सम्बन्धः । यस्मात् कारणादहङ्कारात्मज्ञानाद्विमुच्यते मुक्तो भवतीत्युक्तं 'स वा एष एवं पश्यन्' इत्यादिना । इदमुपलक्षणमहङ्कारात्मनोरहमेवाधस्तादित्यादिना, 'आत्मैवाधस्तात्' इत्यादिना भूम्न इव पूर्णत्वमुच्यते । तस्मात्कारणादहङ्कारात्मानौ विष्णुगुणवाचकाविति शेषः । तथा च सत्यादाविव गुणप्रश्नपूर्वकमभेदानुक्तावपि हेत्वन्तरबलात्तयोर्विष्णुस्वरूपत्वमस्त्येवेति भावः ॥ ३९ ॥ अ.२३ ॥

## २४. कामाधिकरणम्

**(लक्ष्मीः नित्यमुक्ताऽपि भक्तिविशेषाद् उपासनां करोति)**

**प्रकृतेरपि जन्मादेः संसारप्राप्तेः किमिति नामादिष्वपाठ इत्यत्रोच्यते–**

अत्र नये भगवद्दर्शनसाधनोपासने श्रियोऽनधिकारसमर्थनम् । अन्यथाऽधिकारिणां प्राणावधित्वं न स्यादिति 'इयदामननात्'(३.३.२१) इति नयेन सङ्गतिः, श्रीर्विषयः, अधिकारिणी नवेति संशयः । द्विविधचेतनदर्शनं तद्बीजम् । अधिकारिणीति पूर्वपक्षः ॥ पूर्वपक्षमाहुः- **प्रकृतेरिति** ॥ श्रियइत्यर्थः । **जन्मादेरिति** ॥ सीतारुग्मिण्यादिरूपेणजन्मादिसम्भवात् । **संसारप्राप्तेः**- सुखदुःखादिप्राप्तेरित्यर्थः । अपाठ इति ॥ पाठाऽभावः कुतो हेतोरित्यर्थः । तथा च संसारनिवर्तकभगवद्दर्शनसाधनोपासने श्रियोऽप्यधिकारात्प्राणादुत्तमत्वाच्च प्राणादुपरि अध्याहारेण पाठे स्वीकर्तव्ये सति उक्तप्राणावधित्वं न सम्भवतीति भावः । **अत्रेति** ॥ एवं पूर्वपक्षे सति । उच्यते- सिद्धान्त उच्यत इत्यर्थः ।

**॥ ॐ कामादितरत्र तत्र चाऽयतनादिभ्यः ॐ ॥ ४० ॥**

चशब्देन, आक्षेपाद्वा, श्रीः स्थिताऽवतरतीति लभ्यते । कामादित्यावर्तते । अयमर्थः- **कामात्** स्वेच्छया **इतरत्र** भगवत्समीपे स्थिता श्रीः **कामात्** भगवदिच्छयैव न कर्मवशतः **इतरत्र** भूम्यादौ अवतरति **आयतनादिभ्यः** आयतनादिशब्दघटित 'सर्वायतन' इत्यादिश्रुतेरिति ॥ तथा च श्रियो जन्माद्यभावेन संसाराभावात् उक्तोपासनेऽनधिकारान्नामादिष्वपाठ इति भावः ।

**स्वेच्छयैव मूलस्थाने स्थिताऽन्यत्र चावतारान् करोतीश्वरेच्छानुसारेण । 'सर्वायतना सर्वकाला सर्वेच्छा सर्वज्ञा न बद्धा बन्धका सैषा प्रकृतिरविकृतिः' ॥ इति वत्सश्रुतेः ।**

**'नामादयस्तु बद्धत्वान्मोचकत्वात्परोऽपि च ।**
**उभयोरप्यभावेन यथाऽव्यक्तं न तूदितम् ॥**
**श्रुतौ तथा जीवपरावुच्येते किञ्च नेतरत् ।**
**नोच्यते च तदा तत्वद्वयं वै समुदाहृतम् ॥' इति ब्रह्मतर्के ॥ ४० ॥**

भा.॥ सूत्रार्थमाहुः- **स्वेच्छयेति** ॥ **मूलस्थाने इति** ॥ मूलस्य परमात्मनः स्थाने समीपदेशे वैकुण्ठादौ

स्थिता श्रीः । **अन्यत्र- भूम्यादौ ईश्वरानुसारेण** ईश्वरेच्छानुसारेणेत्यर्थः । श्रियः स्वेच्छयैवावतारादौ श्रुतिमाहुः- [1]**सर्वायतनेति ॥** नन्वेवमपि विष्णोरिव श्रियोऽपि नामादिषु पाठः कुतो नेत्यत आहुः- [2]**नामादयस्त्विति ॥ ब्रह्मतर्क इति ॥** ब्रह्मतर्क इत्युक्तेरित्यर्थः । प्रकृतेर्नामादिष्वपाठ इति वर्तते ॥ ४० ॥

**श्रियोऽसंसारित्वे कृतकृत्यत्वेनोपासनाऽभावः स्यादिति शङ्कावारणाय सूत्रम्-**

**॥ ॐ आदरादलोपः ॐ ॥ ४१ ॥**

**प्रकृतत्वात् श्रियः उपासनादेरिति लभ्यते । अयमर्थः- आदरात् भगवति निरुपाधिक भक्त्यतिशयात् श्रियः उपासनादेरलोपो युज्यत इति शेष इति ॥**

**अबद्धत्वेऽपि भक्तिविशेषादेवोपासनाद्यलोपस्तस्या भवति ।**

**'यथा श्रीर्नित्यमुक्ताऽपि प्राप्तकामाऽपि सर्वदा ।**
**उपास्ते नित्यशो विष्णुमेवं भक्तो हरेर्भवेत् ॥' इति हि बृहत्तन्त्रे ।**

**भा.॥** सूत्रार्थमाहुः- **अबद्धत्व इति ॥** अत्र स्मृतिं चाहुः- [3]**यथेति ॥ तन्त्र इति ॥** तत्रेत्युक्तेरित्यर्थः ॥ ४१ ॥

---

१. **सर्वायतनेति ॥ सर्वायतना** सर्वमायतनं यस्याः सा तथोक्ता सर्वदेशकालवर्तिनी, **सर्वेच्छा** सर्वमिच्छाधीनं यस्याः सा । **सर्वज्ञा** । सर्वावस्थेति पाठे तु सर्वस्यावस्था जाग्रदाद्यवस्था यस्याः सकाशाद्भवति सेति व्याख्येयम् । **न बद्धा** संसृतिरहिता **बन्धिका च** जीवानाम् **अविकृतिः** विकाररहिता **एषा** एवंभूता **प्रकृतिः** चित्प्रकृतिरित्यर्थः ।

२. **नामादयस्त्विति ॥** यथा नामादयः बद्धत्वात् छन्दोगश्रुतावुदिताः मोचकत्वाद्धेतोः परोऽप्युदितो भवति । **उभयोरपि** बन्धमोचकत्वयोः **अभावेनैव** अव्यक्तं श्रीतत्वं नोदितं, नतु स्वरूपाभावात् । **तथा श्रुतौ** 'द्वा सुपर्णा' इति श्रुतौ । बद्धत्वमोचकत्वहेतोरेव **जीवपरौ** जीवपरमात्मानौ **उच्येते इतरत्** ताभ्यामन्यज्जडं नोच्यते न त्वभावान्नोच्यते । तस्मात्तत्वद्वयमेवोदाहृतमित्यर्थः । यद्यपि परमात्मा श्रीतत्वं जीवः जडं चेति चत्वारि तत्वानि सन्ति । तथाऽपि छन्दोगश्रुतौ 'द्वा सुपर्णा' इति श्रुतौ च, जीवः परमात्मा चेति तत्त्वद्वयमेवोक्तं बद्धत्व-मोचकत्वहेतुना । इतरत् तत्वद्वयमप्रसक्तत्वान्नोक्तमिति भावः ॥ ४० ॥

३. **यथेति ॥** भक्तोऽन्योऽपीति शेषः । स्पष्टम् ॥ ४१ ॥

श्रियो नित्यमुक्तत्वं न युक्तं कारणाऽभावादितिशङ्कावारणाय सूत्रम्-

**॥ ॐ उपस्थितेस्तद्वचनात् ॐ ॥ ४२ ॥**

श्रियो युज्यत इति वर्तते । अयमर्थः- श्रियः तत् नित्यमुक्तत्वं युज्यते उपस्थितेः उप भगवत्समीपे सदा स्थितेः वचनात् 'द्वावेतौ' इति गौपवनश्रुतेश्चेति ॥

**अनादिकाले भगवत्तसम्बन्धित्वाद्युज्यते च नित्यमुक्तत्वं तस्याः ।**

**'द्वावेतावनादिनित्यावनादियुक्तौ नित्यमुक्तावनादिकृतौ नित्यकृतौ योऽयं परमो या च प्रकृती रमते ह्यस्यां परमो रमते ह्यस्मिन् प्रकृतिः स्वस्मिन् हि रमते परमो न स्वस्मिन् प्रकृतिरत एनमाहुः परम इति' इति गौपवनश्रुतिवचनात् ॥**

॥ इति कामाधिकरणम् ॥ २४ ॥

भा.॥ सूत्रार्थमाहुः- **अनादिकाला इति** ॥ हेतुबोधकश्रुतिमाहुः- **'द्वावेताविति** ॥ **वचनादिति** ॥ अस्यानादिकाले भगवत्संबन्धित्वादित्यत्रान्वयः **तन्त्रदीपिका**नुरोधात् ॥ ४२ ॥ अ.२४ ॥

॥ इति कामाधिकरणम् ॥

१. **द्वाविति** ॥ या प्रकृतिर्लक्ष्मीः यश्च परमः **एतौ द्वौ अनादिनित्यौ** देहतोऽप्याद्यन्तशून्यौ **अनादियुक्तौ** अनादिकालतः सम्बद्धौ **अनादिकृतौ नित्यकृतौ** पूर्णौ तस्मादिति शेषः । तस्मादेव परमाहुरित्यर्थः । शिष्टं स्पष्टम् ॥ ४२ ॥ अ.२४ ॥

# २५. निर्धारणाधिकरणम्

**(ब्रह्मसाक्षात्कारार्थं श्रवणमननध्यानरूपोपासना कर्तव्या)**

अत्र नये श्रवणमननध्यानरूपसमस्तोपासनस्य कर्तव्यत्वसमर्थनम् । एतदन्यतमस्यैव कर्तव्यत्वे (३.३) आद्यनये श्रवणमननयोः तदन्यनयेषु सपरिकरस्य ध्यानस्य च समर्थनं व्यर्थं स्यात् अन्यतम-समर्थनेनैव निर्वाहादिति पूर्वनयैः सङ्गतिः । उपासनं विषयः । समस्तं कर्तव्यमन्यतमं वेति संशयः । उपासनाविधेरुभयसाधारण्यं तद्बीजम् । अन्यतममिति पूर्वपक्षः- ॥ पूर्वपक्षमाहुः- **उपासनमिति** ॥ ध्यानमित्यर्थः । **तच्च**- दर्शनं च । **श्रवणेन**- श्रवणमननाभ्याम् । **किमर्थमिति** ॥ उपासनमिति वर्तते । इदमुपलक्षणम् । ध्यानादेव तद्भवति किमर्थं श्रवणादीति वेत्यस्यापि एवं च 'आत्मा वा' इति श्रुतिः दर्शनं प्रति श्रवणाद्यन्यतमस्य कारणत्वं वक्तीति भावः ।

**दर्शनार्थं ह्युपासनम् । तच्च श्रवणादेरेव भवति । अतः किमर्थमित्यत्रोच्यते–**

**॥ ॐ तन्निर्धारणार्थनियमस्तद्दृष्टेः पृथग्घ्यप्रतिबन्धः फलम् ॐ ॥ ४३ ॥**

तन्निर्धारणं च अर्थनियमश्चेति समाहारद्वन्द्वः । सौत्रं पुंस्त्वम् । इतरेतरद्वन्द्वे सौत्रमेकवचनं वा । तन्निर्धारणेन सहितोऽर्थनियम इति वा । यथायथमावृत्तिविपरिणामौ । तदिति भिन्नं पदं च । हिः प्रसिद्धौ । अयमर्थः- **तन्निर्धारणार्थनियमः** तन्निर्धारणं तत्वविषयनिश्चयः अर्थनिश्चयश्च वेदार्थ-विषयकोऽयमेव वेदार्थ इति दृढनिश्चयश्च **तद्दृष्टेः** ब्रह्माऽपरोक्षात् **पृथक्** भिन्नमेव तन्निर्धारणार्थनियमयोः **फलं** मुख्यफलं तु तद्दृष्टेः **अप्रतिबन्धः** ब्रह्मापरोक्षस्य प्रतिबन्धिकीभूताज्ञानसंशयविपर्ययाणामभावः निवृत्तिः **तत्** श्रवणादित्रयस्य कर्तव्यत्वं **हि** 'आत्मा वा' इति श्रुतिप्रसिद्धमिति ॥ अयं भावः - श्रवणेन तत्त्वनिश्चयो जायते तेनाज्ञाननिवृत्तिः, मननेन वेदार्थनिश्चयः, तेन संशयविपर्ययनिवृत्तिः, ध्यानेनापरोक्षज्ञानमिति भिन्नफलकत्वात् श्रवणादित्रयं कर्तव्यमिति ॥

**तत्वनिश्चयो वेदार्थनियमश्च ब्रह्मदृष्टेः पृथगेव । हिशब्देन 'आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः' (बृ.४.४.५) इति श्रुतिं सूचयति । श्रवणादिफलं चाज्ञानविपर्ययादिदर्शनप्रतिबन्धनिवृत्तिः ।**

**ब्रह्मतर्के—**

**'श्रुत्वा मत्वा तथा ध्यात्वा तदज्ञानविपर्ययौ ।**
**संशयं च पराणुद्य लभते ब्रह्मदर्शनम् ॥' इति ॥ ४३ ॥**

**इति निर्धारणाधिकरणम् ॥ २५ ॥**

**भा.** ॥ सूत्रं व्याचक्षते- **तत्त्वेति** ॥ ननु ध्यानमात्रेण दर्शनसिद्धौ श्रवणमनने व्यर्थे इत्यत आहुः- [1]**आत्मा वा इति** ॥ श्रुतौ श्रवणादिषूत्तरोत्तरं प्रति पूर्वपूर्वस्य प्रयोजकत्वोक्तेः श्रौतत्वाच्च त्रयं कर्तव्यमिति भावः । ननु श्रौतमपि श्रवणादित्रयं नाङ्गीकर्तव्यं फलाभावादत आहुः- **श्रवणादिफलं चेति** ॥ अत्र स्मृतिं चाहुः- [2]**श्रुत्वेति** ॥ **दर्शनमितीति** ॥ ब्रह्मतर्के इत्युक्तेरित्यर्थः । अत्रेदं बोध्यं- मननं शास्त्राभ्यासः । स च द्विविधः ध्यानाङ्गभूतः ध्यानवदङ्गिभूतश्चेति । तत्राऽद्यः मननशब्देन विवक्षितः द्वितीयस्य तु शास्त्राभ्यासस्यापरोक्षं प्रति साक्षात्कारणत्वादिति ॥ ४३ ॥ अ. २५ ॥

**॥ इति निर्धारणाधिकरणम् ॥ २५ ॥**

---

१. **आत्मा वा इति** ॥ व्या. (सं.१, पृ. ४०)

२. **श्रुत्वेति** ॥ पराणुद्य परिहृत्येत्यर्थः । श्रवणेनाज्ञानं मननेन मिथ्याज्ञानसंशयौ परिहृत्य ध्यानेन दर्शनं लभते इति विवेकः ॥ ४३ अ.२५ ॥

## २६. प्रदानाधिकरणम्

### (गुरुप्रसादपूर्वकश्रवणेनैव ज्ञानमिति निरूपणम्)

अत्र नये श्रवणादेः सेतिकर्तव्यतासमर्थनम्। इतिकर्तव्यताऽवान्तरव्यापारः। स च गुरुप्रदान(रूपः)। अन्यथा 'इतरे त्वर्थसामान्यात्' (३.३.७) इति नयोक्तगुरूपदिष्टप्रकारेण मध्यमगुणोपपत्तिरित्युक्तम् अयुक्तं स्यादिति तेन नयेन सङ्गतिः । श्रवणादिकं विषयः। सेतिकर्तव्यं ज्ञानसाधनं केवलं वेति संशयः। श्रवणादिविधेरुभयथाऽपि पर्यवसानं तद्बीजम्, केवलमिति पूर्वपक्षः ॥

## ॐ प्रदानवदेव हि तदुक्तम् ॐ ॥ ४४ ॥

तदित्यावर्तते । फलमिति वर्तते । अर्शआद्यजन्तं च । प्रदानवदिति मतुबन्तम् । दानमुपदेशः । अयमर्थः- **प्रदानवदेव** प्रसादपूर्वकगुरूपदेशयुक्तमेव **तत्** श्रवणादिकं फलं फलवत् **हि** यतः **तत्** ज्ञानादिरूपफलस्य गुरुप्रसादाधीनत्वम् **उक्तम्** 'आचार्यवान् पुरुषो वेद' इति श्रुतौ प्रतिपादितमत इति ॥

**न च श्रवणादिमात्रेण ब्रह्मदृष्टिर्भवति। किन्तु सेतिकर्तव्येन। यथा गुरुदत्तं तथैव भवति। 'आचार्यवान् पुरुषो वेद' (छा.६.१४.२) इति ह्युक्तम् ॥ ४४ ॥**

॥ इति प्रदानाधिकरणम् ॥ २६ ॥

भा.॥ सूत्रं व्याचक्षते- **न चेति** ॥ सूत्रस्यैवकारव्यावर्त्यमाहुः- **श्रवणादिमात्रेणेति** ॥ गुरुप्रसादस्यावश्यकत्वमुपपादयन्ति- **यथेति** ॥ येन प्रकारेण प्रीत्या अप्रीत्या वा गुरुणोपदिष्टं तथैव तदनुसार्येव फलमिति शेषः। अत्र मानमाहुः- [1]**आचार्यवानिति** ॥ **हीति** ॥ हि यतः 'पुरुषो वेद' इति श्रुतावित्युक्तमतस्तथैव भवतीत्यन्वयः ॥ ४४ ॥ अ. २६ ॥

॥ इति प्रदानाधिकरणम् ॥ २६ ॥

---

१. **आचार्यवानिति** ॥ (छा.६.१४.२) आचार्यवान् तदनुग्रहवान् पुरुषः विमुक्ताविद्यापटलः सन् ब्रह्म वेदेत्यर्थः ॥ ४४ ॥ अ.२६ ॥

## २७. गुरुप्रसादाधिकरणम् (लिङ्गभूयस्त्वाधिकरणम्)

(गुरुप्रसादः बलवान्)

**गुरुप्रसादः स्वप्रयत्नो वा बलवानिति निगद्यते–**

अत्र नये इतिकर्तव्यतारूपगुरुप्रसादस्य बलीयस्त्वसमर्थनम् । पूर्वनयवत्सङ्गतिः, गुरुप्रसादयुक्त-श्रवणादिर्विषयः । गुरुप्रसादो बलवान् वा, श्रवणादिरूपशिष्यप्रयत्नो वेति संशयः । साधनेषु द्वैविध्यदर्शनं तद्बीजम् । शिष्यप्रयत्न एवेति पूर्वपक्षः ॥ अधिकरणसंशयं दर्शयन्ति- **गुर्विति ॥ स्वप्रयत्नः** - श्रवणादि-रूपशिष्यप्रयत्नः । **इतीति** ॥ इति संशये इत्यर्थः । उभयं समं वेत्यपि ग्राह्यम् । अत इति शेषः । एतत्संशयपरिहारार्थमिति तदर्थः । निगद्यते- उच्यते ॥

## ॥ ॐ लिङ्गभूयस्त्वात्तद्धि बलीयस्तदपि ॐ ॥ ४५ ॥

हिः श्रुतिसूचकः । तदपीत्यस्याऽवृत्तिविपरिणामौ । अयमर्थः- तत् गुरुप्रसन्नत्वं तत्र ज्ञानोत्पादाने तस्मात् श्रवणादितो **बलीयः** अतिशयेन बलवत् **लिङ्गभूयस्त्वात्** लिङ्गानां प्रसादप्राबल्यज्ञापकानां बहुत्वदर्शनात् तदपि तथाऽपि तदपि श्रवणादिकमपि कार्यमिति शेषः । हि 'आत्मा वा' इति श्रुतेरिति ॥ लिङ्गानि तु भाष्ये स्पष्टानि ॥

**ऋषभादिभ्यो विद्यां ज्ञात्वाऽपि सत्यकामेन 'भगवांस्त्वेव मे कामे ब्रूयात्' (छां.४.१.२) 'श्रुतं ह्येव मे भगवद्दृशेभ्य आचार्याद्ध्येव विद्या विदिता साधिष्ठं प्रापयति' (छा.४.१.३) इति वचनात्, 'अत्र ह न किञ्चन वीयाय' (छा.४.१) इत्यनुज्ञानादुपकोसलवचनाच्च लिङ्गभूयस्त्वाद्गुरुप्रसाद एव बलवान् ।**

**तर्हि तावताऽलमिति न मन्तव्यम् । 'श्रोतव्यो मन्तव्यः' (बृ.४.४.५) इत्यादेस्तदपि कर्तव्यम् ।**

**वाराहे च– 'गुरुप्रसादो बलवान्न तस्माद्बलवत्तरम् ।**
**तथाऽपि श्रवणादिश्च कर्तव्यो मोक्षसिद्धये ॥' इति ।**

॥ इति गुरुप्रसादाधिकरणम् ॥ २७ ॥

**भा.** ॥ सूत्रतात्पर्यमाहुः- **ऋषभादिभ्य इति ॥** ऋषभाग्निहंसजलवायसरूपेभ्यो वाय्वग्निचतुर्मुखवरुणेभ्य इत्यर्थः । 'वायुर्ऋषभरूपः सन्नग्निर्हंसश्चतुर्मुखः । मद्गुरूपश्च वरुणः सत्यकामाय चोचिरे ॥' इति छान्दोग्यभाष्योक्तेः । ज्ञात्वाऽपि श्रुत्वाऽपीत्यर्थः । अत्राख्यायिका (छा.४.४) खण्डादौ प्रासङ्गा । लिङ्गबोधकश्रुतिमाहुः- [1]**भगवानिति ॥ वचनादिति ॥** सत्यकामेनोक्तत्वादित्यर्थः । इदमेकं लिङ्गम् । 'उभयप्राप्तौ कर्मणि' इति नियमेन षष्ठ्यभावे सत्यकामेनेति तृतीया । यद्वा अर्थस्येति शेषः । इत्यर्थस्येत्यर्थः । अनुमोदनश्रुतिमाहुः- [2]**अत्र हेत्यादि ॥ अनुज्ञानादिति ॥** गुरुणाऽनुमोदनादित्यर्थः । इदमेकं लिङ्गम् । **उपकोसलवचनाच्चेति ।** अग्निभ्यः श्रुतविद्येनापि उपकोसलेन विद्योपदेशार्थं गुरुं प्रति 'ब्रवीतु भगवान्' इति प्रार्थनारूपेणोक्तत्वाच्च । उपकोसलं प्रति गुरुणा 'य एषोऽक्षिणि' इत्यादिना अक्षिविद्याया उपदिष्टत्वाच्चेत्यर्थः । इदमपि लिङ्गम् । वचनादनुज्ञानाद्वचनादिति स्थलत्रयेऽपि पञ्चम्यर्थोऽभेदो लिङ्गेऽन्वेति । **गुरुप्रदानमेवेति ॥** प्रदानकारणप्रसाद एवेत्यर्थः । तदपि श्रवणादिकमपि । अत्र स्मृतिं चाहुः- [3]**गुरुप्रसाद इति । सिद्ध्य इति ॥** वाराहे इत्युक्तेरित्यर्थः ॥ ४५ ॥ अ.२७ ॥

॥ इति **लिङ्गभूयस्त्वाधिकरणम्** ॥ २७ ॥

---

१. **भगवानिति ॥** (छा.४.९.२) हे गौतम भगवानेव तु मे कामे शुभार्थं ब्रूयात् ब्रवीतु भगवद्दृशेभ्यः भगवत्समेभ्य एव मे मया श्रुतं तथाऽपि यतः आचार्याद्धिदिता लब्धा विद्या साधिष्ठं साधुतमत्वं स्थिरत्वं वा प्रापयति प्राप्नोति । भवतीति क्वचित्पाठः तदा साधुतमः भवतीत्यर्थो वेद्यः अत इति पूर्वेण सम्बन्धः ।

२. **अत्र ह इति ॥** (छा.४.९.)अत्र ऋषभादिदेवेभ्यः श्रवणे तन्निमित्तं (न)किञ्चन वीयाय नापगतं न मे काचिद्धानिरपराधोऽभूदित्यर्थः । **श्रोतव्य इति ॥** (व्या.- सं.१, पृ. ४०)

३. **गुरुप्रसाद इति ॥** स्पष्टम् ॥ ४५ ॥ अ.२७ ॥

## २८. पूर्वविकल्पाधिकरणम्

**(पूर्वगुरुसमानश्चेत् गुर्वनुज्ञयाऽन्यगुरुः स्वीकार्यः, अधिकश्चेत् पूर्वानुज्ञां विनैवान्यगुरुः स्वीकार्यः)**

अत्र नये उत्तरगुरुस्वीकारसमर्थनम् । अन्यथा पूर्वगुरुणा स्वोचितसार्वज्ञालाभेन स्वोचित-गुणाऽनिर्णयेन 'इतरे तु' (३.३.१४) इति सूत्रोक्तमयुक्तं स्यादिति तेन नयेन (७) सङ्गतिः । प्रसादकर्तृत्वेन प्रसक्तो गुरुर्विषयः । पूर्वप्राप्त एवेति नियमः उत तन्नियमो नेति संशयः । उभयथाऽपि दर्शनं तद्बीजम् । पूर्वप्राप्त एवेति पूर्वपक्षः ॥ २- सू.अ. ॥

### ॥ ॐ पूर्वविकल्पः प्रकरणात्स्यात्क्रियामानसवत् ॐ ॥ ४६ ॥

तदित्यस्य अनुवृत्तस्याऽवृत्तिविपरिणामौ । मानसं क्रियेति कर्मधारयः । 'कडाराः कर्मधारये' इति विशेषणस्य परनिपातः । अयमर्थः- **तस्य** प्रसादस्य **प्रकरणात्** प्रकर्षेण करणमपेक्ष्य **पूर्वविकल्पः** पूर्वगुरुविषये **विकल्पः** व्यवस्थितविकल्पश्च कचित् **क्रियामानसवत्** मानसक्रियारूपध्यानविषये इवेति ॥ मानसेति सामान्ये नपुंसकम् । अयं भावः- यथा समानफलकध्यानविषये पूर्वध्यानं विहाय स्वेच्छयाध्यानान्तरस्वीकारः तथा गुरुविषये पूर्वापेक्षया समो गुरुः स्वयमेव प्राप्तश्चेत् समग्रानुग्रहमपेक्ष्य पूर्वानुज्ञया वा, स्वेच्छया वा, स्वीकार्यः । न तु स्वीकार्य एवेति नियमः । उत्तमश्चेत्प्राप्तः स्वीकार्य एवानुज्ञां विनाऽपि । अधमो न स्वीकार्य इति । सूत्रे प्रकरणशब्देनाऽयमर्थो लब्ध इति ज्ञेयम् ॥

**न च पूर्वप्राप्त एव गुरुरिति नियमः । समग्रानुग्रहं चेत्पश्चात्तनः करोति स्वयमेव तदा विकल्पः स्यात् । मानसक्रियावत्, यथोभयोर्ध्यानयोः समयोः ।**

**'पूर्वस्मादुत्तमो लब्धः स्वयमेव गुरुर्यदि ।**
**गृह्णीयादविचारेण विकल्पः समयोर्भवेत् ॥**
**समग्रानुग्रहाभावात् सत्यकामः स्वकं गुरुम् ।**
**ऋषभाद्यनुज्ञया चैव प्राप तस्माद्धि युज्यते ॥' इति हि बृहत्तन्त्रे ।**

**'समग्रानुग्रहं कश्चित्स्वयमेव समो यदि**
**कुर्यात्पुनश्च गृह्णीयादविरोधेन कामतः ।**

**ध्यानयोः समयोर्यद्वद्विकल्पः कामतो भवेत्**
**एवं गुरोर्द्वितीयस्य विकल्पो ग्रहणेऽपि च ॥' इति महासंहितायाम् ।**

भा.॥ सूत्रं व्याचक्षते - **न चेति ॥ पूर्वप्राप्त इति ॥** पूर्वस्वीकृत इत्यर्थः । पश्चात्तनः- पश्चात्प्राप्त इत्यर्थः । समो गुरुरिति शेषः । **स्वयमेव**- पूर्वानुज्ञां विना, शिष्यप्रयत्नं विनाऽपि । स्वयमेव पश्चात्तन इति सम्बन्धः । **समयोरिति ॥** तयोर्विषये विकल्पः स्यादित्यर्थः । अत्र स्मृतिमाहुः- [1]**पूर्वस्मादिति ॥ तन्त्र इति ॥** तन्त्र इत्युक्तेरित्यर्थः । स्मृत्यन्तरमाहुः- [2]**समग्रेति ॥ संहितायामिति ॥** तत्रेत्युक्तेरित्यर्थः ॥ ४६ ॥

**हेत्वन्तरेणोक्तार्थसाधनाय सूत्रम्–**

**॥ ॐ अतिदेशाच्च ॐ ॥ ४७ ॥**

**सूत्रबलेन समोत्तमगुरुस्वीकाराय उपचारादेरिति लभ्यते । पूर्वविकल्प इति वर्तते । पूर्वेति लुप्तविभक्त्यन्तं पृथक् पदम् । आवर्तते च तत् । दृष्टान्तमुखेन प्रतिपादनमतिदेशः प्रकृते । अयमर्थः- पूर्वस्मिन् पूर्वगुरुविषये विकल्पः विविधकल्पः पूर्वेण पूर्वगुरुणा समोत्तमगुरुस्वीकाराय उपचारादेः अतिदेशाच्च 'ब्रह्मोपास्व' इति श्रुतावतिदेशाच्चेति ॥**

**ब्रह्मोपास्व ब्रह्मोपचरस्व तच्छृणु हि तत्त्वामवतु । यथा ब्रह्मोपचरेर्यथा मामुपचरेर्ये**

---

१. **पूर्वस्मादिति ॥** पूर्वस्मात् पूर्वं गृहीतात् स्वयमेव पूर्वानुज्ञां विनैव, अविचारेण असंशयं, समयोः ज्ञानादिना, विकल्पः त्यागस्वीकारयोर्विकल्पः, सत्यकामस्य देवभूतऋषभादिभ्यः स्वगुरुतमेभ्यः श्रुतविद्यस्य ऋषभादिकं विहाय पूर्वगुरुस्वीकारः कथमित्यत आह- **समग्रेति ॥** हि यतः समग्रानुग्रहाभावात् ऋषभादित इति शेषः अनुज्ञया च सत्यकामः स्वकं गुरुं प्राप अतः पूर्वगुरुपरित्यागेन समग्रानुग्रहकर्ता उत्तमः समो वा स्वीकार्य इत्येतद्युज्यते इत्यर्थः । अन्यत्स्पष्टम् ।

२. **समग्रेति ॥** यदि पूर्वस्य समः कश्चित् मध्ये प्राप्तो गुरुः स्वयमेव शिष्यप्रयत्नं विनैव प्रसन्नः समग्रानुग्रहं कुर्यात्तदा अविरोधेन पूर्वानुज्ञया कामतो यथेच्छं गृह्णीयात् । तमिति शेषः । पूर्वानुज्ञाभावे अनुज्ञासत्त्वेऽपि स्वेच्छाभावे च न गृह्णीयादिति भावः । **ध्यानयोरिति ॥** ईश्वरविषयकसमानफलकध्यानयोरित्यर्थः । ग्रहणेऽपी-त्यपिना त्यागो ग्राह्यः स्पष्टमन्यत् ॥ ४६ ॥

**चान्येऽस्मद्विधाः श्रेयसश्च तानुपास्व तानुपचरस्व तेभ्यः शृणु हि ते त्वामवन्तु' इति पौष्यायणश्रुतावतिदेशाच्च ॥**

**॥ इति पूर्वविकल्पाधिकरणम् ॥ २८ ॥**

**भा.॥** अतिदेशश्रुतिमाहुः- **'ब्रह्मेति ॥ चेति ॥** अस्य भाष्यस्य सौत्रहेतुमात्रविवरणरूपत्वेन नान्यत्राऽन्वयापेक्षा ॥ ४७ ॥ अ. २८ ॥

**॥ इति पूर्वविकल्पाधिकरणम् ॥ २८ ॥**

१. **ब्रह्मेति ॥** शिष्यं प्रति गुरोर्वचनम् उपदेशरूपमिदम् । उपचरस्व पूजय यथा ब्रह्मोपासीथाः तथा मामुपास्व । यथा ब्रह्मोपचरेः तथा मामुपचरस्वेति वाक्यशेषः । अस्मद्विधाः अस्मत्सदृशाः श्रेयसः श्रेयांसः उत्तमा इत्यर्थः । शिष्टं स्पष्टम् ॥ ४७ ॥ अ. २८ ॥

# २९. विद्याधिकरणम्

**(अपरोक्षज्ञानमेव मोक्षकारणम्)**

अत्र नये कर्मणो मोक्षकारणत्वनिषेधमुखेन ज्ञानाङ्गोपासनस्य कर्तव्यतासमर्थनम् । अन्यथा उक्तप्रसादादिकं व्यर्थं स्यादिति पूर्वनयेन सङ्गतिः, उपासनं विषयः, कर्तव्यं न वेति संशयः, द्विविधव्यापारदर्शनं तद्बीजम् । नेति पूर्वपक्षः ॥ सूत्रस्थैवकारव्यावर्त्यपूर्वपक्षं स्मृत्युपन्यासेनाऽहुः- [1]**न च कर्मणैवेति** ॥ अन्यत् - **कर्मादि** ॥

**न च 'कर्मणैव हि संसिद्धिमास्थिता जनकादयः' (भ.गी. ३.२०) इत्यादिनाऽन्यन्मोक्षसाधनम्—**

## ॐ विद्यैव तु निर्धारणात् ॐ ॥ ४८ ॥

प्रकृतत्वान्मोक्षसाधनमिति लभ्यते । तुशब्दः प्राबल्यबोधकः । श्रुताविति शेषः । अयमर्थः- **विद्यैव** ब्रह्मज्ञानमेव मोक्षसाधनं न कर्मादिः, श्रुतौ **तु** सावधारणत्वेन स्मृत्यपेक्षया प्रबलायां 'तमेवं विदित्वाऽतिमृत्युमेति, नान्यः पन्था विद्यते अयनाय' इति श्रुतौ **निर्धारणात्** ब्रह्मज्ञानस्यैव मोक्षसाधनत्वनिर्णयादिति ॥

**'तमेव विदित्वाऽतिमृत्युमेति नान्यः पन्था विद्यते अयनाय' (श्वे.३.८) इति निर्धारणाद्विद्ययैव मोक्षः ॥**

**भा.** ॥ निर्धारकश्रुतिमाहुः- [2]**तमेवमिति** ॥ **मोक्ष इति** ॥ यतो विद्ययैव मोक्षः अतोऽन्यन्मोक्षसाधनं न चेत्यन्वयः ॥ ४८ ॥

**विद्याशब्दितपरोक्षज्ञानेन मोक्षश्चेन्न ध्यानं कर्तव्यं परोक्षज्ञानस्य श्रवणादेव सम्भवादिति शङ्कावारणाय सूत्रम्-**

---

१. **कर्मणैवेति** ॥ (गी.३.२०) संसिद्धिं मोक्षमित्यर्थः । शिष्टं सुगमम् । पूर्वपक्षे कर्मणैवेत्येवकारोऽन्ययोगव्यवच्छेदक इति भावः । सिद्धान्ते तु अयोगव्यवच्छेदक इति वक्ष्यन्ति । तत्र कर्म कुर्वन्त एव ज्ञानेन मोक्षमास्थिता इति तात्पर्यार्थः । आदिना'त्यागेनैके अमृतत्वमानशुः' इति श्रुतिर्गृह्यते ।

२. **तमेवमिति** ॥ (श्वे.३.८.) तं परमात्मानम् एवं पूर्वोक्तप्रकारेण अन्यः ज्ञानातिरिक्तः अयनाय मोक्षायेत्यर्थः । स्पष्टमन्यत् ॥ ४८ ॥

## ॥ ॐ दर्शनाच्च ॐ ॥ ४९ ॥

**मोक्षसाधनमिति वर्तते। दर्शनादित्यावर्तते, विपरिणम्यते च। अयमर्थः- दर्शनं च अपरोक्षज्ञानमपि मोक्षसाधनं, दर्शनात् 'सर्वान्परो मायया' इति श्रुतेरिति । एवं च पूर्वसूत्रोक्तं परोक्षज्ञानस्य मोक्षसाधनत्वमपरोक्षज्ञानद्वारेति बोध्यम् । ननु पूर्वसूत्रोदाहृतश्रुत्युक्तज्ञानं परोक्षं चेत् जिज्ञासा-नयादावपरोक्षज्ञानस्य मोक्षसाधनत्वविषये एतच्छ्रुत्युदाहरणं कथं सङ्गच्छत इति चेन्न । एतत्सूत्र-बलेनापरोक्षज्ञानस्य मोक्षकारणत्वे सिद्धे तच्छ्रुत्युक्तं वेदनमपि अपरोक्षमित्यङ्गीकारे बाधकाभावात् ।**

**न केवलं विद्यया किन्त्वपरोक्षज्ञानेन च ।**

**'सर्वान् परो माययाऽयं सिनीते दृष्ट्वैव तं मुच्यते नापरेण' ॥ इति कौशिकश्रुतेः ।**

**॥ इति विद्याधिकरणम् ॥ २९ ॥**

भा. ॥ सूत्रं व्याचक्षते- **न केवलं विद्ययेति** ॥ परोक्षज्ञानेनेत्यर्थः । मोक्ष इति वर्तते । उक्तार्थे श्रुतिमाहुः- **'सर्वानिति** ॥ ४९ ॥ अ.२९ ॥

**॥ इति विद्याधिकरणम् ॥ २९ ॥**

---

१. **सर्वान् पर इति ॥** अयं परः सर्वान् जीवान् मायया स्वेच्छया प्रकृत्या च यतः सिनीते बध्नाति अतः तं परमात्मानं यथायोग्यं दृष्ट्वैव मुच्यते बन्धात् अपरेण परोक्षज्ञानादिना न मुच्यते इत्यर्थः ॥ ४९ ॥ अ. २९ ॥

## ३०. अबाधाधिकरणम् (श्रुत्यधिकरणम्)

**('ज्ञानात् मोक्षः' इति वचनं 'कर्मणा मोक्षः' इति वचनेन न बाधितम्)**

अत्र नये उक्तश्रुतिवत् 'कर्मणैव' इति स्मृतेरपि सावधारणत्वेन कथमुक्तश्रुतेः प्राबल्यमिति शङ्कावारणायोपासनाजन्यज्ञानस्य मोक्षसाधनत्वसमर्थनम् । अन्यथोपासनं न स्यादिति पूर्वनयैः सङ्गतिः । मोक्षो विषयः । ज्ञानसाध्यः कर्मसाध्यो वेति संशयः । विप्रतिपत्तिस्तद्बीजम् । कर्मसाध्य इति पूर्वपक्षः ॥

**॥ ॐ श्रुत्यादिबलीयस्त्वाच्च न बाधः ॐ ॥ ५० ॥**

च एवमपीत्यर्थे । अयमर्थः- च एवमपि ज्ञानस्यैव मोक्षसाधकत्वेऽपि **बाधः** 'कर्मणैव' इति स्मृतिविरोधः **नास्ति श्रुत्यादिबलीयस्त्वात्** श्रुतेः 'तमेवम्' इति श्रुतेः आदिना 'कर्मणा बध्यते जन्तुः' इति स्मृतेः, 'इन्द्रोऽश्वमेधान्' इत्युक्तयुक्तेरुपपत्तेश्च बलवत्त्वादिति । तत्प्रकारश्च भाष्ये स्पष्टः ।

**सावधारणा बलवती श्रुतिः । 'इन्द्रोऽश्वमेधाञ्छतमिष्ट्वाऽपि राजा ब्रह्माणमीड्यं समुवाचोपपन्नः । न कर्मभिर्न धनैर्नैव चान्यैः पश्येत्सुखं तेन तत्त्वं ब्रवीहि' इति बलवल्लिङ्गम् । नास्त्यकृतः कृतेन' (मुं.१.२.१२) इत्युपपत्तिश्च ।**

**'कर्मणा बध्यते जन्तुर्विद्यया च विमुच्यते ।**
**तस्मात्कर्म न कुर्वन्ति यतयः पारदर्शिनः ॥' इति युक्तिमद्भगवद्वचनम् ॥**

**अतो न प्रमाणान्तरबाधः । 'कर्मणैव' (गी.३.२०) इत्ययोगव्यवच्छेदः ॥**

॥ इत्यबाधाधिकरणम् (श्रुत्यधिकरणम्) ॥ ३० ॥

**भा.॥** सूत्रं व्याचक्षते- **सावधारणेति ॥** 'तमेवं विदित्वा, दृष्ट्वैव तं, तमेवं विद्वान्' इत्यादिश्रुतिः सावधारणत्वान्निरवकाशत्वाच्च बलवतीत्यर्थः । (आदिपदग्राह्यश्रुतिमाहुः-) [1]**इन्द्र इति ॥** बहुकर्मकृतोऽपीन्द्रस्य मोक्षार्थं तत्त्वज्ञानप्रार्थनारूपं लिङ्गं बलवत् निरवकाशत्वात् । श्रुत्या उपपत्तिं

---

१. **इन्द्र इति ॥** द्रोणं प्रति भीष्मवचनमेतत् । इन्द्रो राजा कर्मभिः अश्वमेधादिभिः अन्यैः तप आदिभिः पश्येत् पश्यतीत्यर्थः । शिष्टं स्पष्टम् ।

दर्शयन्ति- [1]**नास्त्यकृत इति ॥ उपपत्तिश्चेति ॥** नश्वरफलकत्वेन अवधृतेन कर्मणा नित्यपुमर्थो न भवतीति । उपपत्तिश्च बलवती दूषणरहितत्वात् श्रौतत्वाच्च । स्मृतिमाहुः- [2]**कर्मणेति ॥** भगवद्वचनमिति ॥ बलवदिति वर्तते । भगवत्सम्बन्धित्वेन युक्तिमत्त्वेन च बलवत् । **अत इति ॥** बलवच्छ्रुत्यादीनां सत्त्वादित्यर्थः । **प्रमाणान्तरेति ॥** कर्मणैवेति स्मृतीत्यर्थः । नन्वेवं कर्मणैवेत्येव- कारस्य का गतिरित्यत आहुः- [3]**कर्मणैवेति ॥** इत्यनेन अयोगव्यवच्छेदः क्रियत इत्यर्थः ॥ ५०॥ अ. ३० ॥

**॥ इति इत्यबाधाधिकरणम् ॥ ३० ॥**

---

१. **नास्त्यकृत इति ॥** (व्या.- सं.१. पृ. ३४)

२. **कर्मणेति ॥** काम्यकर्मणा यतयो निगृहीतेन्द्रियाः पारदर्शिनः संसृतेः पारभूतभगवद्दर्शिन इत्यर्थः । शिष्टम् स्पष्टम् ॥

३. **कर्मणैवेति ॥** व्या. (पृ. १४९) ॥ ५० ॥ अ.३० ॥

## ३१. अनुबन्धाधिकरणम्

**(ब्रह्मदर्शनं श्रवणादिमात्रेण न, किन्तु हरिगुरुभक्त्यादिभिश्च)**

अत्र नये उपासनस्य भक्तिसापेक्षत्वसमर्थनम् । अन्यथा (३.२) भक्तिपादो व्यर्थः स्यादिति तत्रत्यनयैः सङ्गतिः । उपासनं विषयः । भक्तिसापेक्षं न वेति संशयः । ज्ञानसाधनेष्वनुक्तेः उभयथा सम्भवस्तद्बीजम् । नेति पूर्वपक्षः ॥

### ॥ ॐ अनुबन्धादिभ्यः ॐ ॥ ५१ ॥

च, दर्शनमिति, वर्तते । अनुबन्धो भक्तिः । आदिना शमादिपरिग्रहः । अयमर्थः- **अनुबन्धादिभ्यश्च** हरिगुरुभक्तिशमादिहेतुतोऽपि दर्शनं ब्रह्मज्ञानं भवतीति ॥ एवं च अनभिव्यक्तभक्त्यादिजन्य-श्रवणाद्यभिव्यक्तभक्त्यादिजनितब्रह्मज्ञानमेव मोक्षसाधनं न तु द्वेषादियुक्तश्रवणादिजन्यब्रह्मज्ञानमिति ज्ञेयम् ।

**न केवलं श्रवणादिभिर्गुरुप्रसादेन च ब्रह्मदर्शनम् । किन्तु भक्त्यादिभिश्च ।**

**'सर्वलक्षणसम्पन्नस्सर्वज्ञो विष्णुतत्परः ।**
**यद्गुरुस्सुप्रसन्नस्सन् दद्यात्तन्नान्यथा भवेत् ॥**
**तथाऽप्यनादिसंसिद्धो भक्त्यादिगुणपूगतः ।**
**लभेद्गुरुप्रसादं च तस्मादेव च तद्भवेत् ॥' इति ।**

**'भक्तिर्विष्णौ गुरौ चैव गुरोर्नित्यप्रसन्नताम् ।**
**दद्याच्छमदमादींश्च तेन चैते गुणाः पुनः ।**
**तैस्सर्वैर्दर्शनं विष्णोः श्रवणादिकृतं भवेत् ॥' इति च नारायणतन्त्रे ।**

॥ इत्यनुबन्धाधिकरणम् ॥ ३१ ॥

**भा.॥** सूत्रं व्याचक्षते- **न केवलं श्रवणादिभिरिति** ॥ अनभिव्यक्तभक्त्यादिजन्यश्रवणादिभिरि-त्यर्थः । **गुरुप्रसादेनेति** ॥ **श्रवणादीति** ॥ आधिक्यद्योतनाय प्रसादस्य पृथगुक्तिः । किन्तु

**भक्त्यादिभिरिति ॥** श्रवणाद्यभिव्यक्तभक्त्यादिभिरित्यर्थः । उक्तार्थे स्मृतीराहुः- **[१]सर्वलक्षणे-त्यादि ॥ नारायणतन्त्र इति ॥** तत्रेत्युक्तेरित्यर्थः ॥ ५१ ॥ अ. ३१ ॥

**॥ इत्यनुबन्धाधिकरणम् ॥ ३१ ॥**

---

१. **सर्वलक्षणेति ॥** स्वयोग्यषण्णवत्यङ्गुल्यादिलक्षणसम्पन्नः **सर्वज्ञः** स्वोचित सर्वविषयकज्ञानवान् **विष्णुतत्परः** विष्णुभक्तिमान् गुरुः प्रसन्नः सन् शिष्याय यत् **दद्यात्** उपदिशेत् तत् **अन्यथा** फलविसंवादि न भवेत् । तथाऽपि भक्त्यादि अपेक्षितमिति शेषः। **अनादिसंसिद्धभक्त्यादिगुणपूगतः** भक्त्यादिगुणसमूहात् गुरुप्रसादं लभेत जीवः । तस्मादभिव्यक्तभक्त्यादिसकाशादेव तदपरोक्षज्ञानं भवेदित्यर्थः । भक्त्यादितः गुरुप्रसादः तस्माच्चाऽभिव्यक्त-भक्त्यादिः तस्माच्चाऽपरोक्षज्ञानमिति परंपरेति भावः । **भक्तिरिति ॥** हरौ गुरौ च या भक्तिः स्वरूपानादि-सिद्धा भक्तिः शमदमादिश्च गुरोर्नित्यप्रसन्नतां दद्यात् । तेन च गुरुप्रसादेन च एते गुणाः भक्त्यादिगुणाः पुनर्व्यक्ता भवन्ति । तैर्व्यक्तैः सर्वैर्भक्त्यादिभिर्विष्णोर्दर्शनं भवेत् । श्रवणादिकृतमपि भवतीत्यर्थः ॥ ५१ ॥ अ.३१ ॥

## ३२. दर्शनभेदाधिकरणम् (प्रज्ञान्तराधिकरणम्)

**(यथायथा उपासनाभेदः तथातथा दर्शनभेदः)**

अत्र नये उपासनाजन्यब्रह्मदर्शने तारतम्यसमर्थनम् । अन्यथा 'यावदधिकारम्' इति (३.३.२०) नयोक्तमोक्षतारतम्यं न स्यादिति तेन नयेन, उपासनातारतम्यं चाऽयुक्तमिति तद्विधायकनयैश्च सङ्गतिः । अपरोक्षज्ञानं विषयः । सर्वेषामेकप्रकारमनेकप्रकारं वेति संशयः । धर्मद्वैविध्यदर्शनं तद्बीजम् । एकप्रकारमेवेति पूर्वपक्षः ॥

### ॥ ॐ प्रज्ञान्तरपृथक्त्ववद्दृष्टिश्च तदुक्तम् ॐ ॥ ५२ ॥

दृष्टान्तबलेन पृथगिति लभ्यते। चो हेतौ (समुच्चये च) अयमर्थः- **प्रज्ञान्तरपृथक्त्ववत्** प्रज्ञान्तराणां प्रज्ञाविशेषाणाम् अविच्छिन्नपरोक्षसन्ततिरूपध्यानानां नानात्ववत् **दृष्टिश्च** ब्रह्मदर्शनमपि **पृथक्** नानाविधाधिकारिभेदेन तारतम्योपेता च यतः **तत्** अधिकारिभेदेन ब्रह्मदर्शननानात्वम् **उक्तम्** । 'अन्तर्दृष्टयः' इति श्रुतौ, 'दृष्ट्यैव ह्यवताराणाम्' इति स्मृतौ च, प्रतिपादितमत इति ।

**उपासनाभेदवत्तद्दर्शनभेदः । तच्चोक्तं कमठश्रुतौ–**

**'अन्तर्दृष्टयो बहिर्दृष्टयोऽवतारदृष्टयः सर्वदृष्टय इति । देवा वाव सर्वदृष्टयस्तेषु चोत्तरोत्तरमाब्रह्मणोऽन्येषु तु यथायोगं यथा ह्याचार्या आचक्षते' इति ॥**

**अध्यात्मे च–**

**'दृष्ट्यैव ह्यवताराणां मुच्यन्ते केचिदञ्जसा ।**
**दर्शनेनाऽन्तरेणान्ये देवास्सर्वत्र दर्शनात् ।**
**तेषां विशेषमाचार्यो वेत्ति सर्वज्ञतां गतः' ॥ इति ।**

॥ इति दर्शनभेदाधिकरणम् ॥ ३२ ॥

**भा.**॥ सूत्रतात्पर्यमाहुः- **उपासनेति** ॥ ननु साधनभूतोपासनातारतम्येऽपि साध्यं ब्रह्मज्ञानं सर्वेषामेकरूपं किं न स्यात् ? कृष्यादौ क्वचित्तथा दर्शनादत आहुः- **तच्चेति** ॥ श्रुत्युक्तत्वात्

दृष्टान्तमात्रेण तथा वक्तुमशक्यमिति भावः । तामेव श्रुतिमाहुः- [१]**अन्तर्दृष्टय इति ॥** ननु यद्यस्तिदर्शनभेदस्तर्हि न सर्वेषां मोक्षः स्यात् सम्पूर्णज्ञानेनैव मोक्षस्य श्रुत्यादिसिद्धत्वादत आहुः- **अध्यात्मे च - [२]दृष्ट्येति ॥** तत्रोक्तमिति वर्तते । तथा च यथायोग्यं पूर्णज्ञानस्यैव मोक्षसाधकत्वमिति ज्ञेयम् ॥ ५२ ॥ अ. ३२ ॥

**॥ इति दर्शनभेदाधिकरणम् (प्रज्ञान्तराधिकरणम्) ॥ ३२ ॥**

१. **अन्तर्दृष्टय इति ॥** प्राचुर्याभिप्रायेणेदम् । बहिर्दृष्टीनामपि अन्तर्दृष्टिः कचित्काले आवश्यकी । अत एव येषां बहिरुपासनं तेषामपि हृद्युपासनं कार्यमेवेति बृहद्भाष्ये उक्तमिति केचित् । अन्ये तु बहिर्दृष्टीनामन्तरुपासनमपि अवतारादिविषयकमेवेति बृहद्भाष्याशयमाहुः, तन्मते बहिर्दृष्टीनां बिम्बोपासनं नास्त्येवेति बोध्यम् । श्रुत्यर्थस्तु केचित् शरीरान्तर्ब्रह्मोपासकाः तत्रैव ब्रह्मदर्शिनः । केचिदवतारोपासकाः दिव्यदृष्ट्या रामकृष्णाद्यवतारदर्शिनः । केचित्सर्वोपासकाः सर्वदृष्टयः व्याप्तदर्शिनः । आब्रह्मणः चतुर्मुखपर्यन्तम् उत्तरोत्तरमधिकव्याप्तदर्शित्वम् । अन्येष्वपि अवतारदर्शिषु यथायोगं योग्यतानुसारेण व्यक्तिविशेषो निर्णेतव्य इति शेषः । अन्येष्वपि यथा योगमुत्तरोत्तरमाधिक्यमवगन्तव्यमिति वा । ननु योग्यतैव कथं ज्ञायते इत्यत आहुः-**आचार्या इति ॥** आचार्याः नियतगुरवो यथा येन प्रकारेण त्वमेतद्दर्शनयोग्यः त्वमेतद्दर्शनयोग्य इत्याचक्षते- उपदिशन्ति तथा तेन प्रकारेण योग्यताऽवगन्तव्येति शेष इत्यर्थः । शिष्टं स्पष्टम् ।

२. **दृष्ट्यैवेति ॥** केचिन्मनुष्योत्तमाः अवताराणां रामकृष्णाद्यवताराणाम् अञ्जसा दृष्ट्यैव दिव्यदृष्ट्या दर्शनेनैव मुच्यन्ते एवकारः अयोगव्यवच्छेदकः पूर्वोक्तकेचित्पक्षे । अन्यपक्षे तु- केचिदेवेत्येवकारसम्बन्धः । केचित् ऋष्यादयः आन्तरेण हृदयान्तर्जातेन दर्शनेन मुच्यन्ते । देवाः सर्वत्र स्थितस्य ब्रह्मणो दर्शनेन मुच्यन्ते । तेषामधिकारिणां देवानां वा विशेषं योग्यताविशेषं तारतम्यं वा सर्वज्ञतां गत आचार्यो वेत्ति जानातीत्यर्थः ॥ ५२ ॥ अ.३२ ॥

## ३३. न सामान्याधिकरणम्

### (स्वयोग्यरूपदर्शनादेव मुक्तिः)

अत्र नये उपासनासाध्यबिम्बापरोक्षस्य मुक्तिसाधनत्वसमर्थनम् । अन्यथा पूर्वनयोदाहृताऽन्तर्दृष्टय इति वचनोक्तव्यवस्थाऽयुक्तः स्यादिति पूर्वनयेन (३२) सङ्गतिः । अपरोक्षज्ञानं विषयः । बिम्बविषयकं मोक्षसाधनं यत्किञ्चिद्विषयकं वेति संशयः । ब्रह्मज्ञानं मुक्तिसाधनमिति सामान्योक्तिः तद्बीजम् । यत्किञ्चिद्विषयकमेव मोक्षसाधनमिति पूर्वपक्षः ॥

**॥ ॐ न सामान्यादप्युपलब्धेर्मृत्युवन्न हि लोकापत्तिः ॐ ॥ ५३ ॥**

दर्शनादिति वर्तते । दृष्टिरिति प्रकृते उपलब्धेरित्युक्त्या उप समीपे विद्यमानविषयकज्ञानादित्यर्थेन बिम्बापरोक्षादिति लभ्यते । यथायथमावृत्तिविपरिणामौ । मृत्युवदित्यत्र 'पूर्ववत्सनः' इत्यत्रेव पञ्चम्यन्ताद्वतिः । अर्थान्मुक्तिरिति लभ्यते । अयमर्थः- सामान्ये **अपि** भगवद्रूपाणां समत्वेऽपि **सामान्यात्** सर्वसाधारणात् दर्शनात् रामकृष्णादिविषयकसाक्षात्कारात् **न** मुक्तिः **मृत्युवत्** साधारणमरणानन्तरं मुक्त्यभाववत् किन्तु **उपलब्धेर्हि** बिम्बापरोक्षरूपविशेषादेव मुक्तिः **मृत्युवत्** ब्रह्मनाड्युत्क्रमणपूर्वकमरणविशेषादनन्तरमेव मुक्तिवत् **हि** यतः सामान्याद्दर्शनात् साध्येति शेषः । **लोकापत्तिः** महर्लोकादिप्राप्तिमात्रं **न** मुक्तिः । अत इति । महर्लोकादिप्राप्तिमात्रस्य मुक्तित्वे सामान्यदर्शनान्मुक्तिः स्यात्सामान्यदर्शनस्य महरादिलोकप्राप्तिरेव फलमिति भावः ।

**न सामान्यदर्शनमात्रेण मुक्तिः । यथा मृत्युमात्रात् । न हि लोकापत्तिमात्रं मुक्तिः । सामान्यदर्शनाल्लोका मुक्तिर्योग्यात्मदर्शनात्' इति हि नारायणतन्त्रे ॥**

**'मुच्यते नात्र सन्देहो दृष्ट्या तु स्वात्मयोग्यया ॥' इति ।**

**'दर्शनेनाऽत्मयोग्येन मुक्तिर्नान्येन केनचित् ॥' इति चाध्यात्मे ।**

॥ इति न सामान्याधिकरणम् ॥ ३३ ॥

भा.॥ सूत्रार्थमाहुः- **न सामान्येति** ॥ उक्तार्थे मानमाहुः- [1]**सामान्येति** ॥ बिम्बदर्शनेऽपि मुक्तिर्नेति

---

१. **सामान्येति** ॥ सामान्यदर्शनात् योग्याऽत्मदर्शनातिरिक्तावतारादिदर्शनात् लोकाः महरादयः भवन्ति योग्याऽत्मदर्शनात् स्वयोग्यपरमात्मरूपदर्शनात् मुक्तिर्भवतीत्यर्थः ।

किं न स्यादत आहुः- [१]**मुच्यत इति ॥** सामान्यदर्शनेन केषाञ्चिन्मुक्तिरपि स्यादतः स्मृतिमाहुः- [२]**दर्शनेन इति ॥** अध्यात्म इति । नारायणतन्त्र इत्युक्तेः, अध्यात्मे इत्युक्तेश्चेत्यर्थः ॥ ५३ ॥ अ.३३ ॥

**॥ इति न सामान्याधिकरणम् ॥ ३३ ॥**

१. **मुच्यते इति ॥** स्पष्टम् ।

२. **दर्शनेन इति ॥** स्पष्टम् ॥ ५३ ॥ अ.३३ ॥

## ३४. ताद्विध्याधिकरणम् (परेणाधिकरणम्)

**(परमात्मप्रसादादेव अपरोक्षज्ञानम्, न भक्तिमात्रेण)**

**'भक्तिरेवैनं नयति भक्तिरेवैनं दर्शयति भक्तिवशः पुरुषो भक्तिरेव भूयसी' इति माठरश्रुतेर्न परमात्मना दर्शनमिति चेन्न । 'तस्यैष आत्मा विशते ब्रह्मधाम' (मु.३.२.४) इति श्रुतेः । कथं तर्ह्येषा श्रुतिः—**

अत्र नये दर्शनविषये भक्तेः स्वातन्त्र्यनिरसनम् । अन्यथा 'तदव्यक्तमाह हि' (३.२.२३) इति नयोक्तमव्यक्तत्वमयुक्तं स्यादिति तेन नयेन सङ्गतिः । उपासनजन्यज्ञानं विषयः । भक्तिसामर्थ्येन भवति, भगवत्प्रसादेन वेति संशयः । लोके कृष्यादौ कस्यचित्प्रसादमन्तरेण फलसिद्धिः राजसेवादौ राजप्रसादेनैव फलसिद्धिश्च तद्बीजम् । भक्त्यैव ज्ञानं भवति न प्रसादेनेति पूर्वपक्षः ॥ पूर्वपक्ष-प्रापकश्रुतिमाहुः- [1]**भक्तिरेवेति** ॥ परमात्मना- तत्प्रसादेन । सिद्धान्ते श्रुतिमाहुः- [2]**तस्यैष इति** ॥ तर्हि- परमात्मनैव दर्शनादिकं चेत् । एषा- 'भक्तिरेवैनम्' इति श्रुतिः । उपपद्यत इति शेषः ॥

इति शङ्कावारणायसूत्रं पठन्ति-

**॥ ॐ परेण च शब्दस्य ताद्विध्यं भूयस्त्वात्त्वनुबन्धः ॐ ॥ ५४ ॥**

सा विधा यस्तस्य भावस्ताद्विध्यम् । दृष्टिरिति वर्तते । भूयस्त्वादिति ल्यब्लोपे पञ्चमी । यथायथमावृत्तिविपरिणामौ । अयमर्थः- **परेण च** परमात्मनैव **दृष्टिः** ब्रह्माऽपरोक्षादिकं भवति **शब्दात्** 'एतैरुपायैर्यतते यस्तु विद्वान् तस्यैष आत्मा विशते' इति श्रुतेः **'शब्दस्य'** 'भक्तिरेवैनम्' इति श्रुतेः । **ताद्विध्यं** तु दृष्ट्यादिविषये भक्तेः स्वातन्त्र्यबोधकत्वं तु युज्यत इति शेषः । **च** यतः **अनुबन्धः** भक्तिं **भूयस्त्वात्** ब्रह्मज्ञानसाधनेषु प्राधान्यमाश्रित्य वर्ततेऽत इति । यद्वा **अनुबन्धस्य** भक्तेः **भूयस्त्वात्** प्राधान्यादित्यर्थः । शेषं प्राग्वत् । यद्वा अनुबन्धस्य भक्तिपदस्य भूयस्त्वात् भगवद्वाचित्वात् इत्यर्थः । शेषं प्राग्वत् ।

---

१. **भक्तिरिति** ॥ भक्तिरेव एनं परमात्मानम् अधिकारिणं नयति । नत्वन्यत् । यद्वा एनं परमात्मानं वशं नयति । एनं विष्णुम् भक्ताय दर्शयति पुरुषो भक्तिवशः भक्त्यधीनः भूयसी साधनेषु श्रेष्ठेत्यर्थः ।

२. **तस्यैष इति** ॥ (आथ. ६.३) तस्य 'नायमात्मा प्रवचनेन लभ्यः' इत्यादि पूर्वोक्तभक्तिमतः तस्य तदर्थं ज्ञानार्थम् एष आत्मा ब्रह्मधाम विष्ण्वधिष्ठानभूतं वायुं विशते प्रविशतीत्यर्थः तस्य तत्राविर्भवतीति भावः ।

**परमात्मैव भक्त्या दर्शनं प्राप्य मुक्तिं ददाति । प्रधानसाधनत्वाद्भक्तिः करणत्वेनोच्यते । मायावैभवे च–**

**'भक्तिस्थः परमो विष्णुस्तयैवैनं वशं नयेत् ।**
**तयैव दर्शनं यातः प्रदद्यान्मुक्तिमेतया ॥**
**स्नेहानुबन्धो यस्तस्मिन् बहुमानपुरस्सरः ।**
**भक्तिरित्युच्यते सैव करणं परमीशितुः' ॥ इति ।**

**सर्वशब्दानां ब्रह्मणि प्रवृत्तेश्च ॥ ५४ ॥**

॥ इति ताद्विध्याधिकरणम् ॥ ३४ ॥

**भा.**॥ सूत्रं व्याचक्षते - **परमात्मन इति** ॥ **भक्त्या** - करणेन । **दर्शनं प्राप्येति** ॥ भक्तस्य बिम्बापरोक्षमुत्पाद्येत्यर्थः । **ददातीति** ॥ इति हेतोरित्यर्थः । **उच्यत इति** । करणे कर्तृत्वोपचारादिति शेषः । अत्रैव स्मृतिमाहुः- **मायावैभवे च- 'भक्तिस्थ इति** ॥ **ईशितुरितीति** ॥ इत्युक्तेरित्यर्थः । 'भक्तिरेव' इति श्रुतेर्गत्यन्तरमाहुः- **सर्वेति** ॥ तथाच श्रुतिस्थभक्तिशब्दस्य ब्रह्मपरत्वात् (नदोष) इति भावः । ततश्च करणे कर्तृत्वोपचारात्, मायावैभवे इत्युक्तेश्च, ब्रह्मणि प्रवृत्तेश्च उपपद्यते इति अनुवृत्त्या सम्बन्धः ॥ ५४ ॥ अ.३४ ॥

॥ इति परेणाधिकरणम् ॥ ३४ ॥

---

१. **भक्तिस्थ इति** ॥ **भक्तिस्थः** भक्तौ स्थितः **परमो** विष्णुः **तयैव** भक्त्यैव **एनं** स्वात्मानं **वशं** जीववशं नयेत् । एष जीवाधीन इति ज्ञापयतीति यावत् । तयैव गुरुप्रसादाभिव्यक्तभक्त्यैव **दर्शनं यातः** दर्शनविषयत्वं प्राप्तः **एतया** परिपक्वया भक्त्या मुक्तिं दद्यात् । भक्तिस्वरूपमाह- **स्नेह इति** ॥ **तस्मिन्** परमे **बहुमानपुरस्सरः** बहु सर्वदेशकालपूर्णत्वं मानं ज्ञानं सर्वदेशकालगुणव्याप्तिज्ञानपूर्वक **स्नेहानुबन्धः** स्नेहाख्योऽनुबन्धः वशीकरणसाधनं यः सा भक्तिरित्युच्यते सैव भक्तिः परमीशितुः दर्शनादिदाने करणं भवतीत्यर्थः ॥ ५४ ॥ अ.३४ ॥ ५५ ॥

## ३५. एकाधिकरणम्

**(उपासना तत्तज्जीवयोग्यतानुसारिणी)**

अत्र नये उपासनस्यानादियोग्यत्वापेक्षत्वाय अंशांऽशिनोरेकत्वसमर्थनम् । अन्यथा 'अनुबन्धादिभ्यः' (३.३.३१) इति नयोक्तानादिभक्त्यादिसापेक्षत्वमुपासनादावुक्तमयुक्तं स्यादिति तेन नयेन सङ्गतिः । उपासनं विषयः । लोके स्वयोग्यायोग्यक्रियादर्शनं तद्बीजम् । न योग्यतापेक्षमिति पूर्वपक्षः ॥ पूर्वपक्षमाहुः- **जीवेति** ॥ **अनादियोग्यतेति** ॥ उपासनस्येति शेषः । अंशभूतार्जुनादिकर्तृकोपासनायामनादियोग्यता न सम्भवतीति भावः ।

**जीवांशानां पृथगुत्पत्तेर्नानादियोग्यतापेक्षेति न मन्तव्यम् । कुतः—**

**॥ ॐ एक आत्मनः शरीरे भावात् ॐ ॥ ५५ ॥**

आत्मशब्दस्यावृत्तिविपरिणामौ । एकशब्दो भावसाधनः । अयमर्थः- **आत्मनोः** अंशांशिजीवयोः **एकः** ऐक्यमेव **शरीरे** अंशिजीवकर्मनिर्मितदेहे **भावात्** अंशस्य तदभिमानित्वेन स्थितेरिति । अंशस्याप्यनादिसिद्धत्वेन अनादियोग्यतापेक्षत्वमुपासनस्याक्षतमिति भावः ।

**अंशांशिनोरेकत्वमेव । अंशिकर्मनिर्मितशरीर एवांशस्य भावात् ॥**

भा.॥ सूत्रार्थमाहुः- अंशांऽशिनोरिति ॥ ५५ ॥

अंशांऽशिनोरर्जुनेन्द्रयोः सुखादिभेदाद्भेद एवेति शङ्कावारणाय सूत्रम्-

**॥ ॐ व्यतिरेकस्तद्भावभावित्वान्न तूपलब्धिवत् ॐ ॥ ५६ ॥**

आत्मन इति वर्तते । उपलब्धीत्युपलक्षणं सुखादेरपि । आत्मन इत्यस्यावृत्तिविपरिणामौ । अयमर्थः- आत्मनोरंशांशिनोः **उपलब्धिवत्** ज्ञानसुखादाविव तत्र भेदवदिति यावत् । **व्यतिरेकः** स्वरूपभेदो **न** आत्मनः अंशात्मनः **तद्भावभावित्वात्** तस्यांशिनः भाव उपासनाजन्यफलं तस्य भावित्वात् अनुभवितृत्वादिति । ज्ञानसुखादिविषये भेदस्तु ईश्वराऽचिन्त्यशक्त्योपपन्नो भवतीति भावः ।

**ज्ञानादिभेदे विद्यमानेऽपि नांशांशिनोः पृथग्भाव एव । तदुपासनादिभोगादंशस्य । परमसंहितायां च—**

**'अंशिनस्तु पृथग्जाता अंशास्तस्यैव कर्मणा ।**
**पुनरैक्यं प्रपद्यन्ते नात्र कार्या विचारणा' ॥ ५६ ॥ इति ।**

॥ इत्येकाधिकरणम् ॥ ३५ ॥

भा.॥ सूत्रं व्याचक्षते- **ज्ञानादीति** ॥ **तदुपासेति** ॥ अंश्युपासनाजन्यफलभोगादित्यर्थः । अत्र स्मृतिमाहुः- परमसंहितायाम् - [1]**अंशिनस्त्विति** ॥ **विचारणेतीति** ॥ इत्युक्तेरित्यर्थः ॥ ५६ ॥ अ. ३५ ॥

॥ इत्येकाधिकरणम् ॥ ३५ ॥

१. **अंशिन इति ॥** अंशा अर्जुनादयः तस्यैव **अंशिन एव कर्मणा** अंशिकर्मनिर्मितशरीरेण सह **अंशिन** इन्द्रादेः **पृथक्** विभक्ततया भूम्यादौ **जाताः** सन्तः **पुनः** कर्मपर्यवसानानन्तरं स्वस्थानगताः **अंशिना** ऐक्यं प्रपद्यन्ते अत्र विचारणा न कार्येत्यर्थः ॥ ५६ ॥ अ. ३५ ॥

## ३६. अङ्गावबद्धाधिकरणम्

**(अप्रधानत्वेन अन्यदेवता अपि उपास्याः)**

अत्र भगवदुपासनस्य यथायोग्याङ्गदेवतोपासनायुक्तत्वेन कर्तव्यत्वसमर्थनम् । अन्यथा 'यावदधिकारम्' (३.३.२०) इति नयोक्ततारतम्यं न स्यादिति तेन नयेन सङ्गतिः । उपासनं विषयः । अङ्गदेवतोपास्तियुक्तं कर्तव्यं केवलं वेति संशयः । ब्रह्मोपासन विदेरुभयसाधारण्यं तद्बीजम् । केवलमिति पूर्वपक्षः ॥

**॥ ॐ अङ्गावबद्धास्तु न शाखासु हि प्रतिवेदम् ॐ ॥ ५७ ॥**

उपसंहार इति वर्तते । प्रतिवेदमिति वीप्सायामव्ययीभावः । कार्या इति शेषः । हिः स्मृतिसूचकः । यथायथमावृत्तिविपरिणामौ । अयमर्थः- **अङ्गावबद्धाः** अङ्गैः अप्रधानैर्ब्रह्मादिदेवैः सम्बद्धाः तद्विषयका इति यावत् । **उपसंहारा** उपासनापरिचर्यादयः कार्याः **तु** परन्तु **प्रतिवेदं शाखासु** सर्ववेदगतसर्वशाखासु उक्ता **अङ्गावबद्धाः** अङ्गदेवतासम्बन्धिनो गुणाः अङ्गेषु अङ्गदेवतान्तरेषु **नोपसंहाराः** नोपसंहर्तव्याः **हि** 'समत्वाद्वा' इति स्मृतेरिति ॥

**ब्रह्माद्यङ्गदेवतावबद्धोपासनादि प्रतिशाखं प्रतिवेदं च नोपसंह्रियते । हिशब्दात्—**

**'समत्वाद्वोत्तमत्वाद्वा नाङ्गदेवाद्युपासनम् ।**
**उपसंहारमित्याहुर्वेदसिद्धान्तवेदिनः ॥' इति ब्रह्मतर्कवचनात् ॥ ५७ ॥**

भा.॥ सूत्रं व्याचक्षते- **ब्रह्मादीति** ॥ चतुर्मुखाद्यङ्गदेवताविषयकोपासनापरिचर्यादीत्यर्थः । कार्यमेव तथाऽपीति शेषः । **प्रतिवेदं प्रतिशाखमिति** ॥ सर्ववेदगतसर्वशाखास्वित्यर्थः । उक्तमिति शेषः । उक्ताङ्गदेवतागुणजातमिति तदर्थः । नोपसंह्रियते । अङ्गदेवतान्तरे नोपसंहार्यम् । कुत इत्यत आहुः- **हिशब्दादिति** ॥ हिशब्दसूचितादित्यर्थः । तां स्मृतिमाहुः- **'समत्वादिति** ॥ अयं भावः-

---

१. **समत्वादिति** ॥ केषाञ्चिदङ्गदेवानां समत्वात् केषाञ्चिदुत्तमत्वात् अङ्गदेवाद्युपासनम् अङ्गदेवतान्तरेषु अङ्गदेवतासम्बन्ध्युपासनाविषयगुणजातं नोपसंहार्यम् नोपसंहर्तव्यमित्याहुर्वेदसिद्धान्तवेदिन इत्यर्थः । उत्तमगुणानामधमेषु अधमगुणानां चोत्तमेषु उपसंहारे सर्वसाम्यापत्तेरिति भावः ॥ ५७ ॥

अङ्गदेवतोपासनं कार्यमेव अन्यथा सर्ववेदेषु अङ्गदेवतागुणकथनस्य वैयर्थ्यं स्यात् । न च 'तमेवैकं जानथ' इति श्रुत्याऽन्योपासनस्य निषेध इति वाच्यम् ।

तस्याः श्रुतेः प्राधान्येनान्योपास्तिनिषेधपरत्वात् । इहत्वप्राधान्येनोपासनाया विधानात् । अत एव ब्रह्मादीत्यनुक्त्वाऽङ्गेत्युक्तम् । गुणोपसंहारस्तु न भवति । समस्तानामङ्गदेवतागुणानामङ्गदेवतान्तरेषूपसंहारापत्त्या सर्वसाम्यापत्तेः । न चाऽन्यगुणस्याऽन्यत्रोपसंहारप्रसक्तिः कथमिति वाच्यम् । देवत्ववैष्णवत्वादेरिव गुणान्तरस्यापि उपसंहारसम्भवात् अन्यथा उत्तमेष्वधमगुणस्योपसंहारानापत्तेरिति ॥ शाखास्त्वित्येताव तैवपूर्तौ प्रतिवेदग्रहणं तु अविभक्त ऋग्वेदादि सङ्ग्रहार्थम् ॥ ५७ ॥

**सामान्यत एकत्र प्रतीतसर्वगुणानामङ्गदेवतान्तरेऽनुपसंहारमुक्त्वाऽधमदेवतागुणानामुत्तमदेवे उपसंहारोऽस्तीति विशेषप्रतिपादनाय सूत्रम्-**

## ॥ ॐ मन्त्रादिवद्वाऽविरोधः ॐ ॥ ५८ ॥

**अङ्गावबद्धा, उपसंहार इति वर्तते । यथायथमावृत्तिविपरिणामौ । अयमर्थः- मन्त्रादिवत् अग्न्यादिदेवतावाचिमन्त्रादीनामिव अङ्गावबद्धानाम् अङ्गदेवतागुणानाम् अङ्गेषु अङ्गदेवतान्तरेषु उपसंहारेऽपि अविरोधः साम्यापत्तिदोषो नास्तीति ॥ दृष्टान्ते उपसंहारो वाचकत्वं दार्ष्टान्तिके तु तद्विशिष्टत्वेनोपासनम् । अयं भावः- यथा उत्तमदेवतापरमन्त्राणामधमदेवतापरत्वाभावेऽपि अधमदेवतापरमन्त्राणामुत्तमदेवतापरत्वं तथा उत्तमदेवतागुणानामधमासूपसंहाराऽभावेऽपि अधमदेवतागुणानामुत्तमासूपसंहारो भवति व्यवस्थितविकल्पार्थकवाशब्दादयमर्थो लब्ध इति ॥**

**सर्वदेवतामन्त्रा यथाऽधीयन्त एवमविरोधो वा ।**

**'उपासनाङ्गदेवानां परमाङ्गतया भवेत् ।**
**उपसंहृतिर्विशेषे तु फलानामन्यथा न तु ।**
**पुरुषाणां विशेषाद्वा यथायोगं भविष्यति' ॥ इति बृहत्तन्त्रे ॥ ५८ ॥**

॥ इत्यङ्गावबद्धाधिकरणम् ॥ ३६ ॥

**भा.॥** सूत्रतात्पर्यमाहुः- सर्वदेवतामन्त्रा इति ॥ अग्न्याद्यधमदेवतामन्त्राः अधीयन्ते ब्रह्माद्युत्तम-

देवताविषयत्वेन समन्वीयन्ते इत्यर्थः । **एवमिति ॥** उत्तमेषु अधमगुणोपसंहारेऽपीत्यर्थः । अङ्गदेवोपासनमुत्तमेष्वधमगुणोपसंहारश्चेत्येतद्द्वयमधिकारिविशेषैरेव कार्यमिति स्मृत्याऽहुः- [1]**उपासनेति ॥ बृहत्तन्त्र इति ॥** तत्रेत्युक्तेरित्यर्थः । एतदुपासनमधिकारिविशेषैरेव कार्यमिति शेषः ॥ ५८ ॥ अ. ३९ ॥

**॥ इति अङ्गावबद्धाधिकरणम् ॥ ३६ ॥**

---

१. **उपासनेति ॥** अङ्गदेवानां ब्रह्मादीनां परमाङ्गतया परमात्मपरिवारत्वेनोपासना सर्वेषां भवेत् । सर्वैः कार्येति यावत् । फलानां विशेषे तु फलविशेषार्थं पुरुषाणां विशेषात् अधिकारिविशेषमपेक्ष्याधिकारिविशेषाणामिति यावत् । यथायोगं योग्यतानुसारेणोपसंहृतिर्भविष्यति भवति कर्तव्येति यावत् । अन्यथाऽधिकारिविशेषाभावे फलविशेषार्थित्वाभावे चोक्तोपासना न भवेदित्यर्थः । तथा च गारुडादिषु विषहरत्वाद्युपासनमधिकारिविशेषैरेव कार्यमिति भावः ॥ ५८ ॥अ.३६ ॥

## ३७. भूमाधिकरणम्

**(पूर्णत्वरूपगुणेन परमात्मा उपास्यः)**

अत्र नये भूमत्वोपासनस्य सर्वोपासकसाधारण्यसमर्थनम् । अन्यथा पूर्णत्वरूपालौकिकत्वाभावेन 'कार्याख्यानात्'(३.३.११) इति नयोक्तमयुक्तमिति तेन नयेन सङ्गतिः । भूमगुणोविषयः । सर्वोपास्यो न वेति संशयः । गुणद्वैविध्यदर्शनं तद्बीजम् । न सर्वोपास्य इति पूर्वपक्षः ॥

### ॥ ॐ भूम्नः क्रतुवज्ज्यायस्त्वं तथा च दर्शयति ॐ ॥ ५९ ॥

चो हेतौ । श्रुतिरित्यर्थाल्लभ्यते । उपसंहार इति वर्तते । यथायथमावृत्तिविपरिणामौ । अयमर्थः- **क्रतुवत्** दीक्षाप्रायणीयोदयनीयप्रातस्सवन-माध्यन्दिनसवन-तृतीयसवनावभृथरूपयागीयाङ्गकलापस्येव **भूम्नः** पूर्णत्वगुणस्य **ज्यायस्त्वम्** अस्ति **च** तस्मात् भूमा पूर्णत्वगुणः उपसंहारः सर्वैरुपास्यः च यतः श्रुतिः 'भूमैव देवः' इति श्रुतिः । तथा उक्तप्रकारेण दर्शयति अत इति । दृष्टान्ते ज्यायस्त्वमग्निष्टोमादि-सर्वयागाङ्गत्वं, दार्ष्टान्तिके आनन्दादिसर्वगुणेषु वर्तनम् ॥

**सर्वगुणेषु भूमगुणस्य ज्यायस्त्वं क्रतुवत्सर्वत्र सहभावात् । 'दीक्षाप्रायणीयोऽयनीयसवनत्रयावभृथात्मकः क्रतुः', 'भूमैव देवः परमो ह्युपास्यो नैवाभूमा फलमेषां विधत्ते ।**

**तस्माद्भूमा गुणतो वै विशिष्टो यथा क्रतुः कर्ममध्ये विशिष्टः' ॥ इति च गौपवन-श्रुतिः ॥ ५९ ॥**

॥ इति भूमाधिकरणम् ॥ ३७ ॥

**भा.** ॥ सूत्रार्थमाहुः- **सर्वेति** ॥ **सर्वत्रेति** ॥ आनन्दादिसर्वगुणेषु दृष्टान्ते सर्वयागेष्वित्यर्थः । **सहभावात्-** साहित्येन नियमेन वर्तनात् । पञ्चम्यर्थोऽभेदो ज्यायस्त्वेऽन्वेति । क्रतुपदस्य अग्निष्टोमाद्यङ्गियागे प्रसिद्धावपि प्रकृते विवक्षितार्थमाहुः- **दीक्षेत्यादि** ॥ **दीक्षा** यजमानसंस्कारः । **प्रायणीयोदयनीयौ** अङ्गिन आदावन्ते च क्रमेणानुष्ठेयेष्टिविशेषौ । **सवनं** सोमाभिषवः । **अवभृथः**

अप्सुक्रियमाणेष्टिविशेषः । **आत्मक इति ॥** एतत्समुदायरूपाङ्गकलाप इत्यर्थः । **क्रतुः-** क्रतुपदेन विवक्षितः । श्रुतिमाहुः- [१]**भूमैवेति ॥ श्रुतिरिति ॥** अस्य दर्शयतीति सौत्रेणैकवाक्यतयाऽन्वयः ॥ ५९ ॥ अ. ३७ ॥

**॥ इति भूमा(क्रत्व)धिकरणम् ॥ ३७ ॥**

---

१. **भूमैव देव इति ॥** यथा क्रतुः दीक्षाद्यङ्गकलापः कर्ममध्ये विकृतियागेषु विशिष्टः स्वसाहित्येनैव फलप्रदत्वात् तथा भूमा भूमगुणः गुणतः गुणराशिषु विशिष्टः प्रधानः तस्माद्धेतोर्भूमैव भूमगुण एव एषामुपासकानां फलं विधत्ते ददाति । हि यतः एवमतः परमो देवो भूमैव पूर्णत्वेनैवोपास्यः नैवाऽभूमा भूमगुणरहितत्वेन नोपास्य इत्यर्थः ॥ ५९ ॥ अ.३७ ॥

## ३८. नानाशब्दाधिकरणम्

**(परमात्मगुणेषु पूर्णत्वं जीवानां योग्यतानुसारेण प्रतीयते)**

अत्र नये भूमगुणोपासने तारतम्यसमर्थनम् । अन्यथा 'यावदधिकारम्' इति नयोक्ततारतम्यं न स्यादिति तेन नयेन (३.३.२०) सङ्गतिः । भूमगुणो विषयः । अधिकारिभेदेनोपासने तारतम्येन प्रतीयते न वेति संशयः । उभयविधवस्तुप्रतीतिस्तद्बीजम् । नेति पूर्वपक्षः ॥

**॥ ॐ नाना शब्दादिभेदात् ॐ ॥ ६० ॥**

भूम्नः, उपसंहार, इति वर्तते । शब्दादिभिर्भेद इति विग्रहः । (भूम्न इत्यस्यावृत्तिविपरिणामौ) अयमर्थः- **भूमा पूर्णत्वगुणः नाना** नानाप्रकारेण तारतम्येन **उपसंहारः** उपास्यः भूम्नः **शब्दादिभेदात्** शब्दानुमानप्रत्यक्षजन्यतारतम्योपेतप्रतीतिविषयत्वादिति । यथा प्रतीतिः तथैवोपासनं कार्यमिति भावः । प्रमाणेषु प्रत्यक्षस्याऽदित्वेऽपि श्रवणमननापरोक्षज्ञानक्रमानुरोधेन शब्दादीत्युक्तम् ॥

**'शब्दोऽनुमा तथैवाक्षो योग्यताभेदतस्सदा ।**
**ब्रह्मादीनामेकमर्थं बहुधा दर्शयन्ति हि ॥**
**अतः पूर्णत्वमीशस्य नानैवैषां प्रदृश्यते ।**
**अतः फलस्य नानात्वं नानैवोपासनं यतः ॥' इति हि ब्रह्मतर्के ॥**

**अतो भूमत्वमपि नानैवोपास्यते ॥ ६० ॥**

॥ इति नानाशब्दाधिकरणम् ॥ ३८ ॥

**भा.** ॥ सूत्रं स्मृत्या व्याख्यान्ति- [1]**शब्द इति** ॥ **ब्रह्मतर्क इति** ॥ तत्रेत्युक्तमत इत्युक्तत्वादित्यर्थः ॥ ६० ॥ अ.३८ ॥

॥ इति नानाशब्दाधिकरणम् ॥ ३८ ॥

१. **शब्दोऽनुमेति** ॥ शब्द आगमः अनुमा अनुमानम् । अक्षः प्रत्यक्षम् एते सदा योग्यताभेदतः सार्वकालिकयोग्यतातारतम्यात् ब्रह्मादीनामेकमेकैकमर्थं पूर्णत्वादिरूपं बहुधा अवान्तरविशेषवत्त्वेन दर्शयन्ति । हि यतः अतो ब्रह्मादीनामीशपूर्णत्वं नानैव प्रदृश्यते प्रतीयते उपासनाकाले इति शेषः । अतो नानैवोपासना यत एवमतः फलस्य नानात्वमित्यर्थः ॥ ६० ॥ अ. ३८ ॥

## ३९. विकल्पाधिकरणम्

**(विशिष्टफलापेक्षया बिम्बातिरिक्तरूपोपासना कर्तव्या)**

अत्र नये दर्शनसाधनस्वायोग्याबिम्बोपासनस्याकर्तव्यतानिरासः । अन्यथा केषाञ्चिदधिकारिणां विघ्नेनोपासनाऽनिष्पत्तौ उपासनं व्यर्थं स्यादिति पूर्वैः नयैः सङ्गतिः । उपासनं विषयः । बिम्बातिरिक्तविषयकं कर्तव्यं न वेति संशयः । अबिम्बोपासनस्यानिषेधस्तद्बीजम् । नेति पूर्वपक्षः ॥

**॥ ॐ विकल्पो विशिष्टफलत्वात् ॐ ॥ ६१ ॥**

उपसंहारः सामान्यादिति वर्तते । यथायथं विपरिणामः । अयमर्थः- **सामान्यस्य** सर्वोपास्य नृसिंहादेरुपसंहारे उपासने विषये **विकल्पः** व्यवस्थितविकल्पो भवति **विशिष्टफलत्वात्** विशेषफलवत्त्वात् बिम्बोपासने सम्भावितविघ्नध्वंसादिफलवत्त्वादिति यावदिति ॥ यस्य विघ्नः सम्भावितः तेन तदुपासनं कर्तव्यं, यस्य तु न न तेन सामान्योपासनं कर्तव्यमिति भावः ॥

**स्वयोग्योपासनानन्तरं सामन्यस्यापि कस्यचिदुपासनं विकल्पेन भवति विशिष्टफलापेक्षया ।**

**'मुक्त्यर्थमात्मयोग्यं हि कार्यमेव ह्युपासनम् ।**
**नृसिंहादिकमन्यच्च दुरितादिनिवृत्तये ।**
**उपास्यते यथायोगं नवा फलविभेदतः ॥' इति च ब्रह्मतर्के ॥ ६१ ॥**

॥ इति विकल्पाधिकरणम् ॥ ३९ ॥

**भा.॥** सूत्रार्थमाहुः- **स्वयोग्योपासनेति** ॥ स्वबिम्बोपासनेत्यर्थः । **सामान्यस्येति** ॥ सर्वोपास्यस्येत्यर्थः । बिम्बरूपं तु न सामान्यं स्वेनैवोपास्यत्वादिति भावः । **कस्यचित्**- नृसिंहादेः । सूत्रार्थे स्मृतिमाहुः- [१]**मुक्त्यर्थमिति** ॥ **ब्रह्मतर्क इति** ॥ तत्रेत्युक्तेरित्यर्थः । केचित् वर्णकान्तरमित्थमाहुः-

---

१. **मुक्त्यर्थमिति** ॥ आत्मयोग्यं स्वयोग्यरूपविषयकमुपासनं मुक्त्यर्थं कार्यमेवेति हि प्रसिद्धम् । हि अतिप्रसिद्धम् वा । नृसिंहादिकं नृसिंहरामकृष्णादिरूपम् अन्यत् स्वायोग्यमपि दुरितादिनिवृत्तये दुरितं दुरदृष्टम् आदिना कामक्रोधादिपरिग्रहः । यथायोगं योग्यतामनतिक्रम्योपासते मुमुक्षव इति शेषः । केचित् न चोपासते फलविभेदतः फलविशेषाकाङ्क्षाभावादित्यर्थः । केषाञ्चित् स्वयोग्योपासनादेव दुरितादिनिवृत्तिरपि भवतीति भावः । नृसिंहादिरूपयोग्यता येषां नास्ति तेषां फलापेक्षया तदुपासनमुक्तमिति ज्ञेयम् ॥ ६१ ॥ अ.३९ ॥

विशिष्टपदं भिन्नार्थकं 'विशिष्टलिङ्गो नदी देशोग्रामा' इत्यत्रेव । अयमर्थः- उपसंहाराणाम् उक्तोपासनानां विकल्पः अधिकारिभेदेन व्यवस्थितविकल्पो भवति विशिष्टफलत्वात् भिन्नफलकत्वादिति । यस्य यादृशफलापेक्षायोग्यता च तादृशी तेन तादृशमुपासनं कार्यं पूर्वोक्तोपासनाव्यवस्थानिगमनार्थमिदमधिकरणमिति भावः ॥ ६१ ॥ अ. ३९ ॥

**॥ इति विकल्पाधिकरणम् ॥ ३९ ॥**

## ४०. काम्याधिकरणम्

**(काम्यापेक्षी कामानुसारेण कामसाधनगुणविशिष्टतया उपासनां कुर्यात्)**

अत्र नये ज्ञानसाधनस्यैवोपासनस्य कर्तव्यत्वसमर्थनम् । अन्यथा मुक्त्युपयोगितया काम्योपासनस्यापि कर्तव्यतापत्तौ वैराग्यं न स्यादिति वैराग्यपादेन (३-१) सङ्गतिः। काम्यगुणोपासनं विषयः। आवश्यकं वैकल्पिकं वेति संशयः। उपासनाद्वयप्रतीतिस्तद्बीजम्। आवश्यकमिति पूर्वपक्षः ॥

**ॐ काम्यास्तु यथाकामं समुच्चीयेरन्न वा पूर्वहेत्वभावात् ॐ ॥ ६२ ॥**

तुशब्दो विशेषे। कामानां योग्यं यथाकाममित्यव्ययीभावः। व्यवस्थितविकल्पार्थकवाशब्दान्मुमुक्षुभिरन्यैरिति लभ्यते। अयमर्थः-**काम्याः** वित्तादिकाम्यसाधनभूताः 'वसुपूर्णकरं रत्नपर्वतस्थं विभावयन्। वसुसिद्धिमवाप्नोति' इत्याद्युक्ताः श्रीकरादिभगवद्रूपगुणाः **यथाकामं** वित्तादिकामनानुसारेण अन्यैः मुमुक्षुभिन्नैः **समुच्चीयेरन्** उपास्येरन् मुमुक्षुभिः **न वा समुच्चीयेरन् पूर्वहेत्वभावात्** मोक्षेच्छातः पूर्वं विद्यमानवित्तादिकामनारूपकारणाभावात् । यद्वा मुमुक्षुभिरेव काम्या यथाकामम् ईश्वरप्रीति कामनानुसारेण **समुच्चीयेरन् न वा** समुच्चीयेरन् पूर्वहेत्वभावात् वित्तादिकामनारूपहेत्वभावात् पूर्वसूत्रोक्तविशिष्टफलत्वरूपहेत्वभावाद्वेति। पूर्वाधिकरणमकाम्यविषयमिदं तु काम्यविषयमिति भेदः।

**'यस्य यस्य हि यः कामस्तस्य तस्य ह्युपासनम् ।**
**तादृशानां गुणानां च समाहारं प्रकल्पयेत् ॥**
**अकामत्वान्मुमुक्षूणां न वा तेषामुपासनम् ।**
**तुष्ट्यर्थमीश्वरस्यैव नैवोपासा विदुष्यति ॥' इति च बृहत्तन्त्रे ॥ ६२ ॥**

॥ इति काम्याधिकरणम् ॥ ४० ॥

भा.॥ सूत्रार्थं स्मृत्याऽहुः- '**यस्येति** ॥ **तन्त्र इति** ॥ एतत्सूत्रार्थ उक्त इति शेषः ॥ ६२ ॥ अ.४०॥

॥ इति काम्याधिकरणम् ॥ ४० ॥

---

१. **यस्येति** ॥ यस्य यस्याधिकारिणो यो यः कामो वित्तादिकामोऽस्ति स सोऽधिकारी अमुमुक्षुः तस्य तस्य कामस्य तादृशकामप्रदभगवद्रूपस्योपासनं प्रकल्पयेत् कुर्यात् । तादृशानां कामसाधनानां गुणानां समारोहणमेकबुद्ध्यारोहणं च प्रकल्पयेत् । मुमुक्षूणामकामत्वात् वित्तादिकामनाभावात् तेषां मुमुक्षूणाम् उपासनमुक्तोपासानं न वा भवति । ईश्वरतुष्ट्यर्थं तत्प्रसादार्थमेव तस्य रूपस्य गुणानां चोपासना मुमुक्षूणामपि नैव दुष्यतीत्यर्थः। एवं च कामोपासनममुमुक्षूणां फलसिद्ध्यै नियतम् । मुमुक्षूणां त्वीश्वरतुष्ट्यर्थं कर्तव्यं न वेति भावः ॥६२॥

## ४१. अङ्गाधिकरणम् (यथाश्रयभावाधिकरणम्)

**(देवैः स्वोत्पादकाङ्गवत्त्वेन परमात्मा उपास्यः)**

अत्र नये भगवदङ्गाश्रितत्वेनाऽङ्गदेवतोपासनस्य उत्तमैः कर्तव्यतासमर्थनम् । अन्यथा निरधिकारिकत्वापत्त्योत्तरसूत्रेषु भाष्ये उदाहरिष्यमाणश्रुत्यादिस्थतद्विधिवैयर्थ्यं स्यादिति अधिकरणस्य उपासनाविषयत्वात् प्रसङ्गसङ्गतिः । चतुर्मुखादिविषयकोपासनं विषयः । अङ्गाश्रितत्वेन मुमुक्षुणा कर्तव्यं नवेति सन्देहः । 'चक्षोः सूर्यः' इत्यादेरुभयथाऽपि सम्भवस्तद्बीजम् । नेति पूर्वपक्षः ॥

### ॥ ॐ अङ्गेषु यथाश्रयभावः ॐ ॥ ६३ ॥

उपसंहार इति वर्तते । कार्य उक्त इत्यर्थाल्लभ्यते । यथायथमावृत्तिविपरिणामौ । अयमर्थः- अङ्गानां सूर्याद्यङ्गदेवतानां **अङ्गेषु** चक्षुरादिभगवदङ्गेषु **यथा** येन प्रकारेण **आश्रयभावः** आश्रयत्वम् उक्तः 'चक्षोः सूर्यो अजायात' इत्यादिनोक्तः तथा तेन प्रकारेण अङ्गानामङ्गदेवतानाम् उपसंहार उपासनं कार्यम्' इति ॥

**अङ्गदेवतानां यथा यथा परमेश्वराङ्गाश्रयत्वं 'चक्षोः सूर्यो अजायत' (ऋ.१०.१०.१३) इत्यादि तथा भावना कर्तव्या ॥ ६३ ॥**

भा.॥ सूत्रार्थमाहुः- **अङ्गेति** ॥ देवतानामङ्गाश्रितत्वे श्रुतिमाहुः- **'चक्षोरिति** ॥ **इत्यादीति** ॥ इत्यादिवाक्योक्तमित्यर्थः । अङ्गाश्रितत्वेनोक्त्यन्यथाऽनुपपत्त्योक्तोपासनं कार्यमिति भावः ॥ ६३॥

श्रुतौ विहितत्वाच्चोक्तोपासनं कार्यमिति प्रतिपादनाय सूत्रम्-

### ॥ ॐ शिष्टेश्च ॐ ॥ ६४ ॥

अनुवृत्त्यादिसहितपूर्वसूत्रं वर्तते । अयमर्थः- अङ्गानामङ्गेषु यथाश्रयभावः उक्तः तथोपसंहारः कार्यः । **शिष्टेश्च** 'यस्मिन् यस्मिन्' इति श्रुतिविहितत्वाच्चेति ॥

**'यस्मिन् यस्मिन् यो हि चाङ्गे निविष्टः परस्य चिन्त्यः स तथा तथैव' इति पौत्रायणश्रुतेः ॥**

---

१. चक्षोः सूर्य इति ॥ (ऋ१०.१०.१३) स्पष्टम् ॥ ६३ ॥

**भा.**।। श्रुतिमाहुः- [1]**यस्मिन्निति ।। श्रुतेरिति ।।** श्रुतिविहितत्वाच्चेत्यर्थः । अस्य 'भावनाकार्या' इति पूर्वभाष्येणान्वयः ।। ६४ ।।

**अस्योपासनस्य निरधिकारिकत्वशङ्कावारणाय सूत्रम्-**

## ।। ॐ समाहारात् ॐ ।। ६५ ।।

**पूर्वसूत्रे इवानुवृत्त्यादिकम् । समाहारपदबलात् देवैरिति लभ्यते अयमर्थः । अङ्गानामङ्गेषु यथाऽश्रयभावः उक्तः तथोपसंहारो देवैः कार्यः । समाहारात् अङ्गदेवतोपास्तिफलपरा 'अङ्गैः परात्' इति श्रुतेरिति ।।**

**'अङ्गैः पराद्ये हि देवा विसृष्टास्तत्तद्गुणान् परमे संहरेत ।**
**तांश्चापि तत्रैव विचिन्त्य देवान् स्थानं मुमुक्षुः परमं व्रजेत ।।'**

**इति च काषायणश्रुतौ समाहारवचनाच्च ।।**

**भा.**।। समाहारश्रुतिमाहुः- [2]**अङ्गैरिति ।। वचनाच्चेति ।।** अस्याऽपि 'भावना कार्या' इति भाष्येऽन्वयः । अस्य हेत्वन्तरत्वेण च शब्दो भाष्ये ।। ६५ ।।

**हेत्वन्तरेणोक्तार्थसाधनाय सूत्रम्-**

## ।। ॐ गुणसाधारण्यश्रुतेश्च ॐ ।। ६६ ।।

**पूर्वसूत्रे इवानुवृत्त्यादिकम् । अयमर्थः- अङ्गानामङ्गेषु यथाश्रयभाव उक्तः तथोपसंहारः कार्यः । गुणसाधारण्यश्रुतेश्च गुणानां भगवद्गुणानां साधारण्यस्य उपास्यत्वेन साम्यस्य । एते गुणा उपास्या एते नोपास्या इति विभागमकृत्वा उक्तस्य सर्वगुणानामुपास्यत्वस्येति यावत्, 'साधारण्यात्' इति श्रुतौ**

---

१. **यस्मिन्निति ।।** यो यो देवः परस्य विष्णोः यस्मिन् यस्मिन्नङ्गे निविष्ट आश्रितः सस तथातथा तत्तदङ्गावशिष्टत्वेन चिन्त्य उपास्य इत्यर्थः ।। ६४ ।।

२. **अङ्गैरिति ।। परात्** परमात्मनः **अङ्गैः** चक्षुराद्यङ्गैः करणैः ये ये **देवा विसृष्टाः** हि प्रसिद्धाः **तत्तद्गुणान्** तत्तद्देवसूर्यचन्द्रादिसम्बन्धिमहाप्रकाशाह्लादकरत्वादिगुणान् **परमे** परमाङ्गे **संहरेत** उपसंहरेत् । तान् देवांश्च **तत्रैव** तत्तदङ्गेष्वेव चिन्तयीत तेन **परमं स्थानं** सायुज्यरूपं **व्रजेत** प्राप्नोति मुमुक्षुरित्यर्थः ।। ६५ ।।

**श्रवणादिति ॥** सूर्याद्याश्रयचक्षुरादिभगवदङ्गानामपि भगवद्गुणत्वाच्चाङ्गाऽश्रितदेवतोपास्तिः कार्यैवेति भावः ।

**'साधारण्यात् सर्वगुणाः परस्य समाहार्यास्तत्त्वदृशो मुमुक्षोः ॥'**

**इति माण्डव्यश्रुतेश्च ।**

**॥ इति यथाश्रयभावाधिकरणम् (अङ्गाधिकरणम्) ॥ ४१ ॥**

**भा. ॥** श्रुत्या सूत्रं व्याचक्षते - '**साधारण्यादिति** ॥ ६६ ॥ अ.४१ ॥

**॥ इति अङ्गाधिकरणम् ॥ ४१ ॥**

१. **साधारण्यादिति ॥** तत्त्वदृशो ब्रह्मज्ञानिनः **मुमुक्षोः** मुमुक्षुणा **परस्य सर्वे गुणाः साधारण्यात्** एते गुणा उपास्या एते नोपास्या इति विभागमकृत्वा यथा शक्तिसमाहार्या इत्यर्थः ॥ ६६ ॥ अ.४१ ॥ सू.६७ ॥

## ४२. सहाश्रवणाधिकरणम् (नवाधिकरणम्)

**(पूर्वोक्ताङ्गोपासना देवव्यतिरिक्तैः न कर्तव्या)**

अत्र नये समर्थनादिकं पूर्वनयवत् । संशयबीजं तु उभयविधोपासनप्रतीतिविशेषः ॥

**॥ ॐ नवाऽतत्सहभावश्रुतेः ॐ ॥ ६७ ॥**

तेन सहभावः तत्सहभावः तस्य श्रुतिः तस्या अभावः अतत्सहभावश्रुतिः । अनुवृत्त्यादिकं पूर्वसूत्रवत् । अयमर्थः- अङ्गानामङ्गेषु यथाश्रयभावः उक्तः तथोपसंहारः न वा कार्यः ह **अतत्सहभावश्रुतेः** प्रकृतोपासनाविधेः अनेकशाखागतोपास्तिविधिवाक्यसाहित्येन श्रवणाभावादिति ॥ वाशब्दो व्यवस्थितकल्पे । तथा च प्रकृतोपासनस्य क्वचिदुक्तत्वेऽपि अनेकशाखास्वनुक्तत्वाद्देवेतरैर्न कार्यं क्वचिदुक्तत्वाच्च देवैः कार्यं तेषामेव तदुपासनायां शक्तत्वात् तदुपास्तिफलयोग्यत्वाच्चेति भावः ॥

**न वाऽङ्गदेवतोपसंहारः कार्यः । उपसंहारस्य सहाश्रवणात् ।**

भा.॥ सूत्रं व्याचक्षते- **नवेति** ॥ **सहेति** ॥ सर्वशाखागतोपासनाविधिना सहेत्यर्थः ॥ ६७ ॥

श्रुत्याऽप्येतदर्थसमर्थनाय सूत्रम्-

**ॐ दर्शनाच्च ॐ ॥ ६८ ॥**

अनुवृत्त्यादिकं पूर्ववत् । देवैरिति शेषः । अयमर्थः - अङ्गानामङ्गेषु यथाऽश्रयभाव उक्तः तथोपसंहारः कार्यो देवैः दर्शनाच्च उक्तोपासनस्य 'सत्यो ज्ञानः' इति श्रुतौ दृष्टत्वादिति ॥

**'सत्यो ज्ञानः परमानन्दरूप आत्मेत्येवं नित्यदोपासनं स्यात् ।**
**नान्यत्किञ्चित्समुपासीत धीरः सर्वैर्गुणैर्देवगणा उपासते ॥' इति कमठश्रुतौ ॥**

॥ इति सहाश्रवणाधिकरणम् (नवाधिकरणम्) ॥ ४२ ॥

**॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते श्रीमद्ब्रह्मसूत्रभाष्ये तृतीयाध्याये तृतीयः पादः ॥**

**भा.॥** श्रुतिमाहुः- **[1]सत्यो ज्ञान इति ॥ श्रुताविति ॥** अस्य दर्शनाच्चेति सूत्रे एकवाक्यतयाऽन्वयः ॥ ६८ ॥ अ. ४२ ॥

**॥ इति नवाऽधिकरणम् ॥ ४२ ॥**

**इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितश्रीब्रह्मसूत्रभाष्यस्य व्याख्यायां भाष्यार्थसहितसूत्रार्थमणिमञ्जर्यां तृतीयाध्यायस्य तृतीयः पादः ॥**

---

१. **सत्य इति ॥** नित्यदा योग्यसर्वकाले सर्वमुमुक्षूणामिति शेषः । नान्यत् किञ्चित् गुणादिसर्वैः स्वस्वयोग्यसर्वैः देवगणाः ब्रह्मरुद्रादिदेवसमूहा इत्यर्थः । शिष्टं सुगमम् ॥ ६८ ॥ अ. ४२ ॥

# अथ तृतीयाध्यायस्य चतुर्थः पादः

## १. पुरुषार्थाधिरणम्

**(अपरोक्षज्ञानात् सर्वपुरुषार्थप्राप्तिः)**

**ज्ञानसामर्थ्यमस्मिन् पाद उच्यते ।**

एतत्पादार्थं दर्शयन्ति- **ज्ञानसामर्थ्यमिति ॥** पूर्वपादोक्तोपासनाजन्यज्ञानसामर्थ्यमित्यर्थः । अत्र नये अपरोक्षज्ञानस्य सर्वपुरुषार्थप्रापकत्वसामर्थ्यमुच्यते । अन्यथा तत्राऽतिशयेन प्रवृत्तिर्न स्यादिति उपासनापादो (३.३) व्यर्थ इति (तत्रत्यनयैः) सङ्गतिः । उपासनाजन्यज्ञानं विषयः । मोक्षमात्रस्य साधनमुत फलान्तरस्यापि वेति संशयः । अवधारणेन विना मोक्षसाधनत्वोक्तिः तद्बीजम् । मुक्तिमात्रस्य साधनमिति पूर्वपक्षः ॥

**॥ ॐ पुरुषार्थोऽतः शब्दादिति बादरायणः ॐ ॥ १ ॥**

पुरुषैरर्थ्यत इति पुरुषार्थः धर्मार्थकाममोक्षाः । सूत्रे समुदायैकवचनम् । भवति मन्यत इति शेषः । अयमर्थः- **अतः** उपासनाजन्यादपरोक्षज्ञानात् **पुरुषार्थो** भवति **शब्दात्** 'यं यं लोकम्' इति श्रुतेरिति बादरायण आचार्यो मन्यत इति ॥

**यद्दर्शनार्थमुपासनोक्ता तस्माद्दर्शनात् सर्वपुरुषार्थप्राप्तिरिति बादरायणो मन्यते ॥**

**'यं यं लोकं मनसा संविभाति**

**विशुद्धसत्त्वः कामयते यांश्च कामान् ।**

**तं तं लोकं जयते तांश्च कामां-**

**स्तस्मादात्मज्ञं ह्यर्चयेद्भूतिकामः ॥' (मु.उ.१.१०)**

**इति शब्दात् ॥ १ ॥**

भा.।। सूत्रं व्याचक्षते- **यद्दर्शनार्थमिति** ।। यच्च तत् दर्शनं चेति विग्रहः । शब्दपदार्थमाहुः- [1]**यं यम्** इति ।। १ ।।

**उक्तार्थस्याक्षेपाय सूत्रम्-**

## ।। ॐ शेषत्वात् पुरुषार्थवादो यथाऽन्येष्विति जैमिनिः ॐ ।। २ ।।

**अतो, मन्यत, इति वर्तते । यथायथमावृत्तिः । अयमर्थः- यथाऽन्येषु धनादिविषये धनादीनामिति यावत् । शेषत्वात् स्वर्गादिसाधनकर्मसाधनाङ्गत्वात् पुरुषार्थवादः 'स्वर्गं धनात्' इति श्रुतौ स्वर्गरूपपुरुषार्थसाधनत्वोक्तिः तथा अतः ज्ञानस्य शेषत्वात् स्वर्गादिसाधनकर्माङ्गत्वात् पुरुषार्थवादः 'यं यम्' इति श्रुतौ स्वर्गादिपुरुषार्थत्रयसाधनत्ववाद इति जैमिनिः मन्यत इति ।। मोक्षस्तु ज्ञानादेव भवत्विति भावः ।**

**अस्त्येव मोक्षसाधनत्वं ज्ञानस्य । स्वर्गादिषु तत्साधनकर्मशेषत्वेन । 'स्वर्गं धनाद्देहतो वै गृहाच्च प्राप्स्यन्ति धीरा न त्वधीराः कुतश्चित्' इति वदति जैमिनिः ।।**

भा. ।। सूत्रार्थमाहुः- **अस्त्येवेति** ।। **स्वर्गादिष्विति** ।। इतिवत् इत्यत्रोक्तधनादेः स्वर्गादिसाधनत्ववत् ज्ञानस्य स्वर्गादिविषये साधनत्वं तत्साधनकर्मशेषत्वेन स्वर्गादिसाधनकर्माङ्गत्वाद्भवतीत्यर्थः । ज्ञानस्य कर्माङ्गत्वं नाम कर्मजन्यस्वर्गादावतिशयाधायकत्वम् । अतोऽज्ञानिनामपि कर्मकरणं युक्तमिति बोध्यम् ।। धनादेः साक्षात्स्वर्गसाधनव्यपदेशे श्रुतिमाहुः - [2]**स्वर्गं धनादिति** ।। २ ।।

**अथ पञ्चसूत्र्या ज्ञानस्य कर्मशेषत्वे हेतुरुच्यते । तत्र श्रुतिबलात् ज्ञानस्यैव सर्वपुरुषार्थसाधकत्वं किं न स्यादिति शङ्कावारणाय सूत्रम् -**

---

१. यं यं इति ।। (आथ.५-९) **विशुद्धसत्वः** निर्मलान्तःकरणो ब्रह्मज्ञानी **यं यं लोकं** स्वर्गादिलोकं **मनसा संविभाति** इच्छति प्राप्तुं प्रापयितुं चेति शेषः, **यांश्च कामान्** काम्यान् **कामयते** इच्छति तं तं लोकं तांश्च कामान् **जयते** प्राप्नोति प्रापयति च **तस्मात्** परमात्मज्ञानस्य सर्वपुरुषार्थसाधनत्वात् तत्सिद्ध्यर्थम् **आत्मज्ञं** ब्रह्मज्ञानिनं **भूतिकामः** सर्वपुरुषार्थकामः **अर्चयेत्** पूजयेदित्यर्थः । यद्यपि ज्ञानिनां मोक्षेतरपुरुषार्थापेक्षा नास्तीति 'परीक्ष्य लोकान्' इति श्रुत्या प्रतीयते तथाऽपि एतच्छ्रुतिबलात् तत् प्रायिकं सौभरिकर्दमादिषु दर्शनाच्च ।। १ ।।

२. **स्वर्गमिति** ।। **धनात्** बहुवित्तव्ययात् **देहतो** देहायासादेः **गृहात्** गृहस्थाऽश्रमाच्च एतत्साध्ययागादेरिति यावत् । **धीराः** ज्ञानिन इत्यर्थः । शिष्टं स्पष्टम् ।। २ ।। ३ ।।

## ॥ ॐ आचारदर्शनाच्च ॐ ॥ ३ ॥

**तन्त्रदीपिका**रीत्याऽयं पाठः, **तत्त्वप्रदीपरीत्या** तु च रहितः पाठः । **चोऽप्यर्थे** । उत्तरसूत्रात् तद्वत इत्यपकृष्यते । अतः शेषत्वादिति वर्तते । यथायथमावृत्तिः । अयमर्थः- **तद्वतां** ज्ञानवतां देवादीनाम् **आचारदर्शनात्** कर्मानुष्ठानपर 'यज्ञेन यज्ञम्' इति श्रुतेः अतः ज्ञानस्य शेषत्वं कर्माङ्गत्वमिति । कर्मतोऽपि स्वर्गादिकं भवति न ज्ञानमात्रादिति भावः ।

**ज्ञानिनामेव देवादीनामाचारदर्शनात् ॥ ३ ॥**

**भा.**॥ सूत्रभावमाहुः- **ज्ञानीति** ॥ **आचारदर्शनादिति** ॥ अस्य भाष्यस्य सौत्रहेतुमात्रविवरणपरत्वेन नान्यत्रान्वयापेक्षा । एवमुत्तरत्र त्रिसूत्रीभाष्येऽपि ज्ञेयम् ॥ ३ ॥

ज्ञानकर्मणोरुभयोरपि स्वर्गादिसाधनत्वमस्तु ज्ञानस्य कर्मशेषत्वं कुत इति शङ्कावारणाय सूत्रम्-

## ॥ ॐ तच्छ्रुतेः ॐ ॥ ४ ॥

अतः शेषत्वमिति वर्तते । अयमर्थः- अतो ज्ञानस्य शेषत्वं कर्माङ्गत्वं तच्छ्रुतेः ज्ञानस्य कर्मशेषत्वपर 'यदेव विद्यया' इति श्रुतेरिति ॥ ज्ञानं कर्माङ्गमेवेति भावः ।

**यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्यवत्तरं भवति'(छा.१.१.१०) इति शेषत्वश्रुतेः ॥**

**भा.** ॥ तच्छ्रुतिमाहुः- '**यदेवेति** ॥ ४ ॥

कर्मण एव ज्ञानशेषत्वं किं न स्यादिति शङ्कावारणाय सूत्रम्-

## ॥ ॐ समन्वारम्भणात् ॐ ॥ ५ ॥

अतः शेषत्वमिति वर्तते । संशब्दः प्राधान्ये । आरम्भणमिति करणे ल्युट् । अयमर्थः - **समन्वारम्भणात्** स्वर्गादिकं प्रति कर्मण एव प्राधान्येनारम्भकत्वपर 'कर्मैव देहम्' इति श्रुतेः । अतो ज्ञानस्य शेषत्वं कर्माङ्गत्वमिति ॥ ज्ञानं कर्मसमं न नापि प्रधानमिति भावः ॥

---

१. **यदेवेति** ॥ (छा.१.१.१) यदेव कर्म श्रद्धया आस्तिक्यबुद्ध्या उपनिषदा स्वयोग्यज्ञानेन करोति तदेव कर्म वीर्यवत्तरम् अधिकफलसाधनं भवतीत्यर्थः ॥ ४ ॥

**'कर्मैव देहं दैविकं मानुषं वाऽप्यन्वारभेन्नापरस्तत्र हेतुः ।**
**भोगांस्तदीयांश्च यथाविभागं ददाति कर्मैव शुभाशुभं यत् ॥'**

**इति माठरश्रुतेश्च ॥ संशब्दः प्राधान्यं दर्शयति ॥ ५ ॥**

**भा.॥** श्रुतिमाहुः- [1]**कर्मैवेति** ॥ ननु सूत्रे कर्मप्राधान्यबोधकं पदं नास्तीत्यत आहुः- **संशब्द इति** ॥ (सूत्रार्थः स्पष्ट इति भावः) ॥ ५ ॥

**मुक्ताविव ज्ञानिकृतं कर्म लीलारूपं किं न स्यादिति शङ्कावारणाय सूत्रम्-**

**॥ ॐ तद्वतो विधानात् ॐ ॥ ६ ॥**

**अतः, शेषत्वमिति वर्तते । अयमर्थः- तद्वतो ज्ञानिनो विधानात् 'ज्ञानी च कर्माणि' इति श्रुत्या कर्मणः कर्तव्यत्वेन विधानात् अतो ज्ञानस्य शेषत्वं कर्माङ्गत्वमिति ॥ ज्ञानिकृतं कर्म न लीलारूपं श्रुतिविहितत्वादिति भावः ।**

**'ज्ञानी च कर्माणि सदोदितानि कुर्यादकामः सततं भवेत' इति कमठश्रुतौ ज्ञानवतोऽपि विधानात् ॥ ६ ॥**

**भा.॥** श्रुत्युपन्यासेन सूत्रं व्याचक्षते- [2]**ज्ञानी चेति** ॥ ६ ॥

**ज्ञानिकृतं कर्म न लीलारूपमकरणे प्रत्यवायश्रवणाच्चेत्यर्थबोधनाय सूत्रम्-**

**॥ ॐ नियमाच्च ॐ ॥ ७ ॥**

---

१. **कर्मैवेति ॥ शुभाशुभं** ज्ञानोत्तरकालिकं **यत् कर्म** तत्कर्मैव **दैविकं** देवलोके मनुष्याणामेव ज्योतिर्मयदेहं **मानुषं** वा देहं भूमौ प्रतिबन्धकयुक्तदेवानामेव उभयविधदेहं वा **अन्वारभेत्** कुर्यात् **अपरः** कर्मातिरिक्तः ज्ञानादिः **तत्र** उक्तशरीराद्युत्पादने **हेतुः** प्राधान्येन कारणं न भवति । **कर्मैव तदीयान्** देवमानुषीयान् भोगान् ददाति **कर्मैव** शुभाशुभफलं च ददाति । यथा विभागं योग्यतामनतिक्रम्येत्यर्थः ॥ ५ ॥

२. **ज्ञानीति ॥ ज्ञानी च** ज्ञान्यपि **उदितानि** शास्त्रोक्तानि **कर्माणि** सदा कुर्यात् सततमकामश्च भवेतेत्यर्थः ॥ ६ ॥

तद्वतः, अतः, शेषत्वमिति वर्तते । अयमर्थः- **तद्वतो** ज्ञानिनः **नियमाच्च** 'कुर्वन्नेवेह कर्माणि' इति श्रुत्या कर्मणि नियमितत्वाच्च अतो ज्ञानस्य शेषत्वं कर्माङ्गत्वमिति ॥

**'कुर्वन्नेवेह कर्माणि जिजीविषेच्छतꣳ समाः ।**
**एवं त्वयि नान्यथेतोऽस्ति न कर्म लिप्यते नरे ॥' (ई.२.) इति ।**

भा.॥ श्रुतिमाहुः- [१]कुर्वन्नेवेहेति ॥ नर इतीति ॥ अस्य नियमाच्चेति सूत्रेऽन्वयः ॥ ७ ॥

एवं जैमिनिमतमुक्त्वा स्वमतप्रतिपादनाय सूत्रम्-

## ॥ ॐ अधिकोपदेशात्तु बादरायणस्यैवं तद्दर्शनात् ॐ ॥ ८ ॥

एवमित्यनेन ज्ञानादेव सर्वपुरुषार्थ इति प्रथमसूत्रोक्तं परामृश्यते । तुर्विशेषे । मतमिति शेषः । अयमर्थः- **बादरायणस्य तु एवं** मतं ज्ञानादेव सर्वपुरुषार्थ इति मतम्, **अधिकोपदेशात्** अधिकस्य ज्ञानजन्यफले कर्मणातिशयस्य 'ज्ञानादेव स्वर्गः' इत्यादिश्रुतावुक्तत्वात् । **तद्दर्शनाच्च** तस्य ज्ञान जन्यफले कर्मणाऽतिशयस्य युधिष्ठिरादौ राजसूयादिना दृष्टत्वाच्चेति ॥

**'ज्ञानादेव स्वर्गो ज्ञानादेवापवर्गो ज्ञानादेव सर्वे कामाः सम्पद्यन्ते । अथापि यथा यथा कर्म कुरुते तथा तथाऽधिको भवति' इति कौण्ठरव्यश्रुतेः ॥**

**युधिष्ठिरादीनां राजसूयादिना फलाधिक्यदर्शनाच्चेति बादरायणमतम् ॥ ८ ॥**

भा. ॥ श्रुत्युपन्यासेन सूत्रार्थमाहुः- [३]**ज्ञानादेवेति** ॥ ८ ॥

कर्मणा ज्ञान एवातिशयो भवति न तु ज्ञानफले मोक्षे इति किं न स्यादिति शङ्कावारणाय सूत्रम्-

---

१. **कुर्वन्निति** ॥ (ईशा.२) यावत् **इह** मनुष्यादिजन्मनि **शतंसमा** शतं वर्षाणि **जिजीविषेत्** जीवितुमिच्छेत् तावत् **कर्माणि** स्वोचितानि **कुर्वन्नेव** कुर्यादेव आमरणं भगवत्पूजात्मकानि असङ्कल्पितफलानि स्वोचितानि कर्माणि सर्वदा कुर्यादिति यावत् । एवं कर्मकरणे त्वयि **कर्म न लिप्यते** । इतोऽन्यथा कर्माकरणे नरे ज्ञानिन्यपि त्वयि कर्म न लिप्यते इति नेत्यर्थः । ईशावास्यटीकायां तु एवं कर्माणि कुर्वन्ति नरे मनुष्यमात्रेऽपि पापं कर्म न लिप्यते इत्युक्तम् । पापालेपो नाम पूर्वकर्मनाशः उत्तरपापेनाबाध इति ज्ञेयम् ॥ ७ ॥

३. **ज्ञानादेवेति** ॥ **अपवर्गो** मोक्षः **कामाः** काम्याः यथायथा यद्यत् तथातथा तेन तेन कर्मणा अधिकः ज्ञानफलविषयेऽतिशयितो भवतीत्यर्थः । शिष्टं सुगमम् ॥ ८ ॥

## ॥ ॐ तुल्यं तु दर्शनम् ॐ ॥ ९ ॥

तुरेवार्थे । अर्थात्कर्मकृतौ चेति लभ्यते । अयमर्थः - दर्शनम् अपरोक्षज्ञानं कर्मणः कृतावकृतौ च तुल्यं तु सममेव । न तारतम्योपेतमिति ॥ ज्ञानं कर्मकृतावकृतौ च मोक्षजनकमेवेति भावः ।

**राजसूयादिकृतावकृतौ च सममेव तेषां विज्ञानम् ।**

**'विज्ञातमेतत्सर्वेषां मुनीनां ब्रह्मदर्शनात् ।**
**स्यादेव मोक्षो नान्यस्मादिति तत्रापि चित्रता ॥**
**स्वर्गादयः कर्मणैव नान्येनेत्यपरे विदुः ।**
**ज्ञानेनाऽधिक्यमित्याहुर्जैमिन्याद्यास्तु केचन ॥**
**अदृष्टमेव ज्ञानेन दृष्टं नैवोपलभ्यते ।**
**इति केचिद्विदः प्राहुर्व्यासशिष्या इमेऽखिलाः ॥**
**यस्माद्व्यासमतं सर्वं सत्यमेव ततोऽखिलम् ।**
**यथाऽऽकाशस्त्वनन्तोऽपि व्योमो हस्तावधिस्तथा ।**
**प्रादेशोऽपि हि सत्येन तथैतेषां मतानि तु ॥**
**स्वयं तु भगवान् व्यासो व्याप्तज्ञानमहांशुमान् ।**
**अनन्ताकाशवत्पश्यन्निखिलं पुरुषोत्तमः ॥**
**ज्ञानेनैवाऽप्यते सर्वं कर्मणा त्वधिकं भवेत् ।**
**इति प्राह महायोगी पुमर्थानां विनिर्णयम् ॥' इति भविष्यत्पर्वणि ।**

**'ज्ञानिनामपि देवानां विशेषः कर्मभिर्भवेत् ।**
**चीर्णेऽकृते वा ज्ञानस्य न विशेषोऽस्ति कर्मणि ॥' इति च ब्रह्मतर्के ॥**

॥ इति पुरुषार्थाधिरणम् ॥ १ ॥

भा. ॥ सूत्रं व्याचक्षते- राजसूयेति ॥ तेषां - युधिष्ठिरादीनाम् । नन्वेवं भगवन्मतजैमिनिमतयोर्विरोधः

प्राप्त इत्यत आहुः- [१]**विज्ञातमिति ॥ पर्वणीति ॥** मतविरोधः परिहृत इति शेषः । **तर्क इति ॥** तत्रेत्युक्तेश्च सममेव तेषां विज्ञानमिति सम्बन्धः ॥ ९ ॥ अ.१ ॥

**॥ इति पुरुषार्थाधिकरणम् ॥ १ ॥**

१. **विज्ञातमिति ॥** सर्वेषां मुनीनां व्यासशिष्याणां जैमिन्यादिमुनीनां ब्रह्मदर्शनादेव मोक्षः स्यादित्येवं विज्ञातं सम्मतम् । तत्रापि तेषां मतेष्वपि मोक्षान्यफलविषयेऽपि चित्रता नानाप्रकारमस्ति । वैचित्र्यं दर्शयति- **स्वर्गादय इति ॥** अपरे ऋषयः स्वर्गादयः कर्मणैव भवन्ति न कर्मशेषभूतज्ञानेनेति विदुः अङ्गीचक्रुः । इदं मतमपरोक्षज्ञानिषु मनुष्येषु येऽधमाः तत्कर्तृकज्ञानविषयम् । केचन जैमिन्याद्याः कर्मशेषभूतेनापरोक्षज्ञानेन आधिक्यं दृष्टादृष्ट-कर्मफले अतिशयमाहुः । इदं मनुष्योत्तमेषु मध्यमविषयम् । केचित्तु कर्मशेषभूतेन ज्ञानेन अदृष्टं स्वर्गादिकं सर्वमेवोपलभ्यते प्राप्यते न तु दृष्टं पुत्रवृष्टिधनादि इत्याहुः । इदं मतं योग्येषूत्तममनुष्यविषयं मध्यममनुष्यविषयं वा । यस्मादिमे एवं वदन्तः अखिला अपि व्यासशिष्याः तस्मादुक्तं सर्वं व्यासमतं तन्मतान्तर्भूतं ततोऽखिलं सत्यमेवाऽऽधिकारिभेदात् । यथाऽऽकाशोऽनन्तोऽपि सत्येन वर्तते व्यामः पुरुषप्रमाणः बाहुद्वयपरिमितो वा हस्तावधिः हस्तपरिमितः प्रदेशोऽपि सत्येन सत्यत्वेन वर्तते तथा तेषां ऋषीणां मतानि तु मतान्यपि साकल्येन सत्यानि । पुरुषोत्तमो भगवान् अनन्ताकशवदव्याकृताऽकाशवत् व्याप्तज्ञानमहांशुमान् महायोगी व्यासः निखिलं नानाविधं मतं पश्यन्नपि स्वमतत्वेनेति शेषः । ज्ञानेनैवापरोक्षज्ञाने नैव सर्वं स्वर्गादिकमाप्यते प्राप्यते कर्मणा ज्ञानोत्तरकर्मणा तु अधिकं भवेदित्येव देवताधिकारिकं पुमर्थानां पुरुषार्थानां विनिर्णयं निर्णायकमतं पृथक् स्वमतत्वेनाहेत्यर्थः । **ज्ञानिनामपीति ॥** ज्ञानिनां देवानां ज्ञानेन पुरुषार्थसिद्धावपि कर्मभिर्विशेष एव ज्ञानफले एवातिशयो भवेत् न तु ज्ञाने । यतः कर्मणि चीर्णेऽनुष्ठिते अकृतेऽननुष्ठिते वा ज्ञानस्याऽपरोक्षज्ञानस्य विशेषः पुरुषार्थसाधनसामर्थ्यं तदभावरूपातिशयो नास्ति अत इत्यर्थः ॥ ९ ॥ अ.१ ॥ सू.१० ॥

## २. असार्वत्रिकाधिकरणम् (अधिकाराधिकरणम्)

**(सर्वेषां ज्ञानेऽधिकारो नास्ति)**

**सर्वेषां पुरुषार्थापेक्षित्वाज्ज्ञानाधिकारितेत्यत आह–**

अत्र नये ज्ञानस्याऽसर्वाधिकारिकत्वमहिमासमर्थनम् । अन्यथा कर्मण इव ज्ञानस्य साधनातिशयत्वं न स्यात् तथाचोपासनापादो व्यर्थ इति तत्रत्यैर्नयैः सङ्गतिः । ज्ञानं विषयः । सर्वाधिकारिकं न वेति संशयः । साधनद्वैविध्यदर्शनं तद्बीजम् । सर्वाधिकारिकमिति पूर्वपक्षः ॥ पूर्वपक्षमाहुः- **सर्वेषामिति ॥ ज्ञानाधिकारितेति** ॥ स्त्रीलिङ्गनिर्देशः सूत्रानुसारी ॥

अत आह-

**॥ ॐ असार्वत्रिकी ॐ ॥ १० ॥**

अत इति वर्तते अधिकारितेति शेषः । अयमर्थः- **अतः** मोक्षसाधनज्ञाने श्रवणादौ च **अधिकारिता** अधिकारः **असार्वत्रिकी** सर्वजीववृत्तिर्न भवतीति ॥ किन्तु क्वचिदेव विद्यते इति भावः ॥

**न सर्वेषामधिकारः ॥**

भा. ॥ सूत्रार्थमाहुः- **न सर्वेषामिति** ॥ ज्ञाने इति शेषः ॥ १० ॥

अर्थित्वाविशेषात् कुतः सर्वेषामनधिकारितेति शङ्कावारणाय सूत्रम्-

**॥ ॐ विभागः शतवत् ॐ ॥ ११ ॥**

प्रामाणिकैरिष्यत इति शेषः । अयमर्थः- **शतवत्** परापरब्रह्माधिकदेवताशतस्यैव सोमाधिकार इति व्यवस्थावत् **विभागः** केषाञ्चिदेव ज्ञानेऽधिकार इति व्यवस्था इष्यते प्रामाणिकैः । 'नवकोट्योहि' इत्यादिप्रमाणानुसारिभिरिति ॥

**'नवकोट्यो हि देवानां तेषां मध्ये शतस्य तु ।**
**सोमाधिकारो वेदोक्तो ब्रह्मणी द्वे शताधिके ॥**

**यथा तथैवासङ्ख्येयाः प्रजास्तासु कियान् जनः ।**
**ज्ञानाधिकारी सम्प्रोक्तो विष्णुपादैकसंश्रयः ॥'**

**इति वचनात् सुखापेक्षसाम्येऽपि विभाग इष्यतेऽधिकारार्थम् ॥ ११ ॥**

भा.॥ सूत्रं व्याचक्षते - [1]**नवेति ॥** मोक्षेच्छावत्त्वं नाऽधिकारितावच्छेदकमिति भावः ॥ ११ ॥

एवं चेदधिकारितावच्छेदकं किमिति पृच्छन्ति- **कस्येति ॥ किं धर्मावच्छिन्नस्येत्यर्थः ।** उत्तरतया सूत्रं पठन्ति-

**कस्याधिकारः—**

**॥ ॐ अध्ययनमात्रवतः ॐ ॥ १२ ॥**

यथाशक्तीति शेषः । अतः, अधिकारितेति वर्तते । अयमर्थः- यथाशक्ति **अध्ययनमात्रवतः** कृत्स्नवेदाध्ययनकर्तुः पुरुषस्य अतो ज्ञानेऽधिकारितेति ॥

**'अवैष्णवस्य वेदेऽपि ह्यधिकारो न विद्यते ।**
**गुरुभक्तिविहीनस्य शमादिरहितस्य च ।**
**न च वर्णावरस्यापि तस्मादध्ययनान्वितः ।**
**ब्रह्मज्ञाने तु वेदोक्तेऽप्यधिकारी सतां मतः ॥' इति हि ब्रह्मतर्के ।**

**'पठेद्वेदानथाऽर्थानधीयीताथ विचार्य ब्रह्म विन्देत्' ॥ इति च कौषारवश्रुतिः ।**

॥ इत्यधिकाराधिकरणम् ॥ २ ॥

---

१. **नवेति ॥** नवकोट्यः नवकोटिसङ्ख्याकाः देवानां गणाः हि प्रसिद्धाः तेषां मध्ये शतस्य तु शतसङ्ख्याकदेवगणस्यैव सोमाधिकारः सोमद्रव्यकयागाधिकारः, सोमपानाधिकारो वा, शताधिके शतापेक्षयाऽधिके बहिर्भूते द्वे ब्रह्मणी विष्णुचतुर्मुखाख्ये तयोरपीति शेषः । सोमाधिकारो यथा तथैवासङ्ख्येयाः प्रजाः तासु कियान् कतिपयः विष्णुपादैकसंश्रयो जनो ज्ञानाधिकारी सम्प्रोक्त इत्यर्थः । शतदेवास्तु 'प्रधानवायुर्मरुतोऽश्विनौ च वस्वर्करुद्राः पितरो गुरुश्च । द्यावापृथिव्यौ वृषभोऽपि विश्वेदेवाः शतं सोमसवाधिकारिणः' इति ज्ञेयम् । अत्र पितृपतीनां त्रित्वं अश्विनोर्द्वित्वं सहस्रऋभूणामेकत्वं च विवक्षितम् ॥ ११ ॥

**भा.॥** ननु मोक्षेच्छावशादन्येषामध्ययनमपि स्यादित्यतः स्मृतिश्रुती आहुः- **'अवैष्णवस्येत्यादि ॥ श्रुतिरिति ॥** ब्रह्मतर्के इत्युक्तेः, यतः कौषारवश्रुतिरस्ति अतश्च 'अध्ययनमात्रवतोऽधिकारिते' इति सानुवृत्तिसूत्रेऽन्वयः ॥ १२ ॥ अ.२ ॥

**॥ इत्यसार्वत्रिकाधिकरणम् (अधिकाराधिकरणम्) ॥ २ ॥**

---

१. **अवैष्णवस्येति ॥ अवैष्णवस्य** विष्णुभाक्तिरहितस्य **गुरुभक्तिविहीनस्य शमादिरहितस्यापि** वेदे अपिना वैदिकेऽधिकारो न विद्यते । **वर्णावरस्यापि** शूद्रादेरपि वेदेऽधिकारो न वैदिके तन्त्रे तु अधिकारो वर्तते । एतद्भेदज्ञापनार्थमेव न चेति पृथक् निर्देशः तस्माद्विष्णुभक्त्यादिरहितस्य शूद्रादेश्च वेदेऽधिकाराभावात् **अध्ययनान्वितः वेदोक्ते** तज्जन्यब्रह्मज्ञानेऽधिकारी सतां मत इत्यर्थः । **पठेदिति ॥** वैष्णवः **वेदान् पठेत्** गुरूच्चारणमनूच्चारयेत् । **अथार्थानधीयीत** गुरुमुखाज्जानीयात् **अथ ब्रह्म** विचार्य मत्वा ध्यात्वा च तं **विन्देत्** अपरोक्षतो जानीयात् । अथ **ब्रह्म विन्देत्** प्राप्नुयादित्यर्थः ॥ १२ ॥ अ. २ ॥

## ३. नाविशेषाधिकरणम् (अधिकारविशेषाधिकरणम्)

**(सर्वेषामपि एकप्रकारेण ज्ञानाधिकारः न, किन्तु योग्यतातारतम्यानुसारेण)**

अत्र नये सम्पूर्णज्ञानाधिकारस्य दौर्लभ्यज्ञानायाधिकारस्य तारतम्यसमर्थनम् । सौलभ्येऽतिशयो न स्यादिति (उपासनातारतम्यकथनं व्यर्थमिति) पूर्ववत्सङ्गतिः । ज्ञानाधिकारो विषयः । सर्वेषामेकप्रकारेणोत नानाप्रकारेणेति संशयः । लौकिकसाधनेषूभयथा दर्शनं तद्बीजम् । एकप्रकारेणेति पूर्वपक्षः ॥

## ॥ ॐ नाऽविशेषात् ॐ ॥ १३ ॥

विशेषः तारतम्यं तद्विरुद्धं साम्यमविशेषः । अधिकारितेति वर्तते । अविशेषादित्यावर्तते । अयमर्थः- **अधिकारिता** ज्ञानेऽधिकारः **अविशेषात्** साम्येन न भवति **अविशेषात्** तथा सति ज्ञानस्याऽविशेषप्रसङ्गादिति ॥ तथा च 'प्रज्ञान्तर'(३.३.५२) इति सूत्रोक्तज्ञानतारतम्यं भज्येतेति भावः । विशेषादिति वक्तव्ये नञ्द्वयोपादानेन अविशेषादित्यस्याऽवृत्तिः सूचिता । प्रकृतेऽधिकारः यावदध्ययनभक्तिशमदमादिविष्णुपादैकसंश्रयत्वाभिव्यङ्ग्यो योग्यताविशेषः, अध्ययनादिरूपो वा ॥

**न सामान्येनाधिकारो देवादीनाम् । 'अथ पुमर्थसाधनान्यर्थो धर्मो ज्ञानमित्युत्तरोत्तरम् । तत्राधिकारिणो मनुष्या ऋषयो देवा इत्युत्तरोत्तरम्' इति हि कौण्डिन्यश्रुतिः ॥**

॥ इत्यधिकारविशेषाधिकरणम् ॥ ३ ॥

**भा.**॥ सूत्रं व्याचक्षते- **न सामान्येनेति** ॥ साम्येनेत्यर्थः । वैशिष्ट्यं तृतीयार्थः । अधिकारेऽन्वेति ॥ तारतम्ये श्रुतिमाहुः- **[1]अथेति** ॥ **श्रुतिरिति** ॥ यतः श्रुतिरस्ति अतो न सामान्येनेत्यन्वयः ॥ १३ ॥ अ.३ ॥

॥ इति नाविशेषाधिकरणम् (अधिकारिविशेषाधिकरणम्) ॥ ३ ॥

---

१. **अर्थेति** ॥ **अर्थो** वित्तं **धर्मः** सुकृतं **ज्ञानं** ब्रह्मदर्शनमित्येतानि त्रीणि पूर्वपूर्वमुत्तरोत्तरमपेक्ष्य पुमर्थसाधनानि मोक्षसाधनानि कामस्वर्गमोक्षसाधनानि वा क्रमेण । अर्थस्य धर्मद्वारा, धर्मस्य ज्ञानद्वारा ज्ञानस्य साक्षादेव मोक्षसाधनत्वमिति भावः । तत्र त्रिष्वपि साधनेषु मनुष्याः तदुत्तमाः ऋषयो देवाः अधिकारिणः तत्राप्युत्तरोत्तरमतिशयिताधिकारिण इत्यर्थः ॥ १३ ॥ अ.३ ॥

## ४. स्तुत्यधिकरणम् (कामचाराधिकरणम्)

**(ज्ञानिनामपि यथेष्टाचरणं न विहितम्, सत्कर्मानुष्ठानेन फलाधिक्यं भवति । अनियता तु देवाः, विरिञ्चिस्तु यथेच्छारणविधिमान्)**

**अथ मुनिरमौनं च मौनं च निर्विद्याथ ब्राह्मणः स ब्राह्मणः केन स्याद्येन स्यात्तेनेदृश एवेति (बृ.५.५.१)ज्ञानिनो यथेष्टाचरणं विधीयत इत्यत आह–**

अत्र नये ज्ञानिनोऽसत्प्रवृत्तावपि ज्ञानस्य मोक्षसाधनत्वरूपनियमसमर्थनम् । अन्यथा कर्मादिसाधनान्तरवैलक्षण्यं न स्यादिति व्यवहितपूर्वनयवत्सङ्गतिः । किञ्च मोक्षसाधनत्वाऽविशेषेऽपि ज्ञानस्य सदसत्प्रवृत्तिभ्यां मोक्षे विशेषाधायकत्वसमर्थनम् । अन्यथा 'पुरुषार्थ' (३.४.१) इति नये 'तद्वतो विधानात्' इत्यादिना कर्मावश्यकत्वकथनमयुक्तं स्यादिति तेन नयेन सङ्गतिः । ज्ञानं विषयः । तस्य सदसत्प्रवृत्तौ विशेषोऽस्ति न वेतिसंशयः । लोकदृष्टिः,'तुल्यन्तु'(३.४.९) इत्युक्तिश्च तद्बीजं, नेति पूर्वपक्षः । किञ्च प्रथमपक्षे ज्ञानं विषयः, असत्प्रवृत्तौ मोक्षं साधयति नवेति संशयः, 'अनियमस्सर्वेषाम्'(३.३.३२) इति नयः, लोके साधनस्य दोषसम्बन्धे स्वकार्याऽनिष्पादकत्वदर्शनं च तद्बीजं, नेति पूर्वपक्षः । अस्य सिद्धान्तो द्वितीयसूत्रेणोच्यते । (२०.सू.अ.) ॥ श्रुत्युपन्यासेन पूर्वपक्षमाहुः- [1]**अथ मुनिरिति ॥ ईदृश एवेतीति ॥** इत्यनेनेत्यर्थः । इयं श्रुतिः मुक्ताऽमुक्तज्ञान्युभयपरा तथैव बृहद्भाष्योक्तेः । अमुक्तज्ञानिविषये यथेष्टाचारव्यवस्थाऽर्थमधिकरणारम्भः । अमुक्तज्ञानिपरत्वाऽनङ्गीकारे 'तेनेदृश एव' इत्युत्तरवाक्येन मुक्तज्ञानिविषये ईदृश इति मुक्तत्वविधानं न स्यात् ।

## ॥ ॐ स्तुतयेऽनुमतिर्वा ॐ ॥ १४ ॥

शब्दात्, नाविशेषात्, तद्वतः, तु इति वर्तते । सदसत्प्रवृत्तिरिति अर्थाल्लभ्यते । यथायथमावृत्तिविपरिणामौ । अयमर्थः:- **तद्वतो** ज्ञानिनः सदसत्प्रवृत्त्या **अविशेषः** विशेषाऽभावो **न** विशेषोऽस्त्येवेति यावत् । **शब्दात्** 'केन स्यात्' इति श्रुतौ सदसत्प्रवृत्तिस्तु **स्तुतये** तु यथेष्टाचरणेऽपि ज्ञानस्य

---

१. **अथेति** ॥ (बृ.५.५.१) अथ पूर्ववाक्यस्थपाण्डित्यशब्दितश्रवणं, बाल्यशब्दितमननं च, प्राप्य अनन्तरं मुनिः ध्यानी भवति । मौनमुपासनाम् अमौनमपरोक्षज्ञानं च निर्विद्य नितरां लब्ध्वा अथ ब्राह्मणः जीवन्मुक्तो भवति तथोच्यते । स जीवन्मुक्तो येन केन सता वा असता वा प्रकारेण कर्माचरणेन स्यात् वर्तेत तेन यथेष्टाचरणेनापि ईदृश एव ज्ञानफलमोक्षं प्राप्त एव भवतीत्यर्थः । तावता तस्य मोक्षहानिर्नेति भावः ॥१४॥

**मोक्षसाधनत्वं न विहन्यत इति ज्ञानस्तुत्यर्थमेवोच्यते न विधीयते। अनुमतिर्वा अनुष्ठानयोग्यसत्कर्मणां मध्य एव कस्यचिदनुष्ठाने कस्यचित्परित्यागे अभ्यनुज्ञानमेव वेति। एवं च स्तुतिपक्षे ज्ञानिना यथेष्टाचरणं कर्तव्यमिति विधिर्न किन्तु स्तुतित्वात् स्वार्थे तात्पर्यं नास्तीत्येव कल्पनीयमिति भावः। अत्र पक्षे 'सम्भावनेऽलमिति चेत्सिद्धाऽप्रयोगे' इति सूत्रेण स्यादित्यत्र लिङ्। सम्भावनं शक्त्युत्कर्षमाविष्कर्तुमत्युक्तिः। अनुमतिपक्षे तु- 'विधिनिमन्त्रेण' इति सूत्रेणाऽमन्त्रणे लिङ्। आमन्त्रणं कामचाराऽनुज्ञा ॥**

**न विधिः ज्ञानिस्तुतये अनुमतिमात्रं वा। युज्यते च ॥**

भा.॥ सूत्रभावमाहुः- **न विधिरिति** ॥ यथेष्टाचरणमिति वर्तते न विधीयत इत्यर्थः। किन्त्विति शेषः। स्तुतये ज्ञानिस्तुत्यर्थमुच्यते। **अनुमतिमात्रं**- तन्मात्रविषयः। नन्वेवं ज्ञानिना विकर्म न कर्तव्यमेवेति सत्प्रवृत्तिसमुच्चितज्ञानस्यैव मोक्षसाधकत्वमिति च प्राप्तम्। तथा च 'अनियमः सर्वेषाम्' (३.३.३२) इत्यनेन ज्ञानिनां मोक्षो भवत्येवेति सिद्धान्तितं तद्भज्येत। प्रमादादिना विकर्मकरणे तदीयज्ञानस्याऽसत्प्रवृत्त्या कुण्ठितशक्तिकत्वेन मोक्षसाधनत्वाऽयोगादत आहुः- **युज्यते चेति** ॥ विशेषोऽत इति शेषः। अतः यथेष्टाचरणस्य स्तुत्यर्थत्वादनुमतिमात्रत्वाद्वा विशेषः सदसत्प्रवृतिभ्यां ज्ञानिनो विशेषो युज्यत इत्यर्थः। सत्प्रवृत्तावानन्देऽतिशयः, असत्प्रवृत्तौ ह्रास इति भावः। सत्प्रवृत्तिसमुच्चितपक्षस्तु- 'अत एवचाग्नि'(३.४.२५) इति सूत्रे निरसिष्यते। वाशब्दोऽधिकारिभेदेन व्यवस्थितविकल्पे। ननु समानविभक्तिकस्थले वाशब्दो विकल्पे दृष्टः तत्कथं स्तुत्यनुमत्योर्विकल्प इति चेन्न। तन्नियमाऽभावात्। किञ्च स्तुतित्वेन स्वार्थे तात्पर्याभावेऽनुमतिर्वेति न सम्भवतीति अनुमतिपदं व्यर्थमतो विरुद्धपक्षद्वयसिद्ध्या विकल्पोपपत्तेः ॥ १४ ॥

**नन्वसत्प्रवृत्त्या कुण्ठितशक्तिकज्ञानस्य मोक्षसाधनत्वं नेति शङ्कायाः कथं युज्यते चेति परिहार इति शङ्कावारणायसूत्रम्-**

**॥ ॐ कामकारेण चैके ॐ ॥ १५ ॥**

**चोऽप्यर्थे पुरुषार्थोऽत इति वर्तते। पुरुषार्थमिति विपरिणम्यते। अयमर्थः- एके शाखिनः कामकारेण च यथेष्टाचरणेनाऽपि यथेष्टाचरणे कृतेऽपीति यावत्। अतो ज्ञानात् पुरुषार्थं मोक्षं पठन्ति 'कामचारा' इति श्रुत्या प्रतिपादयन्ति इति। ज्ञानिनोऽसत्प्रवृत्तावपि मोक्षो नियत एवेति भावः ॥**

**कामचाराः कामभक्षाः कामवादाः कामेनैवेमं देहमुत्सृज्याथ परात्परमीयुरनारम्भणम्' इति (सामशाखा) चैके पठन्ति ॥**

भा.॥ सूत्रसूचितश्रुतिमाहुः- '[1]**कामचारा इति** ॥ एके सामशाखिनः । पठन्तीति ॥ इति श्रुत्या 'कामकारेण च' पुरुषार्थं पठन्तीति सूत्रेणैकवाक्यतयाऽन्वयः ॥ १५ ॥

**कैमुत्येनैतदर्थसमर्थनाय सूत्रम्-**

## ॥ ॐ उपमर्दं च ॐ ॥ १६ ॥

**एके, पुरुषार्थम्, अतः, पठन्तीति वर्तते । अयमर्थः- एके शाखिनः अतो ज्ञानेन उपमर्दं च प्रारब्धकर्मण ईषत्फलह्रासमपि पठन्ति 'ॐ इत्युच्चार्य' इति श्रुत्या प्रतिपादयन्तीति ॥ ज्ञानस्याऽनुभवैकाऽपोद्यप्रारब्धनाशकत्वे सम्भवति स्वसाध्यमोक्षजनकत्वमस्तीति किमु वक्तव्यमिति भावः । तथा चाऽसत्प्रवृतिः ज्ञानिनिष्ठमोक्षजनकत्वशक्तिकुण्ठिका न भवतीति ज्ञेयम् ॥**

**'ओमित्युच्चार्यान्तरिममात्मानमभिपश्योपमृद्य पुण्यं च पापं च काममाचरन्तो ब्रह्मानुव्रजन्ति' इति च तुरश्रुतौ ॥**

भा.॥ श्रुतिमाहुः- ॐ '[2]**इत्युच्चार्येति** ॥ **श्रुताविति** ॥ अस्य अनुवृत्त्यादिसहितसूत्रेऽन्वयः ॥ १६ ॥

**कामचारिज्ञानिनां मोक्षवत् कामचारिजिज्ञासूनामपि ज्ञानं भवतीति शङ्कावारणाय सूत्रम्-**

## ॥ ॐ ऊर्ध्वरेतस्सु च शब्दे हि ॐ ॥ १७ ॥

**च एवार्थे । उपदेशादित्यस्यानुवृत्तिविपरिणामौ । अयमर्थः- ऊर्ध्वरेतस्सु च ऊर्ध्वरेतस्त्वादि-**

१. **कामचारा इति** ॥ **कामचाराः** कामितकर्तारः **कामभक्षाः** कामितभक्षकाः **कामवादाः** कामितवक्तारः एवम्भूता अपि ज्ञानिन इति शेषः । कामेनेच्छया इमं कामनिर्मितं देहमुत्सृज्य त्यक्त्वा अनारम्भणमनादिभूतं परात्परं ब्रह्म ईयुः प्राप्नुयुरित्यर्थः ॥ १५ ॥

२. **ओमिति** ॥ मुक्तियोग्य ओमित्युच्चार्य श्रवणादिकं च कृत्वा अन्तःहृदयस्य, प्रतिमादेर्वा, अन्तः इमं परमात्मानम् अभिपश्य दृष्ट्वा प्रारब्धमनिष्टं पुण्यं पापं च किञ्चित् भुक्तं ज्ञानेनोपमृद्य फलह्रासेन विनाश्य कामं यथेष्टं सदसत्कर्माचरन्तोऽपि ब्रह्मानुव्रजन्ति प्राप्नुवन्त्येवेत्यर्थः ॥ १६ ॥

गुणवत्स्वेव उपदेशो ज्ञानोपदेशः **शब्दे** 'य इमं परमं गुह्यम्' इति श्रुतौ **हि** प्रसिद्धः कर्तव्यत्वेन विहित इति यावत् न तु कामचारिष्विति । तथाच कामचारिणां ज्ञानेऽधिकारो नेति भावः ॥

**न तावता कामचाराणां ज्ञानेऽधिकारः । 'य इमं परमं गुह्यमूर्ध्वरेतस्सु भाषयेत् । न तथा विद्यते भूयान्यं प्राप्यान्येऽपि भूयसः ॥' इति माठरश्रुतेः ॥ १७ ॥**

**भा.॥** साध्यांशमाहुः- **न तावतेति** ॥ कामचारिणामपि ज्ञानिनां मुक्तावधिकारोऽस्तीत्येतावते-त्यर्थः । **अधिकार इति** ॥ मन्तव्य इति शेषः । सौत्रशब्दपदोपात्तश्रुतिमाहुः- **'य इममिति** ॥ विशिष्टसूत्रार्थ ऊह्य इति भावः ॥ १७ ॥

एवं 'केन स्यात्' इति श्रुतेर्विधित्वमनङ्गीकृत्यार्थद्वयमुक्तम् अथ विधित्वमङ्गीकृत्यैव पूर्वोक्तानुमतिपक्षविलक्षणसदाचारमात्रविषयककामचारविधित्वप्रतिपादनाय सूत्रम्-

**॥ ॐ परामर्शं जैमिनिरचोदना चापवदति हि ॐ ॥ १८ ॥**

शब्दे, कामकारेणेति वर्तते । विकर्म, मन्यत इत्यर्थाल्लभ्यते । यथायथमावृत्तिविपरिणामौ । अयमर्थः- **हि** यतः **अचोदना** ज्ञानिना निषिद्धं कर्म कर्तव्यमेवेति विधिर्न **शब्दः** 'ब्राह्मणो न हन्तव्यः' इति श्रुतिः **विकर्म** पापं कर्म **अपवदति** च निषेधति च अतः **शब्देन** 'केन स्यात्' इति, 'कामचारा' इति च श्रुत्या **परामर्शं** 'प्रातरुत्थाय' इत्यादिश्रुत्युक्तसदाचारस्यैव ग्रहणपूर्वकं कामकारं स्वेच्छयैव कर्मानुष्ठानं विधीयत इति **जैमिनिः** आचार्यो मन्यत इति ॥ अत्र कामचारः स्वेच्छयास्वोचित-सर्वसत्कर्माऽनुष्ठानम् ॥

**'प्रातरुत्थाय सन्ध्यामुपासीत यत्सन्ध्यामुपासते ब्रह्मैव तदुपासतेऽथ देवान्नमेज्जुहुयाच्छेदानावर्तयीत नान्यत्किञ्चिदाचरेन्न सुरां पिबेन्न पलाण्डुं भक्षयीत न भृशं वदेन्न विस्मरेदाऽत्मानं सोमं पिबेद्धुतशेषेण वर्तयेत्' इत्युक्ताचारपरामर्शेन विधिबन्धवर्जितत्वेन कामत एव तस्य चरणं कामचार इति जैमिनिर्मन्यते ।**

१. **य इममिति** ॥ य इमं प्रकृतं गुह्यं गोप्यं परमं विष्णुम् ऊर्ध्वरेतस्सु ऊर्ध्वरेतस्त्वादिगुणवत्स्वेव भाषयेदुप-दिशेत् । तथा तद्वत् भूयान् श्रेष्ठो नास्ति । यमुपदेशकं प्राप्य स्थिताः शिष्यभावेनेति शेषः । कैमुत्य-द्योतकोऽपिः । अन्ये शिष्या अपि श्रेष्ठा भवन्तीत्यर्थः ॥ १७ ॥

**न च निषिद्धं कर्म कर्तव्यमेवेति चोदना । 'ब्राह्मणो न हन्तव्यः' ॥ इत्याद्यपवादश्च ॥**

**भा.॥** श्रुत्युपन्यासेन सूत्रार्थमाहुः- **'प्रातरुत्थायेति ॥** केन स्यादित्यत्र, कामचारा इत्यत्र चेति शेषः । विधिबन्धवर्जितत्वेन- विध्युक्ताऽननुष्ठानप्रयुक्तप्रत्यवायशून्यत्वेन । तस्यैव- उक्तसदाचारस्यैव । न त्वसदाचारस्य । कामत एव- स्वेच्छयैव । न तु तद्विधिबद्धत्वेन । चरणम्-आचरणम् । कामचारः- कामचारपदार्थः । **न चेति ॥** च यतः चोदना नास्ति अपवादश्च वर्तते अत इति जैमिनिर्मन्यत इत्यन्वयः । नन्विदं सूत्रं मनुष्यविषयकं मनुष्यास्तु विधिनियताः तत्त्वं च विध्युक्ताननुष्ठाने प्रत्यवायवत्त्वं तत्कथमुच्यते विधिबन्धवर्जितत्वेनेति चेन्न । प्रत्यवायो द्विविधः । अधःपातहेतुः, मोक्षेऽतिशयप्रतिबन्धकश्चेति । तत्राद्यो नास्ति मुक्तियोग्यानाम् । तदभिप्रायेण 'विधिबन्धवर्जितत्वेन' इत्युक्तम् । द्वितीयस्तु स्यादेव विध्युक्ताननुष्ठाने । तदभिप्रायेण विधिनियता मनुष्या इत्युच्यते इत्यङ्गीकारात् । **'²ब्राह्मणो न हन्तव्यः'** इति सामान्यविधिः । अयं ज्ञानिविषयेऽपि प्रवर्तते । तत्राऽप्रवृत्तौ मानाभाव इति भावः । अत्र पक्षे 'केन स्यात्' इति श्रुतौ आमन्त्रणे लिङ् । किंशब्दो यच्छब्दश्च बुद्धिस्थसदाचारार्थकः । वाक्यद्वयबलात् वीप्सालाभेन यावत्कर्मानुष्ठानसिद्धिरिति ज्ञेयम् ॥ १८ ॥

**अनुमतिपक्षस्पष्टीकरणाय सूत्रम्-**

## ॥ ॐ अनुष्ठेयं बादरायणः साम्यश्रुतेः ॐ ॥ १९ ॥

**इति, शब्दात्, अर्थे इत्येकदेशश्च वर्तते । सूत्रारम्भसामर्थ्यात् यत्किञ्चिदिति लभ्यते । यथायथमावृत्तिविपरिणामौ । अनुष्ठेयेत्यत्र कृत्यप्रत्ययोऽर्हार्थे, आमन्त्रणे च वर्तते 'अर्हे कृत्यतृचश्च, प्रैषातिसर्गप्राप्त-**

---

१. **प्रातरिति ॥** उत्थायेत्यनन्तरं शौचादिस्नानं कृत्वेति शेषः । सन्ध्याशब्दार्थमाह- ब्रह्मैवेति ॥ **'सन्ध्यामुपासते' इति यत्** जनकर्तृकसन्ध्याकर्मकं यदुपासनं तत् ब्रह्मैवोपासते ब्रह्मकर्मकोपासनमेव । **देवान्** प्राच्यादिदिग्वस्थितान् ब्रह्मेन्द्रादीन् नमेत् जुहुयादग्निहोत्रादीन् कुर्यात्, वेदानावर्तयीत, शब्दतोऽर्थतश्चाभ्यसेत्, **अन्यत्** निषिद्धं, तदेव विवृणोति- न सुरामिति ॥ पलाण्डुं लशुनं, **भृशं** निष्ठुरम् **आत्मानं** परमात्मानं, **सोमं** सोमरसं **हुतशेषेण** पुनःपुनः होमानुष्ठानेन तच्छेषं तदा तदा भक्षयेदित्यर्थः । शिष्टं स्पष्टम् ॥

२. **ब्राह्मण इति ॥** स्पष्टम् ॥ १८ ॥

कालेषु कृत्याश्च' इति सूत्रद्वयबलात् । अयमर्थः- **बादरायण** आचार्यः शब्दस्य 'केन स्यात्' इति श्रुतेः अनुष्ठेयं अनुष्ठानयोग्यं यत्किञ्चित्सत्कर्म **अनुष्ठेयं** कामेनाऽचरणीयमित्यर्थं मन्यते साम्यश्रुतेः । 'तेनेदृश एव' इति उत्तरवाक्ये यत्किञ्चित्कर्मानुष्ठाने यत्किञ्चित्कर्मानुष्ठानाऽभावे च फलसाम्यश्रवणादिति । 'यस्त्वात्मरतिरेव स्यात्' इति भगवद्वचनाच्चेत्यपि ग्राह्यम् ।

**अनुष्ठेयानां मध्य एव कामतश्चरणं कामतो निवृत्तिरिति बादरायणो मन्यते ।**

**'केन स्याद्येन स्यात्तेनेदृश एव' (बृ.५.५.१) इति साम्यश्रुतेः ॥**

**'यस्त्वात्मरतिरेव स्यादात्मतृप्तश्च मानवः ।**

**आत्मन्येव च सन्तुष्टस्तस्य कार्यं न विद्यते ॥' (भ.गी.३.१)**

**इति भगवद्वचनाच्च ॥ १९ ॥**

भा.॥ (सूत्रं व्याचक्षते- **अनुष्ठेयानामिति** ।) **कामत इति** । कस्यचित्कर्मण इति शेषः । **निवृत्तिरिति** ॥ कस्यचित्कर्मणो नानुष्ठानमित्यर्थः श्रुत्यर्थ इतीति शेषः । (साम्यप्रतिपादकश्रुतिमाहुः- [1]**केन स्यादिति** ॥) ननु विहितपरित्यागे न्यूनतैव स्यान्नसाम्यमित्यत आहुः- [2]**यस्त्विति** ॥ ज्ञानिनः कर्तव्यं नास्त्येवेति साम्यमुपपद्यत इति भावः ॥ १९ ॥

**'केन स्यात्' इति श्रुतेः सदसत्कर्मसाधारण्येन स्वेच्छाचरणविधित्वप्रतिपादनाय सूत्रम्-**

## ॥ ॐ विधिर्वा धारणवत् ॐ ॥ २० ॥

**शब्दाद्बादरायणो मन्यत इति वर्तते । शब्द इति प्रथमया विपरिणम्यते । वाशब्दो व्यवस्थितविकल्पे । अयमर्थः- शब्दः 'केन स्यात्' इति श्रुतिः । धारणवत् 'स्वाध्यायोऽध्येतव्यः' इति**

---

१. **केनेति** ॥ सूत्रार्थवर्णनेनैव इयं व्याख्याता ॥

२. **यस्त्विति** ॥ (गी.३.१७) यो मानवो ज्ञानी आत्मरतिः परमात्मदर्शनजन्यसुखप्राप्तः आत्मतृप्तः परमात्मप्रसादेन विषयालम्बुद्धिमान् । अलंबुद्धौ हेतुत्वेन पूर्वोक्तमेवाह- **आत्मनीति** ॥ **आत्मन्येव** परमात्मन्येव स्थितः सन् **सन्तुष्टः** परमात्मदर्शननिमित्तकमहासुखवान् **तस्य कार्यम्** अवश्यकर्तव्यं कर्म न विद्यते इत्यर्थः। यद्यपीदं तात्पर्यं मुक्तपरतया, तद्भाष्ये च समाधिस्थपरतया, व्याख्यातं तथाऽपि ज्ञानित्वस्य सर्वत्र सत्त्वात् ज्ञानिसामान्यपरत्वेऽपि बाधकाभावः ॥ १९ ॥

वेदाध्ययनविधिवत् **विधिर्वा** भवेत् इति बादारायण आचार्यो मन्यते इति ॥ अत्र पक्षे विधावेव लिङ् स्वेच्छाचरणे पर्यवसानात् स्वेच्छाचरणविधित्वं बोध्यम् ॥

**'केन स्याद्येन स्यात्' इति विधिर्वा । यथा वेदधारणं त्रैवर्णिकानां विहितं नान्येषाम्,**

**एवं स्वमतानुसारिणी प्रवृत्तिर्ज्ञानिनां विहिता । न तत्राधर्मशङ्का कार्या । नान्येषामिति वा ।**

**'स्वेच्छयैव प्रवृत्तिस्तु ब्रह्मणो विधिचोदिता ।**
**नाऽशङ्क्यं तन्मतं क्वापि विष्णोः प्रत्यक्षचोदना ।**
**इतरेषां न विहिता स्वेच्छावृत्तिः कथञ्चन ॥' इति हि ब्राह्मे ॥ २० ॥**

भा.॥ (श्रुत्युपन्यासपूर्वं सूत्रं व्याचक्षते- [1]**केन स्यादिति** ॥ **विहितेति** ॥ अस्य नान्येषामिति वेत्यत्रान्वयः (येन स्यादिति विधिर्वेत्यस्य विवरणरूपत्वात्पुनर्वाशब्दः)ननु ज्ञानिनां स्वेच्छाचरण-विधानेऽधर्मकरणमपि स्यादत आहुः- **न तत्रेति** ॥ अधर्मशङ्का - तत्करणशङ्का । तत्रमानमाहुः- [2]**स्वेच्छयैवेति** ॥ ब्राह्मे इति ॥ तत्रेत्युक्तेरित्यर्थः ॥ २० ॥

उक्तमाक्षिप्य समाधानाय सूत्रम्-

**॥ ॐ स्तुतिमात्रमुपादानादिति चेन्नाऽपूर्वत्वात् ॐ ॥ २१ ॥**

शब्दो विधिस्तद्वत इति वर्तते । पूर्वं कारणम् अपूर्वं कार्यम् । यद्वा अः ब्रह्म पूर्वं कारणं यस्य तस्य भावोऽपूर्वत्वम् । यथायथं विपरिणामः । अयमर्थः- **शब्दः** 'केन स्यात्' इति श्रुतिः **स्तुतिमात्रं** स्वेच्छाचरणविधित्वेन स्तुतिरेव न तु स्वेच्छाचरणविधिः **तद्वतां** ज्ञानिनामपि **विधेः** ज्ञान्यज्ञानिसाधारण 'प्रातरुत्थाय' इत्यादिविधेः **उपादानात्** स्वीकारात् इति **चेन्न** । **अपूर्वत्वात्**

---

१. **केनेति** ॥ अत्र पक्षे स्यादिति विधौ लिङ् ॥

२. **स्वेच्छयैवेति** ॥ यतश्चतुर्मुखस्य **स्वेच्छयैव प्रवृत्तिः विधिचोदिता** विधिविहिता यतश्च **विष्णोः प्रत्यक्षचोदना** एवं कुर्वित्याज्ञाऽस्ति अतः तन्मतं तदभिप्रेतं पुत्रिकाकामनादि अधर्मत्वेन कदाऽपि नाशङ्क्यम् । इतरेषां चतुर्मुखेतरेषां स्वेच्छावृत्तिर्न विहिता कदाऽपीत्यर्थः ॥ २० ॥

**ज्ञानिनो ब्रह्मकार्यत्वात् तदधीनत्वादिति यावत् इति ॥ तथा च चतुर्मुखस्याऽपि ज्ञानित्वाविशेषात् 'प्रातरुत्थाय' इत्यादिविधेः स्वीकार्यत्वेनोक्तश्रुतिश्चतुर्मुखविषयेऽपि स्तुतिपरैव न तु स्वेच्छाचरण-विधिरिति पूर्वपक्षिणो गूढाऽभिप्रायः । सिद्धान्तिनस्तु चतुर्मुखविषये प्रातरुत्थायेत्यादिविधेः स्वीकारे चतुर्मुखस्येतरज्ञानिवैलक्षण्यानापत्त्या 'विधीनां विषयास्त्वन्ये' इति प्रमाणविरोधेन च चतुर्मुखविषये तादृशविधिर्नास्ति । पूर्वपक्ष्युक्तरीत्या स्वेच्छाचरणविधेरप्यभावे सर्वविध्यतिदूरत्वप्रसङ्गेन प्रमाण-सिद्धेशाधीनत्वं न स्यात् । विधिबद्धत्वे हि पराधीनत्वमतः सा श्रुतिः चतुर्मुखविषये स्वेच्छाचरण-विधिरेव । तथा चायं प्रयोगः- ज्ञानी पराधीनो न विध्यबद्धत्वात् परमात्मवत् । न चाऽचेतने व्यभिचारः। चेतनत्वे सतीति हेतोर्विशेषणात् । एवमपि विध्यबद्धे मुक्ते व्यभिचार इति न वाच्यम् । मुक्ते सामान्यविध्यस्वीकारेऽपि भगवत्प्रीत्यर्थं स्वेच्छाचरणविधेः स्वीकारात् । अन्यथा स्वेच्छया मुक्तौ (कर्म) करणं न स्यात् स्वेच्छाचरणविधिविषयत्वं च अकरणे प्रत्यवायाऽभावेऽपि शास्त्रविहितत्वाद् भगवत्प्रीत्यर्थं मया कार्यमित्यनुसन्धानविषयत्वमिति ॥**

**स्तुतिमात्रमेव स्वेच्छाचरणं न विधिः । तैरपि सामान्यविधिस्वीकारादिति चेन्न । अपूर्वत्वात् परवशत्वात् । सर्वविध्यतिक्रमेण स्तुतिमात्रविषयत्वं परब्रह्मण एव हि ।**

**'विधीनां विषयास्त्वन्ये ब्रह्मणः स्वेच्छया कृतौ ।**
**परस्य ब्रह्मणो ह्येव सर्वविध्यतिदूरता ॥' इति ब्रह्मतर्के ॥ २१ ॥**

भा.॥ सूत्रं व्याचक्षते- **स्तुतिमात्रमिति** ॥ मात्रपदव्याख्यानमेवेति ॥ मात्रपदव्यावर्त्यमाहुः- **न विधिरिति** ॥ न विधीयत इत्यर्थः । कर्मणि किप्रत्ययः । तैरपि- ज्ञानिभिरपि । **सामान्य-विधीति** ॥ अज्ञानिज्ञान्युभयसाधारण 'प्रातरुत्थाय' इत्यादि विधीत्यर्थः । स्वेच्छाचरणविधौ च तदयोगादिति भावः । सिद्धान्तमाहुः- **नेति** ॥ चतुर्मुखविषये उपादानादि(तिही)त्यंशः स्तुति-मात्रमिति सिद्धान्तांशोऽपि नेत्यर्थः । किन्तु तद्विषये स्वेच्छाचरणविधिरेवेति गम्यते । अत्रैवार्थे हेतुः- **अपूर्वत्वादिति** ॥ ननु ब्रह्माधीनत्वेऽपि सर्वविध्यतिक्रमेण स्तुतिविषयत्वं ज्ञानिनां किं न स्यादत आहुः- **सर्वेति** ॥ हीत्यनन्तरं ज्ञानिनां सर्वविध्यतिक्रमेण स्तुतिमात्रविषयत्वम् । परवशेति वर्तते । परवशानामिति विपरिणम्यते । अयमर्थः- **हि** यतः परब्रह्मण एव सर्वविध्यतिक्रमेण स्तुतिमात्रविषयत्वं

नाऽन्यस्य अतः परवशानां ज्ञानिनां सर्वविध्यतिक्रमेण स्तुतिमात्रविषयत्वं नेति ॥ ननु ज्ञानिनां स्वेच्छाचरणविध्यभावेऽपि सामान्यविधिसद्भावान्न सर्वविध्यतिदूरत्वमित्यत उक्तार्थे स्मृतिं चाहुः- [1]**विधीनाम्** इति ॥ **ब्रह्मतर्क** इति ॥ तत्रेत्युक्तेरित्यर्थः ॥ २१ ॥

**चतुर्मुखस्य स्वेच्छाचरणे स्फुटप्रमाणसूचनाय सूत्रम् -**

**॥ ॐ भावशब्दाच्च ॐ ॥ २२ ॥**

**शब्दो विधिरिति वर्तते । अयमर्थः- शब्दः 'केन स्यात्' इति श्रुतिः विधिः ज्ञानिनां स्वेच्छाचरणविधिः भावशब्दाच्च इच्छापर्यायभावशब्दघटित 'यथाविधानम्' इति श्रुतेश्चेति ॥ चशब्दः पूर्वसूत्रोपात्तापूर्वत्वादिति हेतोः समुच्चये । पूर्वसूत्रे ज्ञानिविषये स्तुतिनिषेधे सति अर्थसिद्धः स्वेच्छाचरणविधिरित्युक्तम् ।**

**'यथाविधानमपरे विधिर्भावे प्रजापतेः ।**
**ब्रह्मणः परमस्यैव सर्वविध्यतिदूरता' ॥ इति च तुरश्रुतौ ॥**

भा.॥ सूत्रोपात्तश्रुतिमाहुः- [2]**यथाविधानमिति** ॥ **तुरश्रुताविति** ॥ श्रुतौ भावशब्दाच्चेति सूत्रेण सम्बन्धः । श्रुतौ भावशब्दसत्त्वाच्चेत्यर्थः । अस्य सौत्रपदार्थमात्रविवरणरूपत्वेन नान्यत्रान्वयापेक्षा ॥ २२ ॥

**॥ ॐ पारिप्लवार्था इति चेन्न विशेषितत्वात् ॥ ॐ ॥ २३ ॥**

शब्दः, तद्वतोऽत, इति वर्तते । **परिप्लवाश्चञ्चलाः त एव पारिप्लवाः ते अर्था येषां ते इति बहुव्रीहिः। यथायथमावृत्तिविपरिणामौ । अयमर्थः- शब्दाः 'प्रातरुत्थाय' इति, 'यस्त्वात्मरतिरेव स्यात्' इति, 'यथाविधानम्' इति श्रुतिस्मृतयः पारिप्लवार्थाः चञ्चलार्थाः परस्परविरुद्धार्था इति यावत् । अतः शब्दाः**

---

१. **विधीनामिति** ॥ विधीनां विधिनिषेधानां विषयाः अन्ये तु ज्ञानिनः स्वेच्छया कृतौ करणे ब्रह्मणः ज्ञानिनः विषयत्वं हि यतः परस्य ब्रह्मणो विष्णोरेव सर्वविध्यतिदूरता सर्वविध्युल्लङ्घनमत इत्यर्थः ॥ २१ ॥

२. **यथाविधानमिति** ॥ यतो परे ब्रह्मेतरज्ञानिनः वस्तुतो मनुष्यज्ञानिनः यथा विधानं नित्यनैमित्तिक-विधिमनतिक्रम्य वर्तन्ते इति शेषः । **प्रजापतेः** ज्ञानिनः वस्तुतस्तु विरिञ्च्यादिदेवानां भावे स्वेच्छाचरणविषये विधिः येन स्यादित्यादिविधिरस्ति अतः परस्यैव ब्रह्मणः सर्वविध्यतिदूरतेत्यर्थः ॥ २२ ॥

एतदेकवाक्यतापन्न 'केन स्यात्' इति श्रुतीयवाक्यानि **पारिप्लवार्थाः** स्युरिति **चेन्न** । शब्दे 'त्रेधा हि' इति गौपवनश्रुतौ तद्वतो ज्ञानिनः **विशेषितत्वात्** विधिनियतत्वादिविशेषणवत्तया प्रतिपादनादिति ॥ एतत्सूत्रतात्पर्यमुत्तरसूत्रे स्फुटीभविष्यति ॥

**'केन स्याद्येन स्यात्' (बृ.५.५.१) इत्यादयः स्थिरत्वनिवृत्त्यर्था इति चेन्न । 'त्रेधा हि ज्ञानिनो ह वाव भवन्ति विधिनियता अनियताः स्वेच्छानियताः' इति । विधिनियता मनुष्या अनियता हि देवा ब्रह्मैव स्वेच्छानियत इति गौपवनश्रुतौ विशेषितत्वात् ॥ २३ ॥**

भा.॥ श्रुतिमुपन्यस्याऽऽक्षेपांशं व्याचक्षते- [1]**केन स्यादिति** ॥ स्थिरत्वनिवृत्त्यर्था इति ॥ स्थिरत्वस्य निवृत्तिरभावो येषु ते स्थिरत्वनिवृत्तयः तेऽर्था येषामिति बहुव्रीहिः । स्युरिति शेषः हेतौ श्रुतिमाहुः- [2]**त्रेधा हीति** ॥ २३ ॥

पूर्वसूत्रेण किं समाधानमुक्तमासीदिति शङ्कावारणाय सूत्रम्-

**॥ ॐ तथा चैकवाक्योपबन्धात् ॐ ॥ २४ ॥**

शब्दाः, पारिप्लवार्था, नेति वर्तते । यथायथमावृत्तिविपरिणामभावप्राधान्यानि । अयमर्थः- **तथा च** ज्ञानित्रैविध्ये सिद्धे च **शब्दानां** 'प्रातरुत्थाय' इत्यादिश्रुतिस्मृतीनाम् **एकवाक्यत्वोपबन्धात्** एकवाक्यत्वस्य अधिकारिभेदेनाऽविरुद्धार्थकत्वस्य सम्भवात् **शब्दाः** 'प्रातरुत्थाय' इत्यादिश्रुत्यादयः पारिप्लवार्था नेति ॥

**एवं सति विधिवाक्यानां स्वेच्छावृत्तिवाक्यानां च सम्बन्धो भवति ॥ २४ ॥**

**भा.॥** सूत्रार्थमाहुः- **एवमिति** ॥ ज्ञानित्रैविध्ये सिद्धे इत्यर्थः । **विधिवाक्यानां**- 'प्रातरुत्थाय'

---

१. **केनेति** ॥ व्या. (पृ. १९४)

२. **त्रेधा हीति** ॥ विधिनियता विधिबन्धवर्जितत्वेन कामत एव नियमेन विहिताचरणवन्त इति दीपिका । वस्तुतो विधिनियताः विध्युक्तस्वोचितसर्वकर्माणि कुर्वाणाः, अनियता अनुष्ठेयानां मध्ये कामचारानुज्ञावन्तः, स्वेच्छानियता विधिबन्धवर्जितत्वेऽपि स्वेच्छयैवेश्वरतुष्ट्यर्थं सर्वविध्युक्तसर्वकर्माणि कुर्वाणा इत्यर्थः । शिष्टं सुगमम् । स्वेच्छानियता इत्यत्र बहुवचनं कल्पभेदेन विरिञ्चानां बहुत्वाभिप्रायेण ॥ २३ ॥ २४ ॥

इत्यादिविधिवाक्यानां, **स्वेच्छावृत्तिवाक्यानां** 'यस्त्वात्मरतिः' इति स्वेच्छाचरणानुज्ञावाक्यानां, 'यथाविधानम्' इति स्वेच्छारणविधिवाक्यानां च, सम्बन्धोऽविरोध इत्यर्थः । तथा च 'केन स्यात्' इति वाक्यस्यापि अविरोधः सिद्ध इति भावः । एवं च जैमिनिमतं मनुष्यविषयकम्, अनुज्ञामतं देवविषयं, तृतीयं तु हिरण्यगर्भविषयमित्युक्तं भवति ॥ २४ ॥

**सत्प्रवृत्तिसमुच्चितज्ञानस्यैव मोक्षसाधनत्वमिति शङ्कावारणाय सूत्रम्-**

**॥ ॐ अत एव चाग्नीन्धनाद्यनपेक्षा ॐ ॥ २५ ॥**

**अग्नेरिन्धनं दीपनं यस्मिन् कर्मणि तदग्नीन्धनमग्निहोत्रं तदादिर्येषां तेषामनपेक्षेति विग्रहः । चः स्मृतिसमुच्चये । अत इति वर्तते । अयमर्थः- अत एव कामचारिज्ञानिनामपि मोक्षस्य पठितत्वादेव अतः ज्ञानस्य अग्नीन्धनाद्यनपेक्षा मोक्षजनकत्वविषये अग्निहोत्रादिसत्कर्मापेक्षा न, चेन 'येषां ज्ञानं समुत्पन्नम्' इति स्मृतेश्चेति ॥**

**अत एव ज्ञानस्य मोक्षदाने नाग्निहोत्राद्यपेक्षा । ब्रह्मतर्के च–**

**'येषां ज्ञानं समुत्पन्नं तेषां मोक्षो विनिश्चितः ।**
**शुभकर्मभिराधिक्यं विपरीतैर्विपर्ययः ॥**
**स्वेच्छानुवृत्त्यैव भवेद्ब्रह्मणः प्रायशस्तथा ।**
**देवानामपि सर्वेषां विशेषादुत्तरोत्तरम् ॥' इति ।**

भा.॥ सूत्रार्थमाहुः- **अत एवेति** ॥ उक्तार्थे स्मृतिमाहुः- ब्रह्मतर्के च - **[1]येषामिति** ॥ **उत्तरमितीति** ॥ ब्रह्मतर्के इत्युक्तेश्चेत्यर्थः ॥ २५ ॥

**ज्ञानस्य मोक्षजनकत्वविषये असत्प्रवृत्तेरप्रतिबन्धकत्वेऽपि सत्प्रवृत्तेः प्रयोजकत्वमस्तु किं सत्प्रवृत्त्या मोक्षोत्तरमाधिक्यकल्पनेनेति शङ्कावारणाय सूत्रम्-**

---

१. **येषामिति** ॥ तेषां शुभाशुभकर्मकरणाकरणयोरपीति शेषः । विपरीते अशुभकर्मकरणे विपर्यय आनन्दह्रासो भवेत् ब्रह्मणश्चतुर्मुखस्य स्वेच्छानुवृत्त्यैवाधिक्यं मुक्तावपेक्षितसर्वाधिक्यं भवेत् । तथा सर्वेषां देवानामपि चतुर्मुखेतरदेवानामपि उत्तरोत्तरं विशेषादाधिक्यानुसारेण प्रायशः स्वेच्छानुवृत्त्यैवाधिक्यं मुक्तौ क्रमसुखाधिक्यं भवेदित्यर्थः । तदर्थं प्रायः कर्माद्यनुष्ठानं नावश्यकमिति भावः । शिष्टं सुगमम् ॥ २५ ॥

**॥ ॐ सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत् ॐ ॥ २६ ॥**

अत इति वर्तते । गतावित्यर्थाल्लभ्यते । च एवार्थे । अयमर्थः- **गतौ च** गमनोत्पत्तावेव **अश्ववत्** अश्वापेक्षावत् अतश्च ज्ञानोत्पत्तावेव **सर्वापेक्षा** सर्वसत्कर्मापेक्षा यज्ञादिश्रुतेः । यज्ञदानादिशब्दघटित 'विविदिषन्ति यज्ञेन दानेन' इत्यादिश्रुतेरिति ॥ यथा गतिनिष्पत्यर्थमेवाश्वाद्यपेक्षा न तु ग्रामादिप्राप्तौ गमनेनाऽन्यथासिद्धत्वात् तथा सत्कर्मणो ज्ञानजनने एवापेक्षा न तु मोक्षजनने ज्ञानेनाऽन्यथा सिद्धत्वादिति भावः । ग्रामप्राप्तिः ग्राम संयोगः गमनं तु तदनुकूलो व्यापार इति भेदः ।

**सर्वधर्मापेक्षाया च ज्ञानस्योत्पत्तौ । 'विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन (बृ.६.४.२२) इति श्रुतेः । यथा गतिनिष्पत्त्यर्थमश्वादयोऽपेक्ष्यन्ते न विनिष्पन्नगतेर्ग्रामादिप्राप्तौ ॥ २६ ॥**

**भा.॥** सूत्रं व्याचक्षते- **सर्वापेक्षाचेति** ॥ च एवार्थे । उत्पत्तौ चेति सम्बध्यते । (यज्ञादिसर्वधर्मा ज्ञानोत्पत्तावेवापेक्ष्यन्त इत्यत्र) श्रुतिमाहुः- [1]**विविदिषन्तीति** ॥ ज्ञानार्थस्याऽपि सत्कर्मणो मोक्षार्थत्वमपि किं न स्यादत आहुः- **यथेति** ॥ २६ ॥

ननु ज्ञानेनैव मोक्षस्तदभावे तदभावश्चेत्सत्कर्म कर्तव्यमसत्कर्म त्याज्यमिति नियमो न स्यात् मोक्षेऽतिशयोऽपि ज्ञानादेव भवत्विति शङ्कावारणाय सूत्रम्-

**॥ ॐ शमदमाद्युपेतः स्यात्तथाऽपि तु तद्विधेस्तदङ्गतया तेषामवश्यानुष्ठेयत्वात् ॐ ॥ २७ ॥**

तद्वत इति वर्तते । तुःपूर्णफलत्वद्योतकः । यथायथमावृत्तिविपरिणामौ । अयमर्थः- **तथाऽपि** ज्ञानेन मोक्षस्य नियतत्वेऽपि विद्वान् ज्ञानी **शमदमाद्युपेतः स्यात्** तद्वतो ज्ञानिन उद्दिश्येति शेषः । **तद्विधेः तेषां** शमदमादीनाम् 'आचार्याद्विद्यामवाप्य' इत्यादिश्रुत्या विधानात् **तेषां** शमदमादीनां **तदङ्गतया** ज्ञानाङ्गतया तु प्रतिदिनं ज्ञानस्य स्वाश्रययोग्यपूर्णफलजनकत्वयोग्यतावृद्ध्यर्थमिति यावत् । **अवश्यानुष्ठेयत्वादिति** । तथा च मोक्षार्थमग्निहोत्रादिप्रधानकर्मानपेक्षत्वेऽपि स्वप्रतिष्ठापकत्वेन ज्ञानकर्मसाधारणाङ्गभूतशमादिकमाश्रयणीयमेवान्यथाऽल्पफलं स्यादिति भावः ।

---

१. **विविदिषन्तीति** ॥ (बृ.६.४.२२) यज्ञेन दानेन तपसा । नाशकेन अनशनेन विविदिषन्ति ज्ञातुमिच्छन्ति तं ब्राह्मणा इत्यर्थः ॥ २६ ॥

**यद्यपि ज्ञानेनैव मोक्षो नियतस्तथाऽपि ज्ञानी शमदमाद्युपेतः स्यात् । 'आचार्याद्विद्यामवाप्यैतमात्मानमभिपश्यन् शान्तो भवेद्दान्तो भवेदनुकूलो भवेदाचार्यं परिचरेत्परिचरेदाचार्यम्' इति माठरश्रुतौ ज्ञानिनोऽपि तद्विधेः ॥**

**'ब्राह्मीं वाव त उपनिषदमब्रूमेति तस्यै तपो दमः कर्मेति प्रतिष्ठा वेदाः सर्वाङ्गानि सत्यमायतनम् । यो वा एतामुपनिषदमेवं वेद' (केन. ४.७,८,९) इति ज्ञानाङ्गतया तेषामवश्यानुष्ठेयत्वात् ॥**

**'यस्य ज्ञानं तस्य मोक्ष इति नात्र विचारणा ।**
**तस्य शान्त्यादयोऽङ्गानि तस्मात्तेषामनुष्ठितिः ।**
**अवश्यकरणीया स्यादन्यथाऽल्पफलं भवेत् ॥' इति आग्नेये ॥**

**तुशब्दः पूर्णफलार्थत्वं सूचयति ॥ २७ ॥**

भा.॥ सूत्रं व्याचक्षते- **यद्यपीति** ॥ विधायकश्रुतिमाहुः- [1]**आचार्यादिति** ॥ ननु ज्ञानादेव मोक्षे सिद्धे किं शमादिना तद्विधिना चेत्यत आहुः- [2]**ब्राह्मीमिति** ॥ **वेदेतीति** ॥ इत्युक्तत्वादित्यर्थः । शमादेर्ज्ञानप्रतिष्ठापकत्वेन न तद्विधिवैयर्थ्यमिति भावः । प्रतिष्ठा च प्रतिदिनं ज्ञानस्याऽभिवृद्धिः । प्रतिष्ठयाऽपि किमित्यत आहुः- [3]**यस्येति** ॥ **आग्नेये इति** ॥ तत्रेत्युक्तेरित्यर्थः । पूर्णफलत्वं सूत्रारूढं कुर्वन्ति- **तुशब्द इति** ॥ २७ ॥

---

१. **आचार्यादिति** ॥ आचार्योपदेशात् विद्यामपरोक्षज्ञानं प्राप्य एतं हृदिस्थं परमात्मानम् अभिपश्य दृष्ट्वा शान्तो भगवन्निष्ठबुद्धिमान्, दान्त इन्द्रियनिग्रहवान्, अनुकूलः सतामिति शेषः परिचरेत् सेवेत । अभ्यासस्तात्पर्यार्थः। यद्वा द्वितीयमाचार्यपदमाचार्यसदृशमित्यर्थकमित्यर्थः ।

२. **ब्राह्मीमिति** ॥ (तल.४.७.९) ते तुभ्यं ब्राह्मीं परब्रह्मविषयामुपनिषदं तत्स्वरूपमिति यावत् । अब्रूम तस्यै विद्यायाः तपः कृच्छ्रचान्द्रायणादि शास्त्रप्रवचनं वा दम इन्द्रियनिग्रहः कर्म वर्णाश्रमोचितं प्रतिष्ठा तद्धेतुः तपआदिकं विद्याप्रतिष्ठापकमिति हृदयम् । वेदा ऋगादयः तदनुकूलग्रन्थाश्च सर्वाङ्गानि शीक्षादीनि षट् सत्यं मीमांसासत्यभूतवस्तुनिर्णायकत्वात् आयतनमुत्पत्तिकारणं विद्यायाः योऽधिकारी एतामुपनिषदं वेद सोऽधिकारी अनन्ते अपरिच्छिन्ने स्वर्गे स्वरूपभूतसुखात्मके लोके प्रकाशमाने ज्येये परे ब्रह्मणि प्रतितिष्ठतीत्यर्थः ॥

३. **यस्तेति** ॥ तस्याऽपरोक्षज्ञानस्याङ्गानि अभिवृद्धिकारणानि तस्मादङ्गत्वादित्यर्थः । स्पष्टमन्यत् ॥२७॥

ननु ज्ञानिनः सदसत्प्रवृत्तिभ्यां विशेषश्चेत्तस्य निषिद्धान्नभोजनेऽपि 'यदि ह वा अप्येवंवित्' इति ह्रासाभावोक्तिः कथमतो न तस्य ताभ्यां विशेष इति शङ्कावारणाय सूत्रम् -

**॥ ॐ सर्वान्नानुमतिश्च प्राणात्यये तद्दर्शनात् ॐ ॥ २८ ॥**

तद्वतः शब्दे इति वर्तते । अयमर्थः- शब्दे 'यदि ह वाव अप्येवं विन्निखिलं भक्षयीत' इति श्रुतौ **तद्वतो** ज्ञानिनः **सर्वान्नानुमतिश्च** निषिद्धान्नभक्षणाभ्यनुज्ञानं तु **प्राणात्यये** विषये **तद्दर्शनात्** तस्य प्राणात्ययकाले निषिद्धान्नभक्षणस्य 'इमानखादन्' इति श्रुतौ दृष्टत्वादिति ॥

**'यदि हवा अप्येंविन्निखिलं भक्षयीतैवमेव स भवति' इति सर्वान्नानुमतिः प्राणात्ययविषया । 'न वा अजीविष्यमिमानखादन्निति होवाच कामो म उदपानम्' (छा.१.१०.४) इति तद्दर्शनात् ॥**

भा.॥ श्रुत्युपन्यासपूर्वं सूत्रं व्याचक्षते- **'यदि हेत्यादिना** ॥ २८ ॥

अनापद्यपि ज्ञाने बाधसद्भावात् असत्प्रवृत्तिः कार्येति शङ्कावारणाय सूत्रम्-

**॥ ॐ अबाधाच्च ॐ ॥ २९ ॥**

तद्वत इति वर्तते । प्रकृतत्वादसत्प्रवृत्तिरिति लभ्यते । अयमर्थः- च किञ्च तद्वतो ज्ञानिनोऽसत्प्रवृत्तिर्न कार्येति शेषः । **अबाधात्** अकरणे ज्ञाने बाधविरहादिति ॥

---

१. **यदीति** ॥ एवमुक्तप्रकारेण ब्रह्मवित् यदि निखिलं निषिद्धाऽनिषिद्धरूपं सर्वं भक्षयीत तदाऽपि स एवमेव मुक्त एव भवति न तु ह्रसते इत्यर्थः । न वा इति ॥ (छा.१.१०.४) चक्रायणापत्यमुषस्तिर्नामा ऋषिः शिलावृष्ट्यादिना हतं स्वस्थानं कुरुदेशं विहाय जायया सह इभ्यग्रामे वसन् कुल्माषान् खादन्तं कञ्चनेभ्यं कुल्माषान् मे देहीति ययाचे । स इभ्यः उच्छिष्टान् कुल्माषान् दत्वा जलं पिबेत्युवाच । अथ उषस्तिः एतत् जलं त्वदुच्छिष्टं अतो न पिबामीत्यवोचत् । तत् इभ्य एते कुल्माषा उच्छिष्टा हि कथमखादीरिति प्रोवाच । तत उषस्तिः प्राह- **न वा इति** ॥ अहं यदीमान् कुल्भाषान् नाखादं तर्हि नाजीविष्यम् । प्राणात्ययकाले उच्छिष्टादिभक्षणेऽपि न दोष इति हृदयम् । उदपानमुदकपानं मे मम काम इच्छाधीनमित्यर्थः । प्राणात्ययसमयाभावादुदकं न पिबामीति भावः ॥ २८ ॥

**'अन्याय्यचरणाभावे न हि ज्ञानस्य बाधनम् ।**
**अतो विद्वानपि न्याय्यं वर्तेतोत्कर्षसिद्धये ॥' इति च ब्रह्मतर्के ॥**

भा.॥ स्मृत्यैव सूत्रं व्याचक्षते- '**अन्याय्ये इति ॥ तर्क इति ॥** उक्तादिति शेषः । सूत्रेऽस्याऽन्वयः ॥ २९ ॥

असत्प्रवृत्तिः कार्या निषेधाभावात् इति शङ्कावारणाय सूत्रम्-

**॥ ॐ अपि स्मर्यते ॐ ॥ ३० ॥**

असत्प्रवृत्तिः न कार्या तद्वत इति वर्तते । अयमर्थः- **तद्वतो** ज्ञानिनः **असत्प्रवृत्तिर्न कार्या** इति **स्मर्यतेऽपि** 'अतीताऽनागतज्ञानी' इति स्मृत्या प्रतिपाद्यते इति ॥

**'अतीतानागतज्ञानी त्रैलोक्योद्धरणक्षमः ।**
**एतादृशोऽपि नाऽचारं श्रौतं स्मार्तं परित्यजेत् ॥' इति हरिवंशेषु ॥ ३० ॥**

भा.॥ स्मृतिमाहुः- [२]**अतीतेति ॥ हरिवंशेष्विति ॥** अस्य सूत्रेऽन्वयः ॥ ३० ॥

असत्प्रवृत्तिर्न कार्येति श्रुत्याऽपि प्रतिपादनाय, असत्प्रवृत्तौ दोषबोधनाय च, सूत्रम्-

**॥ ॐ शब्दश्चातोऽकामचारे ॐ ॥ ३१ ॥**

तद्वतोऽसत्प्रवृत्तिर्न कार्येति वर्तते । अतश्शब्दोऽल्पफलकत्वपरः । चस्यावृत्तिः । अयमर्थः- **च** यस्मात् **अकामचारे** कामचाराभावे असत्प्रवृत्त्यकरणे इति यावत् । **शब्दश्च** 'स य एतदेवम्' इति श्रुतिश्चास्ति तस्मात् **अतश्च** अल्पफलत्वाच्च तद्वतोऽसत्प्रवृत्तिर्न कार्येति ॥

**'स य एतदेवंविदेवं मन्वान एवं पश्यन्न कामचरितं चरेन्न कामं भक्षयीत न काममनुवर्तेत' इति कौण्डिन्यश्रुतौ । अत इत्यल्पफलत्वं सूचयति । 'न निषिद्धानि वर्तेत पूर्णज्ञानफलेच्छया' इति च पाद्मे ॥ ३१ ॥**

---

१. **अन्याय्येति** ॥ हि यतः **अन्याय्याचरणाभावे** निषिद्धचरणाभावे ज्ञानस्य बाधनं न विद्यतेऽतो विद्वानपि निषिद्धं त्यजेदिति शेषः । उत्कर्षसिद्धये न्याय्यं वर्तेत अनुतिष्ठेदित्यर्थः ॥ २९ ॥

२. **अतीतेति** ॥ आचारं भावरूपमभावरूपं चाचारमित्यर्थः । शिष्टं स्पष्टम् ॥ ३० ॥

**भा.**॥ सूत्रोपात्तश्रुतिमाहुः- [1]**स य एवमिति** ॥ अत इत्यस्यार्थमाहुः- **अत इतीति** ॥ तत्र स्मृतिमाहुः- [2]**न निषिद्धानीति** ॥ **पाद्म इति** ॥ उक्तमिति शेषः । अल्पफलत्वेऽन्वयोऽस्य । तथा च सूत्रत्रयभाष्यस्य सूत्रेणैकवाक्यतयेत्थमन्वयः- अबाधात्, यतः स्मर्यते अल्पफलत्वं च सूचयति अतः, श्रुतावित्युक्तेश्च, असत्प्रवृत्तिर्न कार्येति शेष इति ॥ ३१ ॥

**नन्वेवं ज्ञानिनो निषिद्धाचरणं मास्तु फलह्रासभयात्, सत्कर्माचरणमपि प्रयोजनाऽभावान्मास्तु, मोक्षस्तु ज्ञानादेव सिद्ध इति शङ्कावारणाय सूत्रम्-**

**॥ ॐ विहितत्वाच्चाश्रमकर्माऽपि ॐ ॥ ३२ ॥**

**अपिर्वर्णधर्मसमुच्चये । तद्वत इति वर्तते । कार्यमिति शेषः । अयमर्थः- तद्वतो ज्ञानिनः विहितत्वाच्च 'पश्यन्नपि' इत्यादिकौषारवश्रुतौ विधानाच्च आश्रमकर्माऽपि वर्णाश्रमधर्मः कार्यमिति ॥**

**न केवलं निषिद्धाकरणेन पूर्यते । कर्तव्यं च वर्णाश्रमविहितं कर्म ।**

**'पश्यन्नपीममात्मानं कुर्यात्कर्माविचारयन् ।**
**यदात्मनः सुनियतमानन्दोत्कर्षमाप्नुयात् ॥'**

**इति कौषारवश्रुतौ विहितत्वाच्च ।**
**अपिशब्दो वर्णधर्मसमुच्चयार्थः ॥ ३२ ॥**

**भा.** ॥ सूत्रं व्याचक्षते- **न केवलमिति** ॥ विधायकश्रुतिमाहुः- [3]**पश्यन्नपीति** ॥ ३२ ॥

---

१. **स इति** ॥ योऽधिकारी एतत् ब्रह्म एवमुक्तगुणवत्त्वेन वित् श्रोता एवं मन्वानः मन्ता ध्याता पश्यन् साक्षात्कारी आस्ते स कामचरितं कामगम्यं न चरेत् । कामं यथेच्छं न भक्षयीत कामं काम्यं नानुवर्तेत नानुसरेदित्यर्थः ।

२. **न निषिद्धानीति** ॥ पूर्णज्ञानफलेच्छया पूर्णं यत् ज्ञानफलं तदिच्छया यो वर्तेत स निषिद्धानि न वर्तेत नानुतिष्ठेदित्यर्थः ॥ ३१ ॥

३. **पश्यन्निति** ॥ इमं हृदयादिगतं **आत्मानं** परमात्मानं **पश्यन्नपि** अपरोक्षज्ञान्यपि **अविचारयन्** असंशयानः **आत्मनः** स्वस्य **यत् सुनियतं** वर्णाश्रमोचितं तत् कर्म **कुर्यात्** तेनेति शेषः कर्मकरणेनानन्दोत्कर्षमाप्नुयादित्यर्थः ॥ ३२ ॥

**विहितत्वेऽपि सत्कर्म ज्ञानिना न कार्यं फलाभावात् ह्रासकारणाभावेन पूर्णफलस्य स्वत एव सिद्धेः । फलमस्ति चेत् ज्ञानकर्मसमुच्चयवादापत्तिरिति शङ्कावारणाय सूत्रम्-**

**॥ ॐ सहकारित्वेन च ॐ ॥ ३३ ॥**

आश्रमकर्मापि तद्वतः कार्यमिति वर्तते । परस्परसमुच्चये सूत्रद्वये च शब्दद्वयम् । अयमर्थः- तद्वतो ज्ञानिनः आश्रमकर्मापि **सहकारित्वेन** च कार्यमिति ॥

**'यथा राज्ञः सहकार्येव मन्त्री तथाऽप्यृते तं क्षितिपः कार्यमृच्छेत् ।**
**एवं ज्ञानं कर्म विनाऽपि कार्यं सहायभूतं न विचारः कुतश्चित् ॥'**
**इति कमठश्रुतौ सहकारित्वोक्तेश्च ॥**

**'ज्ञानान्मोक्षो भवत्येव सर्वाकार्यकृतोऽपि तु ।**
**आनन्दो ह्रसतेऽकार्याच्छुभं कृत्वा च वर्धते ॥' इति च ब्रह्माण्डे ।**
**'सर्वदुःखनिवृत्तिश्च ज्ञानिनो निश्चितैव हि ।**
**उपासया कर्मभिश्च भक्त्या चाऽनन्दचित्रता' ॥ इति च बृहत्तन्त्रे ।**
**'धर्मस्वरूपचित्रत्वाद्यो यो देवमनोगतः ।**
**स एव धर्मो विज्ञेयो न ह्येते लोकसम्मिताः ॥' इति च पाद्मे ॥ ३३ ॥**

**भा.॥** सूत्रस्थं पदं श्रुत्या व्याचक्षते - [1]**'यथेति** ॥ अत्र स्मृतिं चाहुः- [2]**ज्ञानादिति** ॥ **ब्रह्माण्ड इति** ॥ सहकारित्वोक्तेरिति ... न्धः । सम्पूर्णानन्दप्राप्तौ कर्मसहकृतज्ञानं साधनं चेत् ज्ञान-कर्मसमुच्चयवादापत्तिः सम्पूर्णानन्दानुभवमन्तरेण मोक्षस्वरूपस्य ज्ञानमात्रसाध्यस्य पृथगभावादित्यत

---

१. **यथेति** ॥ यद्यपि क्षितिपः तं मन्त्रिणं ऋतेऽपि कार्यं राज्यकार्यम् ऋच्छेत्प्राप्नुयादेव तथाऽपि मन्त्री राज्ञः सहकार्येव सम्पूर्णकार्यसिद्धिविषये भवति यथा एवं तद्वत् यद्यपि ज्ञानं कर्म विनाऽपि कार्यं मोक्षं साधयेदेवेति शेषः । तथाऽपि कर्म सम्पूर्णफलसाधने सहायभूतं फलाधिक्यहेतुत्वात् । अत्र विचारणा कुतश्चित्कारणादपि क्वापि काले न कार्येत्यर्थः ।

२. **ज्ञानादिति** ॥ **अकार्यं** निषिद्धकर्म कृत्वेति स्थितस्येति शेषः । स्पष्टमन्यत् ।

आहुः- [1]**सर्वेति ॥** ज्ञानमात्रसाध्यो मोक्षो दुःखनिवृत्तिरूपः अतो ज्ञानसाध्यापेक्षयाऽतिशयः पृथगिति भावः । **बृहत्तन्त्र इति ॥** तत्रेत्युक्तेरित्यर्थः । उपपन्नाया इति शेषः । सहकारित्वोक्ते-रित्यत्रान्वयः । ब्रह्मादीनां पुत्रिकाकामनाद्यसत्प्रवृत्त्यानन्दह्रासाभावात् असत्प्रवृत्त्याऽऽनन्दह्रास इत्युक्तमयुक्तमित्यत आहुः- [2]**धर्मेति ॥ पाद्म इति ॥** सत्कर्मस्वरूपमुक्तमिति शेषः । सूत्रार्थः स्पष्ट इति भावः ॥ ३३ ॥ अ.४ ॥

**॥ इति स्तुत्यधिकरणम् (कामचाराधिकरणम्) ॥ ४ ॥**

---

१. **सर्वदुःखेति ॥** सर्वदुःखनिवृत्तिः स्वानुबन्धिसर्वदुःखनिवृत्तिः । इदमुपलक्षणं बहुतरानन्दानुभवस्यापि इति **दीपिकायाम्** । **कर्मभिः** ज्ञानोत्तरकर्मभिः । **आनन्दचित्रता,** इदमुपलक्षणं पूर्णानन्दानुभवस्यापीति **दीपिकायाम्** इत्यर्थः । शिष्टं स्पष्टम् ॥

२. **धर्मेति ॥** धर्मस्वरूपचित्रत्वात् शुभकर्मस्वरूपाणां विचित्रत्वात् देवमनोवृत्त्या कर्तव्यतया विषयीकृतः यो यः स स एव धर्मो विज्ञेयः । हि यत एते देवा लोकसम्मिताः इतरजनसदृशा न भवन्ति अत इत्यर्थः । धर्मस्वरूपवैचित्र्यं नाम यो देवादीनां धर्मः स मनुष्याणामधर्मः योऽन्येषामधर्मः स देवानां धर्म इत्येतद्रूपमिति ज्ञेयम् ॥ ३३ ॥ अ. ४ ॥

## ९. उभयलिङ्गाधिकरणम्

**(श्रवणमननादिषु यत्नवतामपि ज्ञानयोग्यानामेव ज्ञानं जायते)**

अत्र नये अधिकाराऽभावेऽपि गुरूपसत्त्यादिमहाप्रयत्नेन ज्ञानं भवतीति शङ्कावारणाय ज्ञानस्य मुक्त्यधिकारिभिरेव प्राप्यत्वसमर्थनम् । अन्यथा 'यावदधिकारम्' (३.३.२०) इति नयोक्तमुक्तिस्थितेरनादियोग्यतानुसारित्वं भज्येतेति तेन(नयेन) सङ्गतिः । ज्ञानं विषयः । अधिकारिमात्रप्राप्यं न वेति सन्देहः । उभयथाऽपि लोके दर्शनं तद्बीजम् । नेति पूर्वपक्षः ॥

### ॥ ॐ सर्वथाऽपि तु त एवोभयलिङ्गात् ॐ ॥ ३४ ॥

ज्ञानार्थकोऽतः पदं वर्तते । प्राप्नुवन्तीति शेषः । तुः अयोग्या विपरीतज्ञानमिति विशेषेऽस्ति । अयमर्थः- **सर्वथाऽपि** देशकालगुरूपसत्त्याद्यङ्गोपेतश्रवणादिरूपमहाप्रयत्नेऽपि **त एव** प्रसक्तज्ञानयोग्या एव **अतः** ज्ञानं प्राप्नुवन्ति न त्वयोग्याः । **तु** अयोग्या विपरीतज्ञानं प्राप्नुवन्ति **उभयलिङ्गात्** 'य आत्मा अपहतपाप्मा' इत्यादिश्रुतौ योग्यायोग्ययोः इन्द्रविरोचनयोः गुरूपसत्तिपूर्वकचतुर्मुखकर्तृकोपदेशसाम्येऽपि सुज्ञानदुर्ज्ञानप्राप्तिरूपोभयविधलिङ्गदर्शनादिति ॥

**सर्वप्रकारेणोत्साहेऽपि ये ज्ञानयोग्यास्त एव ज्ञानं प्राप्नुवन्ति नान्ये । 'य आत्माऽपहतपाप्मा विजरो विमृत्युर्विशोकोऽविजिघत्सोऽपिपासः सत्यकामः सत्यसङ्कल्पः सोऽन्वेष्टव्यः स विजिज्ञासितव्यः' (छा.८.७.३) इति श्रुत्याऽऽचार्योपदेशसाम्येऽपि विरोचनो विपरीतज्ञानमापेन्द्रः सम्यग्ज्ञानमित्युभयविधलिङ्गात् ॥ ३४ ॥**

**भा.॥** सूत्रार्थमाहुः- **सर्वप्रकारेणेति** ॥ प्रकारोऽङ्गं तृतीयार्थो वैशिष्ट्यम् । उत्साहः- श्रवणादिरूपः प्रयत्नः । सर्वाङ्गोपेतप्रयत्नेऽपीत्यर्थः । श्रुतिमाहुः- [१]**य आत्मेति** ॥ **इति श्रुत्येति** ॥ इत्यादिश्रुत्येत्यर्थः । आदिना 'य एषोऽन्तरक्षिणि पुरुषः' इत्यादेर्ग्रहणम् । तृतीयार्थोऽभेदः उपदेशेऽन्वेति ॥ **आचार्योपदेश इति** ॥ आचार्यकर्तृकेत्यादिश्रुत्यभिन्नोपदेशेत्यर्थः । विपरीतज्ञानमपहतपाप्मत्वादिगुणविशिष्टं वस्तु अक्षिस्थप्रतिबिम्बमिति ज्ञानम् । सम्यक् ज्ञानमुक्तं वस्तु अक्षिस्थो हरिरिति ज्ञानमित्यर्थः । अत्र गुरूपसत्त्यादिप्रकारः (छा.८) प्रपाठके स्पष्टः ॥ ३४ ॥

---

१. **य आत्मेति** ॥ व्या.(सं.१. पृ. २२९) ॥ ३४ ॥

महाप्रयत्नेन विश्वामित्रस्य क्षत्रियत्वापगमपूर्वकं ब्राह्मणत्वप्राप्तिवत् अयोग्यानामपि अयोग्यतानिवृत्तिपूर्वकं योग्यताप्राप्तिर्भवतीति शङ्कावारणाय सूत्रम्-

**॥ ॐ अनभिभवं च दर्शयति ॐ ॥ ३५ ॥**

चः स्वभावस्येत्यनुक्तसमुच्चये । शब्द इति वर्तते । अयमर्थः- **शब्दः** 'दैवीमेव सम्पत्तिम्' इति श्रुतिः स्वभावस्य स्वभावभूतयोग्यताऽयोग्यतयोः **अनभिभवम्** अनपगमं दर्शयतीति । क्षत्रियत्वादेः स्वाभाविकत्वेनाऽपगमेऽपि अयोग्यतायाः स्वाभाविकत्वेनानपगमात् तेषां कदाऽपि सुज्ञानं नास्तीति भावः ।

**'दैवीमेव सम्पत्तिं देवा अभिगच्छन्त्यासुरीमेव चासुरा नैवैतयोरभिभवः कदाचित्स्वभाव एव ह्यवतिष्ठते' इति स्वभावानभिभवं च दर्शयति ॥ ३५ ॥**

भ. ॥ श्रुत्युपन्यासेन सूत्रभावमाहुः- '**दैवीमिति** ॥ **इतीति** ॥ इति श्रुतिरित्यर्थः ॥ ३५ ॥

अथापि मध्यममानुषाणां महाप्रयत्नेन ज्ञानं भवत्विति शङ्कावारणाय सूत्रम्-

**॥ ॐ अन्तरा चाऽपि तु तद्दृष्टेः ॐ ॥ ३६ ॥**

चोऽवधारणे । तुर्विशेषे । अन्तरा इत्यनेन स्वसम्बन्धित्वेन सर्वथाऽपीत्यत्र प्रकृतसम्यग्ज्ञान-विपरीतज्ञाने उपस्थाप्येते । तदिति लुप्तविभक्त्यन्तं भिन्नं पदं स्थितानामिति शेषः । स्वभावस्याऽनभिभवमिति वर्तते । यथायथमावृत्तिविपरिणामौ । अयमर्थः- सम्यग्ज्ञानविपरीतज्ञाने **अन्तरा** तयोर्मध्ये स्थितानामपि सम्यग्ज्ञानविपरीतज्ञानमध्यस्थमिश्रज्ञानवतामपि स्वभावस्य मिश्रज्ञानयोग्यताया अनभिभवश्च अनपगम एव तेषां मिश्रमतीनां तस्मिन् मिश्रज्ञान एव तस्य दार्ढ्यस्य तु विशेषेण **दृष्टेः** दर्शनादिति ॥ तथा च तेषामपि सुज्ञानं नेति भावः ।

**सम्यग्ज्ञानविपरीतज्ञानयोरन्तरा स्थितानामपि देवासुरभावयोर्दार्ढ्यदृष्टेः ॥**

भा. ॥ सूत्रातात्पर्यमाहुः— **सम्यग्ज्ञानविपरीतज्ञानयोरिति** ॥ 'अन्तराऽन्तरेण युक्ते' इति सूत्रेण

---

१. **दैवीमिति** ॥ देवा मुक्तियोग्याः दैवीमेव मुक्तियोग्यतारूपामेव सम्पत्तिं स्वभावमभिगच्छन्ति एतयोर्देवासुरस्वभावयोरभिभवोऽपायः कदाचिदपि नास्ति । हि किन्तु स्वभाव एवावतिष्ठते अवतिष्ठन्ते देवासुरा इत्यर्थः । यद्वा स्वभाव एवावतिष्ठते जागरूको भवतीत्यर्थः ॥ ३५ ॥ ३६ ॥

द्वितीयाप्राप्तावपि 'कचिदपवादविषयेऽपि उत्सर्गोऽभिनिविशते' इति न्यायेन षष्ठी । अन्तरा - मध्ये । देवासुरभावयोः- देवासुरधर्मयोः सुज्ञानदुर्ज्ञानयोः । अन्तरेति वर्तते । उक्तज्ञानद्वयमध्यस्थ-मिश्रज्ञानेत्यर्थः । ननु मिश्रज्ञानस्य ज्ञानद्वयमध्यस्थत्वं कथमिति चेत् उच्यते । सात्विकं राजसस्तामसमिति गणनायां प्रसिद्धायां मिश्रज्ञानस्य राजसत्वात् । ज्ञानद्वयमध्यवृत्तित्वम् । यद्वा लोकेऽस्मिन्विषयेऽयं मध्यस्थ इत्यादौ तदीयकोटिद्वयग्राहकत्वे सति तद्व्यवस्थापकत्वेन मध्यस्थत्ववत् प्रकृते ज्ञानद्वयकोटिविषयकत्वमात्रेण मध्यस्थत्वमिति ॥ ३६ ॥

**देवादीनां नियततत्स्वभाववत्त्वे किं मानमिति शङ्कावारणाय सूत्रम्-**

**॥ ॐ अपि स्मर्यते ॐ ॥ ३७ ॥**

**तेषां स्वभाव इति वर्तते । अपिना फलम् (इति लभ्यते) । अयमर्थः- तेषां प्रकृतत्रिविधजीवानां स्वभावः फलमपि स्मर्यते । 'असुरा आसुरेणैव' इति स्मृत्या प्रतिपाद्यते इति ॥**

**'असुरा आसुरेणैव स्वभावेन च कर्मणा ।**
**ज्ञानेन विपरीतेन तमो यान्ति विनिश्चयात् ॥**
**देवा दैवस्वभावेन कर्मणा चाप्यसंशयम् ।**
**सम्यग्ज्ञानेन परमां गतिं गच्छन्ति वैष्णवीम् ॥**
**नानयोरन्यथाभावः कदाचित्कापि विद्यते ।**
**मानुषा मिश्रमतयो विमिश्रगतयोऽपि च ॥' इति स्कान्दे ।**

**भा.॥** स्मृतिमाहुः- [१]**असुरा इति ॥ स्कान्द इति ॥** स्कान्द इति स्मर्यते इति सूत्रेणाऽन्वयः ॥ ३७ ॥

**विशेषानुग्रहहेतुना योग्यानामेव सुज्ञानं तत्फलं च भवतीति प्रतिपादनाय सूत्रम्-**

---

१. **असुरा इति ।।** असुराः तमोयोग्याः आसुरेण तामसेन स्वभावेन आसुरेण कर्मणा विपरीतज्ञानेन मिथ्याज्ञानेन अनयोर्देवासुरस्वभावयोः तत्फलयोश्च कदाचित्काले कापि पुरुषे मानुषाः नित्यसंसारिणः मिश्रमतयः सम्यग्-विपर्ययमिश्रराजसबुद्धयः तादृशकर्माणश्च विमिश्रगतयः विमिश्रफलशालिन इत्यर्थः । शिष्टं स्पष्टम् ॥ ३७ ॥

## ॥ ॐ विशेषाऽनुग्रहं च ॐ ॥ ३८ ॥

श्रुतिबलात्परमेश्वरस्येति लभ्यते । त एव, अतः, प्राप्नुवन्ति, शब्दो, दर्शयति, इति वर्तते । यथायथमावृत्तिविपरिणामौ । अयमर्थः- **शब्दः** 'शृण्वे वीरम्' इति श्रुतिः परमेश्वरस्य **विशेषानुग्रहं** प्रसादविशेषं विशेषप्रसादप्रयोज्यसुफलं च तेष्वेव योग्येष्वेव दर्शयति । अतः त एव योग्या एव अतः ज्ञानं तत्फलं च प्राप्नुवन्ति नान्ये इति ॥

**'शृण्वे वीर उग्रमुग्रं दमायन्नन्यमन्यमतिनेनीयमानः । एधमानद्विळुभयस्य राजा चोष्कूयते विश इन्द्रो मनुष्यान्' (ऋ.६.४७.१६) इति विशेषानुग्रहं च दर्शयति देवेषु परमेश्वरस्य ॥**

**'असुरान्दमयन्विष्णुः स्वपदं च सुरान्नयन् ।**
**पुनःपुनर्मानुषांस्तु सृतावावर्तयत्यसौ ॥' इति च भविष्यत्पर्वणि ॥ ३८ ॥**

भा.॥ श्रुत्युपन्यासेन सूत्रार्थमाहुः- **'शृण्वे इति ॥ इतीति** ॥ श्रुतिरित्यर्थः । श्रुत्यर्थे स्मृतिमाहुः- **असुरानिति ॥ पर्वणीति** ॥ पर्वणि असाविति वचनं (श्रुतिश्च) दर्शयतीत्यन्वयः ॥ ३८ ॥

युक्त्याऽपि स्वभावाऽनभिभवप्रतिपादनाय सूत्रम्-

## ॥ ॐ अतस्त्वितरज्ज्यायो लिङ्गाच्च ॐ ॥ ३९ ॥

तुरेवार्थे । चः श्रुतिसमुच्चये । अयमर्थः- **अतः** देवसङ्घात् **इतरत्तु** असुरबृन्दमेव **ज्यायः** अतिबहुलम् **लिङ्गाच्च** 'तस्मान्न जन(ता)मियात्' इति जनसङ्घप्रवेशनिषेधान्यथाऽनुपपत्तिरूपलिङ्गात् । 'ततः कनीयसा देवा' इति श्रुतेश्चेति ॥ अयं भावः- यद्यसुराणां स्वभावनिवृत्तिपूर्वकं देवत्वप्राप्त्या ज्ञानमुत्पद्येत

---

१. **शृण्वे इति** ॥ (ऋ.६.४७.१६) **वीरः** अध्यवसायान्तगामी स्वनिश्चयानुसारेण स्वकार्यपूर्तिकर्ता वा नरसिंहो वा । स **इन्द्रः** परमेश्वरः **उग्रमुग्रं** सर्वान् दुष्टप्रकृतीन् **दमायन्** दमयन् नित्यनरकं प्रापयन् अन्धे तमसि दण्डयन्वा **अन्यमन्यं** दुष्टेभ्योऽन्यान् तद्विरुद्धान् सत्स्वभावान् सर्वान् **अति** संसारं त्याजयित्वा **नेनीयमानः** भृशं स्वपदं नयन् संसारं भृशमतिक्रमयन्वा **एधमानद्विट्** स्वयोग्यतातिरेकेण वर्धमानस्य द्वेष्टा **शृण्वे** वेदादिषु श्रूयते । यत **उभयस्य** देवासुरवर्गस्य राजा अतः किञ्च मनुष्यान् मध्यमजीवान् चोष्कूयते संसार एव वर्तयति स एवेत्यर्थः। **असुरानिति** ॥ श्रुत्यनुवादरूपः । अर्थः स्पष्टः ॥ ३८ ॥

तर्हि असुरभागस्य न्यूनतैव स्यात् न बाहुल्यम् । तच्च श्रुतिसिद्धं तदन्यथाऽनुपपत्त्या स्वभावानभिभव इति ॥

**देवभागादसुरभाग एव बहुलः । 'तस्मान्न जनतामियात्' (बृ.३.३.२०) इति लिङ्गात् । चशब्दात् 'ततः कनीयसा एव देवा ज्यायसा असुराः' (बृ.३.३.१) इति श्रुतेश्च ॥**

**'असुरा बहुला यस्मात्तस्मान्न जनतामियात्' इति ब्राह्मे ॥**

भा.॥ सूत्रं व्याचक्षते- **देवेति** ॥ [1]**तस्मान्न जनेति** ॥ इदं वक्ष्यमाण 'असुरा बहुलाः' इति स्मृत्येकदेशमिति केचित् । **चशब्दादिति** ॥ सूचिताया इति शेषः । श्रुतिमाहुः- [2]ततः **कनीयसा** इति ॥ ननु जनताप्रवेशनिषेधः असुरबाहुल्यनिमित्तक एव कुत इत्यत आहुः- [3]**असुरा इति** ॥ **ब्राह्म इति** ॥ तत्रेत्युक्तेश्चेत्यर्थः ॥ ३९ ॥

**ननु ज्ञानस्य योग्यप्राप्यत्वपक्षेऽपि अयोग्यस्य ज्ञानप्राप्त्यर्थं स्वभावस्याऽनिवृत्तिर्निवृत्तिश्च स्वीक्रियते आद्यं बादरायणमतं योग्यत्वविषयकं, द्वितीयं जैमिनिमतमयोग्यत्वविषयकमिति व्यवस्थितविकल्पेन न दोष इति शङ्कावारणाय सूत्रम्-**

**॥ ॐ तद्भूतस्य तु तद्भावो जैमिनेरपि नियमाऽतद्रूपाऽभावेभ्यः ॐ ॥ ४० ॥**

**सम्मतमिति शेषः । अयमर्थः- तत् प्रकृतदेवत्वादिकं भूतस्य तु प्राप्तदेवादेरेव तद्भावो देवत्वादिकं नाऽन्यस्य नियमाऽतद्रूपाऽभावेभ्यः 'नाऽसुरा दैवीम्' इति नियमश्रुतेः, अतद्रूपात् अन्यस्य**

---

१. **तस्मादिति** ॥ (बृ. ३.३.१८) तस्मात् जनसङ्घे पापिनामपि सत्त्वाद्धेतोः । जनं जनसङ्घं नेयात् न गच्छेदित्यर्थः ॥

२. ततः **कनीयसा इति** ॥ (बृ. ३.३.१) ततो देवासुरभागयोर्मध्ये देवा मोक्षयोग्याः कनीयस अल्पसङ्ख्याका असुरा अयोग्याः ज्यायसः देवापेक्षया बहुसङ्ख्याका इत्यर्थः ।

३. **असुरा इति** ॥ स्पष्टम् । केचित्तु एतत्स्मृत्येकदेशः तस्मान्न जनतामियादिति भागः पूर्वं भाष्यकृद्भिरुदाहृतः लिङ्गप्रदर्शनार्थम् । इदानीं तु सम्पूर्णस्मृतिरुदाहृता । श्रुतौ 'तस्मान्न जनतामियात्' इत्येव पाठदर्शनादित्याहुः, तथा च सङ्घप्रवेशे असुराणां बहुत्वात् तत्रापि असुरस्थितिसत्त्वेन असत्सङ्गदोषः स्यादिति श्रुतिस्मृति-तात्पर्यम् ।

अन्यभावनिषेधक 'नासुराणां दैवं रूपम्' इति श्रुतेः, अभावात् अभावशब्दपर्यायाऽभूशब्दघटित 'तं भूतिः' इति श्रुतेश्चेति **जैमिनेरपि** सम्मतमिति ॥ जैमिनेः कर्मकाण्डप्रवर्तकत्वेन कर्मकाण्डे च 'राजा राजसूयेन स्वाराज्यकामो यजेत' इत्यादिना स्वर्गाधिपत्यादेरपि कर्मरूपयत्नसाध्यत्वोक्त्या तद्वत् स्वरूपधर्मस्य निवृत्तिरपि यत्नसाध्येति तन्मतमिति शङ्कावारणाय जैमिनिग्रहणम् ॥

**असुरजातेरेवासुरत्वं देवजातेरेव देवत्वं जैमिनेरपि सिद्धमेव । 'नासुरा दैवीं न देवा आसुरीं न मनुष्या दैवीमासुरीं च गतिमीयुरात्मीयामेव जातिमनुभवन्ति' इति नियमश्रुतेः ॥**

**'नासुराणां दैवं रूपं न देवानामासुरं न चोभयं मनुष्याणां यो यद्रूपः स तद्रूपो निसर्गो ह्येष भवति' इत्येतद्रूपत्वश्रुतेः ॥**

**'तं भूतिरिति देवा उपासाञ्चक्रिरे ते बभूवुस्तस्माद्धाऽप्येतर्हि सुप्तो भूर्भूरित्येव प्रश्वसित्यभूतिरित्यसुरास्ते ह पराबभूवुः' (ऐ.आ.२.१.८) इति देवासुराणां भावाभावश्रुतेश्च ।**

**'देवानां भूतिरित्येव मनो विष्णौ स्वभावतः ।**
**असुराणामभूतित्वेनैतन्नेयमतोऽन्यथा ॥**
**देवाः शापाभिभूतत्वात् प्रह्लादाद्या बभूविरे ।**
**अतः सुगतिरेतेषां नान्यथा व्यत्ययो भवेत् ॥' इति चाध्यात्मे ॥**

भा.॥ सूत्रं व्याचक्षते- **असुरजातेरिति** ॥ श्रुतीराहुः- '[1]**नासुरा दैवीमित्यादि ॥ भावाऽभावश्रुते-**

---

१. **नासुरा इति ॥ असुरा** अयोग्याः **दैवीं** देवसम्बन्धिनीं **गतिं** स्वभावं **न ईयुः** न प्राप्नुवन्ति । **देवाः** योग्याः **मनुष्या** नित्यसंसारिणः **आत्मीयामेव** जातिं मिश्रस्वभावमेव अनुभवन्ति अनुसृत्य भवन्तीत्यर्थः । शिष्टं स्पष्टम् । **नासुराणामिति** ॥ रूपं ज्ञानादिरूपो धर्मः । हि यतः एषः ज्ञानादिरूपो धर्मः निसर्गः स्वभाव एव भवति अतो यो यद्रूपः यल्लक्षणवान् स तद्रूप एव सदेति शेषः । अतोऽसुराणां दैवं रूपं नेत्यर्थः । **स्पष्टमन्यत् । तं भूतिरिति ॥** (ऐ.आ. २.१.८) देवा योग्याः तं परमात्मानं भूतिं ज्ञानैश्वर्यादिभूतिप्रदत्वात्तद्रूप इत्युपास्तिं चक्रिरे । तेन भूतिमन्तो बभूवुः मुक्ताविति शेषः । तस्मात् देवानां भूतिरित्युपासकत्वात् एतर्हि अद्यापि सर्वदेवोत्तमः सुप्तः सुप्तजनेषु स्थितो वायुः भूर्भूरित्येव ज्ञानैश्वर्यादिप्रदः तद्रूपश्चेत्येव प्रश्वसिति

**श्चेति ॥** ऐश्वर्यानैश्वर्यबोधकश्रुतेश्चेत्यर्थः । ननु प्रह्लादादिदैत्यानामपि सुज्ञानतत्फलदर्शनात् कथमेतदित्यत आहुः- [२]**देवानामिति ॥ अध्यात्म इति ॥** तत्रेत्युक्तेश्चेत्यर्थः । ४० ॥ अ.९ ॥

**॥ इति उभयलिङ्गाधिकरणम् ॥ ५ ॥**

निश्वासनियमनपूर्वकं स्तौति । असुरा अयोग्याः अभूतिरिति अस्माकं अनैश्वर्यादिहेतुत्वात् अतद्रूप इत्युपासाञ्चक्रिरे अतस्ते पराबभूवुः भूत्यादिगुणहीनाः नित्यनिरयं प्राप्ता बभूवुरित्यर्थः ।

२. **देवानामिति ॥** मन उपासनम् । अभूतित्वे विष्णुसम्बन्ध्यभूतिविषये फलमपि तयोरुपासनासदृशमेवेति शेषः। अत उक्तादन्यथा अनियतधर्मिकतया एतत् उक्तप्रमेयं न नेयं ज्ञेयं नेत्यर्थः । एवं देवानामेव प्रह्लादादिदैत्यस्वभावः कथमित्यत आह- **देवा इति ॥** अतः देवत्वात् अन्यथा दैत्यत्वेन निमित्तेन व्यत्यय उक्तस्य व्यत्यास इत्यर्थः । शिष्टं सुगमम् ॥ ४० ॥ अ.५ ॥

# ६. आधिकारिकाधिकरणम्

**(उत्तमाधिकारिणां पदम् अधमाधिकारिभिः नापेक्षणीयम्)**

अत्र नये 'स्वधर्मनिष्ठः शतजन्मभिः पुमान्' (भा.४.२४.२९) इति स्मृतौ, 'वया विष्णोरेषस्य प्रभृथे हविर्भिः 'विधेहि रुद्रो रुद्रियं महित्वम्' इत्यादिश्रुतौ, (छा.३.१)मधुविद्यायां च देवतादिपदप्राप्तेः प्रयत्नसाध्यत्वोक्त्या पूर्वोक्तमयुक्तमिति शङ्कावारणाय ज्ञानस्य स्वोत्तमदेवतापदाऽनाकाङ्क्षिभिरेव प्राप्यत्वसमर्थनम् । अन्यथा यागाद्यपेक्षया अतिशयाऽभावेनाऽयोग्यस्याऽपि यागादिना स्वर्गादिवत् ज्ञानमपि स्यादिति 'अनभिभवं चेति (३.४.३५) सूत्रोक्तमयुक्तं स्यादिति तेन नयेन (३.४.५) सङ्गतिः । देवादिषु नियतं ज्ञानं तदन्यैर्न प्राप्यमित्युक्तं तत्सङ्गतं देवादिपदं विषयः । अन्यैः प्राप्यं न वेति संशयः । पूर्वाऽधिकरणन्यायो लोकदृष्टिश्च तद्बीजम्, अन्यैः प्राप्यमिति पूर्वपक्षः ॥

## ॥ ॐ न चाधिकारिकमपि पतनानुमानात्तदयोगात् ॐ ॥ ४१ ॥

अधिकारिणश्चतुर्मुखादिदेवाः त एवाधिकारिकाः तेषामिदमाऽधिकारिकं पारमेष्ठ्याद्यैश्वर्यम् । अपिः कैमुत्यसिद्धपरमात्मैश्वर्यादिसमुच्चये । चः स्वाऽयोग्यपदानाकाङ्क्षित्वरूपेतिकर्तव्यतासूचकः सन् समुच्चये वर्तते । आकाङ्क्ष्यं ज्ञानार्थिभिरिति शेषः । अयमर्थः- **ज्ञानार्थिभिः आधिकारिकमपि** ब्रह्मादिपदं, परमात्मैश्वर्यादिकं च, **नाकाङ्क्ष्यं तदयोगात्** तदाकाङ्क्षाया अयुक्तत्वात् **पतनानुमानात्** तदाकाङ्क्षायाः अधःपतनहेतुत्वात् पतनानुमानात् स्वकीयमिति अनुमानरूपवाक्यात् 'मायाभिः' इति श्रुतेश्चेति ॥ पतनं नाम उद्दिष्टफलाऽनवाप्तिपूर्वकाधोदेशसंयोगानुकूलक्रियाऽश्रयत्वम् । अत्राऽकाङ्क्षा यत्नः, इच्छा च । देवपदमिति वक्तव्ये आधिकारिकमित्युक्तिः तत्तत्पदयोग्यानां ब्रह्मादीनां तत्तत्पदाकाङ्क्षित्वेऽपि न पतनं किन्तु तत्तत्पदाऽयोग्यानामेव तत्तत्पदाकाङ्क्षित्वे पतनमिति सूचनाय ॥

**न च परमात्मैश्वर्यादिकमाकाङ्क्ष्यम् । ब्रह्मादीनामपि नाऽकाङ्क्ष्यं किमु परस्येति सूचयितुमपिशब्दः । चशब्दस्तु ज्ञानार्थिनां पूर्वोक्तादित्थम्भावान्तरसूचकः । अयोग्यमारोढुं प्रयतन् प्रपतन् हि दृश्यते । एवमयोग्यस्य परमात्मैश्वर्यस्य ब्रह्मादिपदस्य चाऽकाङ्क्षायां पतनमनुमीयते ॥**

**'न देवपदमन्विच्छेत्कुत एव हरेर्गुणान् ।**
**इच्छन्पतति पूर्वस्मादधस्ताद्यत्र नोत्थितिः' ॥ इति ब्रह्माण्डे ।**

**'स्वकीयमिच्छमानं तु राजाद्याः पातयन्ति हि ।**
**एवमेव सुराद्याश्च हरिश्च स्वपदेच्छुकम् ॥'**

**इत्याद्यनुमानरूपवाक्याच्च ॥**

**'मायाभिरुत्सिसृप्सत इन्द्र द्यामारुरुक्षतः । अव दस्यूँरधूनुथाः' (ऋ.८.१४.१४) इति च श्रुतिः ॥**

**भा.॥** सूत्रं व्याचक्षते- **नचेति ॥ ब्रह्मादीनामिति ॥** ऐश्वर्यादिकमित्येकदेशो वर्तते । नन्वेतत्प्रतिपादनं पादाऽसङ्गतमत आहुः- **चशब्दस्त्विति ॥ पूर्वोक्तादिति ॥** ऊर्ध्वरेतस्त्वादिरूपादित्यर्थः । **इत्थंभावान्तरेति ॥** स्वायोग्यपदानाकाङ्क्षित्वरूपेतिकर्तव्यतान्तरेत्यर्थः । भगवदैश्वर्याद्याकाङ्क्षा कुतो न कार्येत्यत आहुः- **अयोग्यमिति ॥** स्वायोग्यमित्यर्थः । हि यथा आरोढुं स्वारोहणायोग्यवृक्षादिकमारोढुं प्रयतन् यतमानः पुरुषः पतन् दृश्यते । एवं पतनं तदिच्छोः पतनमनुमीयते इत्यन्वयः। 'अनुदात्तेत्व लक्षणमात्मनेपदमनित्यम्' इति परिभाषाया प्रयतन्निति परस्मैपदम् । अयमत्र प्रयोगः- 'ब्रह्मादिपदाकाङ्क्षी पतति अयोग्यारोहणप्रयत्नवत्त्वात् अयोग्यवृक्षारोहणप्रयत्नयुक्तवत्' इति ॥ ननु श्रुत्यादिना पूर्वपक्षं कुर्वाणं प्रति कथमनुमानेन समाधानमत आहुः [1]**न देवपदमिति ॥ ब्रह्माण्डे इति ।** तत्रेत्युक्तेरनुमीयत इत्यन्वयः । 'वया विष्णोः' इत्यादिश्रुत्यादिकं तु तत्तत्पदयोग्यविषयमिति भावः । ननु अयोग्यारोहणप्रयत्नस्य पातकारणत्वेऽपि तदिच्छामात्रस्य पातकारणत्वादर्शनान्न तन्मात्रं बाधकमत आहुः- [2]**स्वकीयमिति ॥** प्रयोगस्तु- 'विमतो देवादिभिः पात्यते अशक्तत्वे सति तदिच्छुत्वात् राजपदेच्छुवत्' इति । श्रुत्याऽपि उक्तमर्थं दर्शयन्ति- [3]**मायाभिरिति ॥ श्रुतिरिति ॥** यतोऽनुमीयते अतोऽनुमानरूपवाक्याच्च, यतः श्रुतिरस्ति अतश्च, नाकाङ्क्ष्यमित्यन्वयः ॥ ४१ ॥

---

१. **न देवपदमिति ॥** देवपदं ब्रह्मादिदेवपदं कुत एव कथमेव । गुणानैश्वर्यादीन् पूर्वस्मात् पूर्वतनस्वस्थानात् अधस्तादधोदेशे तमसि यत्र तमसि पतितस्येति शेष इत्यर्थः । शिष्टं सुगमम् ।

२. **स्वकीयमिति ॥** स्वकीयं राजादिसम्बन्धिस्थानं हि प्रसिद्धमित्यर्थः । स्पष्टमन्यत् ।

३. **मायाभिरिति ॥** (ऋ.८.१४.१४) हे इन्द्र परमेश्वर मायाभिर्मोहिकाभिः कुविद्याभिरुत्तमत्वं विसृप्सतः प्राप्तुमिच्छतः द्यां स्वर्गमारुरुक्षतः आरोढुमिच्छतश्च दस्यून् 'ऐकात्म्यं नाम यदिदम्' इत्युक्तब्रह्मस्तेनान् **अव** अन्धंतमसि **अधूनथाः** अवाक्षिप इत्यर्थः ॥ ४१ ॥

कैमुत्येनाऽपि देवतापदाकाङ्क्षाऽयोगसमर्थनाय सूत्रम्-

**॥ ॐ उपपूर्वमपीत्येके भावशमनवत्तदुक्तम् ॐ ॥ ४२ ॥**

ज्ञानार्थिभिः, नाकाङ्क्ष्यमाधिकारिकमिति वर्तते। अपिः देवसमीपवृत्तिगन्धर्वादिपदमेव नाकाङ्क्ष्यं, किमु देवपदमिति कैमुत्यसूचकः। भावस्य चित्तस्य शमना निग्रहवन्तो भावशमनाः। प्रधानार्थैकशब्दसाहचर्यात् भावशमनपदार्थे प्राधान्यं लभ्यते। इति वदन्तीति शेषः। अयमर्थः- **एके** प्रधानाचार्याः **उपपूर्वम्** उपशब्दपूर्वकम् आधिकारिकं देवपदम् (उपदेवपदमपीति यावत्) **भावशमनवत्** वासिष्ठादिप्रधानऋषिपदवत् नाकाङ्क्ष्यं यतः **तत्** प्रमेयम् **उक्तं** 'यथा ऋषीन्' इति इन्द्रद्युम्नश्रुतावुक्तमत इति वदन्तीति॥ एवं च वसिष्ठः स्यां, विश्वामित्रः स्यामिति विशेषाकाङ्क्षायामेव पतनं, न तु ऋषिः स्यामिति सामान्याकाङ्क्षायामिति। ऋषिपदस्य दृष्टान्तीकरणं तु श्रुतिबलादेव न तु लोकसिद्धत्वादिति च, ज्ञेयम्। ऋषीत्यनुक्त्वा भावशमनेत्युक्तिः ऋषीस्वरूपज्ञापनाय।

**उपदेवपदं च नाकाङ्क्ष्यमित्येके। भावशमनवदृषिपदवदेव। तच्चोक्तमिन्द्रद्युम्नश्रुतौ 'अथ यथर्षीन् प्रजापतीन्नाकाङ्क्षेदेवं न गन्धर्वान्न विद्याधरान्न सिद्धान्' इति।**

**बृहत्संहितायां च—**

**'न दैवानभिकाङ्क्षेत कुत एव हरेर्गुणान्।**
**प्राजापत्यान्न चाऽर्षांश्च गन्धर्वादीनपि क्वचित्।**
**ऋष्यादिषु विशेषे तु दोषो नैवाविशेषितः॥'**

**इति विशेषदर्शनार्थमेक इत्युक्तम्॥**

**भा.॥** सूत्रं व्याचक्षते- **उपदेवपदमिति**॥ गन्धर्वादिैश्वर्यमित्यर्थः। गन्धर्वादिपदे उपशब्दपूर्वकत्वञ्च उपशब्दघटितोपदेवशब्दवाच्यसम्बन्धित्वम्। **एवेति**॥ एवः प्रसिद्धवसिष्ठादिपदमिवेत्यर्थे। तदुक्तमित्याकाङ्क्षितश्रुतिमाहुः- [1]**यथेति**॥

---

१. **यथेति**॥ ज्ञानार्थी यथा ऋषीन् तत्सम्बन्धिनो धर्मान् नाकाङ्क्षेत् एवं प्रजापतीन् तत्सम्बन्धिनो धर्मान् एवं गन्धर्वविद्याधरसिद्धपदानामप्यर्थो ज्ञेयः अन्वयस्तु स्पष्टः।

सूत्रद्वयार्थे स्मृतिमाहुः- [२]**न देवान् इति ।। विशेषित इतीति ।।** इति बृहत्संहितायां सूत्रद्वयार्थ उक्त इति शेषः । इतीत्यावर्तते । इति स्मृत्युक्त-प्रकारेण । विशेषदर्शनार्थं विशेषबोधनार्थं । एके इत्युक्तमिति ।। न तु विकल्पार्थमिति भावः । एकपदेन तल्लाभप्रकारस्तु उक्तः ।। ४२ ।।

**यथा देवादिपदं नाकाङ्क्ष्यं तथा ज्ञानभक्त्यादिकमाकाङ्क्ष्यं न वेति सन्देहवारणाय सूत्रम्-**

**।। ॐ बहिस्तूभयथाऽपि स्मृतेराचाराच्च ॐ ।। ४३ ।।**

**तुर्विशेषे । पतनेत्येकदेशो नेति वर्तते । प्रथमया विपरिणम्यते अयमर्थः- बहिस्तु ऐश्वर्यचतुष्टयादन्यत्र ज्ञानभक्त्यादिविषये तु उभयथाऽपि आकाङ्क्षायामनाकाङ्क्षायामपि न पतनं स्मृतेः 'देवर्षि' इति स्मृतेः आचाराच्च आचारबोधक 'नानात्वम्' इति वाक्याच्चेति ।।**

**देवर्षिगन्धर्वादिपदेभ्योऽन्यत्र शुभविषय-**
**आकाङ्क्षायामनाकाङ्क्षायां च न पतनम् ।।**

**'देवर्षिगन्धर्वाणां पदाकाङ्क्षी पतेद् ध्रुवम् ।**
**अन्यत्र शुभमाकाङ्क्षन्न पतेदविरोधतः ।। इति स्मृतेः ।**

**'नानात्वमेव कामानां नाकामः क्व च दृश्यते ।**
**अतोऽविरुद्धकामः स्यादकामस्तेन भण्यते ।।' इत्याचाराच्च ।। ४३ ।।**

।। इति आधिकारिकाधिकरणम् ।। ६ ।।

भा.।। (सूत्रं व्याचक्षते- **देवर्षीति ।। शुभविषय इति ।।** ज्ञानभक्त्यादिविषय इत्यर्थः ।) स्मृतिमाहुः- [२]**देवर्षीन् इति ।।**

---

२. **न देवान् इति ।।** ज्ञानार्थी देवान् देवसम्बन्धिनोः गुणान् नाभिकाङ्क्षेत कुत एव कथमेव हरेर्गुणा नाभिकाङ्क्षेत प्राजापत्यान् कश्यपादिप्रजापतिसम्बन्धिनः नाभिकाङ्क्षेतेति वर्तते, कचित्कालेऽपि तत्रापि विशेषमाह- **ऋष्यादिष्विति ।।** ऋषिगन्धर्वादिषु स्थिते विशेषे वसिष्ठत्वादिरूपे विशेषगुणे आकाङ्क्षिते सति दोषः पतनाख्यो दोषो भवेत्, अविशेषतः ऋषित्वगन्धर्वत्वादिसामान्यरूपेऽभिकाङ्क्षिते सति न दोषः न पतनमित्यर्थः ।।४२।।

२. **देवऋषीनिति ।।** अन्यत्र देवादिभ्योऽन्यत्र स्थितं शुभं ज्ञानभक्त्यादिकम् अविरोधतः सामान्यतः ज्ञानभक्त्यादिकामनाया आवश्यकत्वेन विरोधाभावादित्यर्थः । स्पष्टमन्यत् ।

ननु 'विहाय कामान्यस्सर्वान्' इति सर्वकामत्यागविधानात्कथं शुभकामे पतनं न स्यादत आहुः- [1]**नानात्वमिति** ॥ ४३ ॥ अ.६ ॥

**॥ इति आधिकारिकाधिकरणम् ॥ ६ ॥**

१. **नानात्वमिति ॥** यतः कामानां नानात्वं निषिद्धकामनात्वाऽनिषिद्धकामनात्वरूपधर्मद्वयमस्ति यतश्च क्व च कापि पुरुषे अकामः कामनायाः अभावो न दृश्यते । अतः पुमानविरुद्धकामोऽनिषिद्धेच्छावान् स्यादेव तेन च पुमानकामो भण्यते इत्यर्थः ॥ ४३ ॥ अ.६ ॥

## ७. फलश्रुत्यधिकरणम्

### (ज्ञानादिफलम् इन्द्रियाद्यभिमानिदेवानामेव)

अत्र नये अस्वामिनोऽपि सन्निधानमात्रेण ज्ञानफलप्राप्तिसमर्थनम् । अन्यथा ज्ञानिनो मोक्षनियमो न स्यादिति 'अनियमः सर्वेषाम्'(३.३.१९)इति नयोक्ता व्यवस्था भज्येतेति तेन नयेन सङ्गतिः । ज्ञानं विषयः । तत्वनियामकदेवेभ्य एव फलप्रदं प्रजाभ्योऽपीति वेति संशयः । प्रयोजककर्तृत्वं साक्षात्कर्तृत्वं च तद्बीजम् । देवेभ्य एवेति पूर्वपक्षः ॥

**॥ ॐ स्वामिनः फलश्रुतेरित्यात्रेयः ॐ ॥ ४४ ॥**

फलेति लुप्तप्रथमान्तं पृथक् पदं च । स्वामिन इति समुदायैकवचनम् । ज्ञानार्थकाऽतः पदं चेति च वर्तते । अयमर्थः- **अतो** ज्ञानस्य फलं 'ब्रह्मविदाप्नोति परम्' इति श्रुत्युक्तज्ञानफलं **स्वामिनश्च** इन्द्रियनियामकत्वेन ज्ञानस्वामिनां देवानामेव, **फलश्रुतेः** स्वामिफलपर 'यदुकिञ्चेमा' इति 'स्वामी हि' इति श्रुतेरिति **आत्रेयो** मन्यते इति शेष इति ॥ देवानामिति वक्तव्ये स्वामिन इत्युक्तिः इन्द्रियनियामकत्वेन स्वामित्वस्फोरणाय ।

**'ब्रह्मविदाप्नोति परम्' (तै.२.१) इत्यादि फलं स्वामिनां देवानामेव भवति । 'यदु किञ्चेमाः प्रजाः शुभमाचरन्ति देवा एव तदाचरन्ति यदु किं चेमाः प्रजाः विजानते देवा एव तद्विजानते देवानां ह्येतद्भवति स्वामी हि फलमश्नुते नास्वामी कर्म कुर्वाणः' इति माध्यन्दिनायनश्रुतेरित्यात्रेयो मन्यते ॥ ४४ ॥**

भा.॥ श्रुत्युदाहरणपूर्वं सूत्रं व्याचक्षते- [1]**ब्रह्मवित् इति** ॥ (देवानामेव फलमित्यत्र) श्रुती आहुः- [2]**यदुकिञ्चनेत्यादि** ॥ ४४ ॥

---

१. **ब्रह्मविदेति** ॥ व्या.(सं.१. पृ. ९६)

२. **यदु किञ्चेति** ॥ इमाः प्रजाः यदेव शुभं कर्माचरति तद्देवा एव चरन्ति । हि यतः लोके कृष्यादिस्थले स्वामी फलमश्नुते । कर्मकुर्वाणोऽस्वामी भृत्यादिः फलं कृष्यादिफलं नाश्नुते । अतो देवानाम् एतत् प्रजाकृतशुभकर्मफलं ज्ञानफलं च भवतीत्यर्थः । शिष्टं स्पष्टम् । तथा च देवानां ज्ञानकर्मनियामकत्वेन प्रजाकृतमपि देवकृतमेवेति तत्फलमपि देवानामिति भावः ॥ ४४ ॥ ४५ ॥

एवमात्रेयमतावलम्बेन पूर्वपक्षिते सिद्धान्तार्थं सूत्रम्-

**॥ ॐ आर्त्विज्यमित्यौडुलोमिः तस्मै हि परिक्रियते ॐ ॥ ४५ ॥**

स्वामिनः फलं मन्यत इति वर्तते । ऋत्विजामिदमार्त्विज्यम् । इतीत्यनुवृत्त्या सिद्धे पुनरिति ग्रहणमिवार्थकम् । तस्य जनस्याऽस्वामित्वेऽपीति शेषः । यथायथमावृत्तिविपरिणामौ । अयमर्थः- फलं ज्ञानजं फलम् **आर्त्विज्यमिति** ऋत्विजामस्वामित्वेऽपि सत्रयागफलमिव भवति **हि** यतः **तस्मै** जनार्थं **स्वामिभिः** देवैः **फलं** ज्ञानफलं **परिक्रियते** सम्पाद्यतेऽत इति **औडुलोमिः** मन्यते इति ॥

**सत्रयागेष्वृत्विजामपि फलदर्शनादल्पं फलं प्रजानामपि भवतीत्यौडुलोमिर्मन्यते । तदर्थं देवैः क्रियमाणत्वात् ॥**

भा.॥ सूत्रं व्याचक्षते- **सत्रयागेष्विति** ॥ **अल्पं फलमिति** ॥ एवं च जनानां पूर्वसूत्रे फलाभावोक्तिस्तु अल्पफलाभिप्रायेण । अत्यल्पधने पुरुषे निस्स्वशब्दप्रयोगवदिति ज्ञेयम् । ननु दृष्टान्तमात्रेण कथमर्थसिद्धिः किन्तु प्रयोजकं सत्येवेत्यत आहुः- **तदर्थमिति** ॥ यद्वा ननु सत्रयागे ऋत्विजामगृहीतदक्षिणत्वेन कर्तृत्वात्फलसत्त्वेऽपि कथं तद्दृष्टान्तेन प्रजानां फलसिद्धिरित्यत आहुः- **तदर्थमिति** ॥ ४५ ॥

ननु देवैः प्रजार्थं ज्ञानादि साध्यत इति तत्फलमपि प्रजानामेव स्यादिति शङ्कावारणाय सूत्रम्-

**॥ ॐ सहकार्यन्तरविधिः पक्षेण तृतीयं तद्वतो विध्यादिवत् ॐ ॥ ४६ ॥**

अतः स्वामिनः तस्येति वर्तते । इत्येतदिति शेषः । विधिवदिति फलस्याप्युपलक्षणम् । विध्यादीत्यादिना फलस्य ग्रहणम् । तद्वत इति तत्पदेन जनानां शिष्याणां च ग्रहणम् । यथायथमावृत्तिविपरिणामौ । अयमर्थः- **तद्वतः** प्रजावतो राज्ञः **तद्वतः** शिष्यवतो गुरोश्च **विध्यादिवत्** पालने ज्ञाने च प्रजानां शिष्याणां च सहकारित्वेन विधानवत् स्वामिभिर्देवैः अतो ज्ञानविषये तस्य जनस्य **सहकार्यन्तरविधिः** सहकारिविशेषत्वेन आचार्येतरसहकारित्वेन वा विधानम्, आदिना तद्वतो मुख्यफलवत्स्वामिनो मुख्यफलमित्येतत् **पक्षेण** पक्षत्वेन **तृतीयं** तृतीयपक्ष इति । एवं च अयमेव पक्षो मुख्यो बादरायणीयश्चेति

सहकारिणामल्पं फलमिति च सिद्धम् । तच्च फलं ज्ञानदानविषये, प्रवचने च, मुक्तिरेव न त्वन्यत् । पालनविषये तु धनधान्यादिसमृद्धिरेव न त्वन्यत् । पालनं च कृष्यादिविषये बाधकनिवृत्तिपूर्वकं साधककुल्यादिनिर्माणम् । न च गुरुशिष्यफलाधिक्यन्यूनत्वस्य शास्त्रमात्रगम्यत्वेन कथं तस्य दृष्टान्तत्वमिति वाच्यम् । वक्ष्यमाणवाराहवचनानुरोधेन तस्य दृष्टान्तीकरणात् । ननु देवानां मिथ्याज्ञानविषयेऽपि प्रेरकत्वेन तज्जन्याशुभफलमपि स्यादिति चेन्न । मिथ्याज्ञानादिविषये असुराणामेवेन्द्रियप्रेरकत्वाङ्गीकारात् । **एतच्च अस्मिन्नर्येऽनुव्याख्यान-सुधयोरुक्तम् । भागवततात्पर्येऽपि** (११-२) **सप्रमाणं प्रपञ्चितम्** । ननु यथा कन्यादाने वरस्योद्देश्यत्वान्न सहकारित्वं तथा ज्ञानादिदाने पालने प्रवचने च प्रजादीनामुद्देश्यत्वान्न सहकारित्वमिति चेन्न । स्वभिन्नत्वे सति स्वकर्तृककार्यप्रयोजकत्वं हि सहकारित्वम् । तच्च प्रजादेरस्त्येव कार्यप्रयोजकत्वात् । कार्याणि च ज्ञानदानपालनप्रवचनानि । वरस्याप्युक्तप्रयोजकत्वं लोकसम्मतमेव ॥

**तृतीयः स्वपक्षः । देवानां ज्ञानादिकर्माणि सहकार्यन्तरत्वेन प्रजा विधीयन्ते । यथा प्रजावतो राज्ञः प्रजाः सहकारित्वेन विधीयन्ते । यथा चाऽचार्यस्य शिष्याः ॥**

**वाराहे च—**

**ज्ञानादिदानं देवानां विष्णुना साधु चोदितम् ।**
**वेदे च तेषां विहितं तत्राऽचार्यो महत्तरः ॥**
**विहितः सहकारित्वे सहकार्यन्तरं प्रजाः ।**
**पातृत्वेन यथा राज्ञो यथा शिष्या गुरोरपि ॥**
**तस्माच्छुतं फलं तासामाचार्याणां महत्तरम् ।**
**ततो महत्तरं प्रोक्तं देवानामुत्तरोत्तरम्' ॥ इति ॥ ४३ ॥**

॥ इति फलश्रुत्यधिकरणम् ॥ ७ ॥

भा.॥ सूत्रं व्याचक्षते- **देवानामिति** ॥ **स्वपक्ष इति** ॥ सूत्रकारपक्ष इत्यर्थः । **प्रजावत इति** ॥ तद्वत इत्यस्य व्याख्यानम् । राज्ञ इति विशेष्यप्रदर्शनम् । **सहकारित्वेनेति** ॥ पालन इति ज्ञेयम् । **शिष्या**

**इति** ॥ सहकारित्वेन विधीयन्त इति वर्तते । प्रवचन इतीति शेषः इति तृतीयः पक्ष इत्यन्वयः । उक्तेऽर्थे स्मृतिमाहुः- [१]**ज्ञानादीति** ॥ **उत्तरमितीति** ॥ वाराहे इत्युक्तेरित्यर्थः ॥ ४६ ॥ अ.७ ॥

॥ **इति फलश्रुत्यधिकरणम्** ॥ ७ ॥

---

१. **ज्ञानादीति** ॥ प्रजाभ्यस्तदुद्देशेन साधु सम्यक् साक्षाद्वा ज्ञानादिदानं ज्ञानमोक्षादिदानं विष्णुना तेषामिन्द्रियनियामकत्वेन प्रसिद्धानां देवानाम् उद्देश्यत्वं षष्ठ्यर्थः । चोदितमाज्ञप्तं वेदेषु विहितं च तेषां देवानां तत्र स्वविहितज्ञानादिविषये महत्तरो मुख्यः स्वार्थे तरप् सहकारित्वेन विहितः । प्रजाः सहकार्यन्तरम् अन्याऽमुख्यसहकारिण्यः । यथा राज्ञः पातृत्वेन पालने प्रजाः । यथा च गुरोः प्रवचने विषये शिष्याः सहकार्यन्तरं सहकारिणः तथेति पूर्वेण सम्बन्धः । उक्तदृष्टान्तद्वयं कार्यकर्तुः सहकारिसत्त्वमात्रे न तु मुख्यामुख्यसहकारि-सत्त्वविषयं । दृष्टान्ते मुख्यामुख्ययोरनुपपादनादिति ध्येयम् । दृष्टान्ते फलतारतम्यं नोपपादितं स्पष्टत्वात् । तस्मात्प्रजानां ज्ञानदाने सहकारिमात्रत्वात् आचार्याणां मुख्यसहकारित्वात् देवानां कर्तृत्वात् श्रुतं यावत्प्रमाणमसिद्धं तावत्फलं प्रजानां भवति आचार्याणां महत्तरं महत्फलं तत आचार्यफलापेक्षया देवानां ब्रह्मान्तानामुत्तरोत्तरं महत्तरं फलं भवतीत्यर्थः ॥ ४६ ॥ अ.७ ॥

## ८. कृत्स्नभावाधिकरणम्

**(आश्रमिषु यतय एव उत्तमाः)**

अत्र नये ज्ञाने विशेषाधिकारिणां यतीनां सर्वाश्रमिभ्योऽतिशयसमर्थनम् । अन्यथा कर्माधिकारिभ्यो ज्ञानमात्राधिकारिणोऽतिशयो न स्यादिति षष्ठनयवत्सङ्गतिः, मुक्तियोग्येषु आश्रमभेदभिन्ना मनुष्या विषयः । सर्वेऽपि समाः केचिदुत्तमा वा इति संशयः । उभयथाऽपि सम्भवस्तद्बीजम् । गृहस्था उत्तमा इति पूर्वपक्षः ॥

पूर्वपक्षहेतुभूतोपसंहारस्यान्यथासिद्धिप्रदर्शनाय सूत्रम्-

**॥ ॐ कृत्स्नभावात्तु गृहिणोपसंहारः ॐ ॥ ४७ ॥**

कृत्स्नाभावा गृहस्थाश्रमधर्मा यस्मिन् देववर्गे इति बहुव्रीहिः । ल्यब्लोपे पञ्चमी । गृहिणेति तृतीया षष्ठ्यर्थे । मोक्षमुक्त्वा क्रियत इति शेषः । अयमर्थः- **कृत्स्नभावात्तु** कृत्स्नगृहस्थाऽश्रमधर्मवन्तं देववर्गमपेक्ष्यैव **गृहिणो** मोक्षमुक्त्वा 'कुटुम्बी शुचौ' इत्यारभ्य 'ब्रह्माभिसम्पद्यते' इत्यन्तेन गृहस्थाऽश्रमिणो मुक्तिमभिधाय **उपसंहारः** 'न च पुनरावर्तते' इति उपनिषत्समाप्तिः क्रियते । न तु मनुष्यगृहस्थानपेक्ष्येति । एवं चोपसंहारस्य पूर्वपक्षसाधकत्वं नास्तीति भावः ॥

**'कुटुम्बे शुचौ देशे स्वाध्यायमधीयानो धार्मिकान् विदधत्' इत्युक्त्वा न च पुनरावर्तते न च पुनरावर्तते' (छा.८.१५.१) इति गृहिणोपसंहारः क्रियते ।**

**तस्माद्गृहस्थस्यैवोत्तमत्वमिति न वाच्यम् । यतः कृत्स्नगृहस्थान् देवानपेक्ष्यैवोपसंहारः क्रियते । कृत्स्ना ह्येते गृहिणो देवाः कृत्स्ना ह्येते यतयोऽत एतेषां न पुत्रा दायमुपयन्ति न चैते गृहान्विसृजन्त्यरागा अद्वेषा अलोभाः सर्वभोगाः सर्वज्ञाः सर्वकर्तारः' इति हि पौत्रायणश्रुतिः ॥**

भा.॥ श्रुतीरुपन्यस्य पूर्वपक्षकथनपूर्वकं सूत्रं व्याचक्षते- **'कुटुम्बीत्यादिना** ॥ **उत्तमत्वमिति** ॥

---

१. **कुटुम्बीति** ॥ (छा.८.१५.१) 'आत्मनि सर्वेन्द्रियाणि सम्प्रतिष्ठाप्य अहिंसन् सर्वाणि भूतानि अन्यत्र-तीर्थेभ्यः स एवं वर्तयन् यावदायुषं ब्रह्मलोकमभिसम्पद्यते' इति वाक्यशेषः । कुटुम्बे गृहस्थाऽश्रमे वर्तमानः शुचौ देशे स्थित्वा स्वाध्यायं वेदमधीयानः धार्मिकान् धर्मसम्बन्धिनो व्यापारान् विदधत् कुर्वन् तादृशजनान्

यत्यपेक्षया मोक्षे आधिक्यमित्यर्थः । उपसंहारस्य पूर्वपक्षसाधकत्वं नेत्याहुः- **यत इति ॥ क्रियत इति ॥** अतो न वाच्यमिति सम्बन्धः । देवेषु कृत्स्नगृहस्थाऽश्रमसत्त्वे मानमाहुः- **'कृत्स्ना ह्येते इति ॥** किञ्च मनुष्ययत्यपेक्षया देवानामुत्तमत्वं न स्यादत आहुः- **कृत्स्ना ह्येते इति ॥ श्रुतिरिति ॥** यतः श्रुतिरस्ति अतः, कृत्स्नधर्मानिति सम्बन्धः । आश्रमद्वयवत्त्वेन देवानां मनुष्ययत्यपेक्षयोत्तमत्वमिति भावः ॥ ४७ ॥

कैमुत्येनापि यत्यपेक्षया देवानामुत्तमत्वसमर्थनाय सूत्रम्-

**ॐ मौनवदितरेषामप्युपदेशात् ॐ ॥ ४८ ॥**

कृत्स्नभावात्तु इति वर्तते । विपरिणम्यते च । तुर्विशेषे । मुनेर्भावो मौनम् । अयमर्थः- **कृत्स्नभावानां** देवानां **मौनवत्** यतित्ववत् **इतरेषामपि** ब्रह्मचर्याद्याश्रमाणामपि उपदेशात् 'देवा एव ब्रह्मचारिणः' इति श्रुतावुक्तत्वात् **तु** विशेषः मनुष्ययत्यपेक्षयाधिक्यमिति ॥ आश्रमद्वयवत्वेनैवाधिक्ये सिद्धे किमु वक्तव्यमाश्रमचतुष्टयवत्त्वेनेति भावः ॥

**न चाऽश्रमद्वयमेव देवानाम् । 'देवा एव ब्रह्मचारिणो देवा एव गृहस्था देवा एव वनस्था यथा ह्येते मुनय एवं सर्ववर्णाः सर्वाश्रमाः सर्वं ह्येते कर्म कुर्वन्ति' इति कौण्ठरव्यश्रुतौ यतित्वदृष्टान्तेनान्येषामप्युपदेशात् ॥ ४८ ॥**

॥ इति कृत्स्नभावाधिकरणम् ॥ ८ ॥

---

पुत्रादीन् विशेषेण धारयन्वा आत्मनि परमात्मनि सर्वेन्द्रियाणि सम्प्रतिष्ठाप्य नियम्य तीर्थेभ्यो यज्ञेभ्योऽन्यत्र यज्ञार्थान्यानि सर्वाणि भूतानि अहिंसन् यावदायुषं वर्तयन् स्वात्मानमेव प्रवर्तयन् परमात्मानं दृष्ट्वा परब्रह्मलोकमभिसम्पद्यते प्राप्नोति, कदाचिदपि केनापि निमित्तेन पुनर्नाऽवर्तते । संसारं न प्राप्नोतीत्यर्थः । १. **कृत्स्ना इति ॥** हि प्रसिद्धा एते देवा एव कृत्स्ना गृहिणः पूर्णगृहस्थाऽश्रमधर्मवन्तः । एते देवा एव कृत्स्नायतयः। अतः पूर्णयतित्वात् पूर्णगृहस्थत्वाच्च एतेषां देवानां दायं वित्तादिकं पुत्रा नोपयन्ति अत एवेन्द्रपुत्रजयन्तादीनां तदैश्वर्यप्राप्तिर्नेति हृदयम् । एते देवाः गृहान् पत्नीः भवनादिकं वा न विसृजन्ति सर्वकर्तारः पुत्रक्रत्वादिसर्वकर्तार इत्यर्थः । शिष्टं स्पष्टम् । अरागा अद्वेषा अलोभाः सर्वज्ञा इति विशेषणचतुष्टयं यतित्वोपपादकं सर्वभोगाः सर्वकर्तार इति द्वयं गृहस्थत्वोपपादकमिति बोध्यम् ॥ ४७ ॥

**भा.॥** सूत्रं व्याचक्षते- **न चेति ॥** देवानामाश्रमद्वयमेवेति न मन्तव्यमित्यर्थः । देवानामाश्रमचतुष्टयं वर्तत इत्यत्र मानमाहुः- [1]**देवा एवेति** ॥ ४८ ॥ अ.८ ॥

॥ इति **कृत्स्नभावाधिकरणम्** ॥ ८ ॥

१. **देवा एवेति ॥** हि यतः एते देवाः सर्वं सर्ववर्णाश्रमोचितं कर्म कुर्वन्ति अतः यथा एते देवाः मुनयः यत्याश्रमिणः एवं सर्वाश्रमाः सर्ववर्णाश्च अतः एते देवा एव ब्रह्मचारिणः देवा एव गृहस्थाः देवा एव वनस्था इत्यर्थः ॥ ४८ ॥ अ.८ ॥

## ९. अनाविष्काराधिकरणम् (इति अन्वयाधिकरणम्)

**(अयोग्यानाम् उपदेशः न कर्तव्यः)**

अत्र नये अपरोक्षज्ञानस्यातिगोप्यत्वसमर्थनम् । ज्ञानस्यातिगोप्यत्वं नाम अतिगोप्योपदेश्यपरोक्षज्ञानसाध्यत्वम् । गोप्यत्वाभावेऽतिशयाभावेन परोक्षज्ञानेन अपरोक्षज्ञानं न स्यादिति उपासनं व्यर्थमिति उपासनापादेन सङ्गतिः । अपरोक्षज्ञानसङ्गतं परोक्षज्ञानं विषयः । अनाविष्कारेणोपदेष्टव्यं न वेति संशयः। उभयथाऽपि सम्भवस्तद्बीजम् । नेति पूर्वपक्षः ॥ १-सू.अ.॥

**॥ ॐ अनाविष्कुर्वन्नन्वयात् ॐ ॥ ४९ ॥**

अन्वीयते सम्बध्नाति साध्येनेति अन्वयः साध्यनिरूपितव्याप्तिमान् उपपत्तिरिति यावत् । गुरुर्ज्ञानमित्यर्थाल्लभ्यते । उपदिशेदिति शेषः । अयमर्थः- गुरुः **अनाविष्कुर्वन्** सभाचत्वरादिस्थानेषु उपवेशनपूर्वकं प्रकाशमकुर्वाणस्सन् ज्ञानमुपदिशेत् **अन्वयात्** अनर्थप्राप्त्यभावरूपोपपत्तेः सत्त्वादिति ॥ सभादिषु स्थित्वा ज्ञानोपदेशे अयोग्यानामपि ज्ञानोत्पत्त्याऽनर्थप्राप्तिः स्यादिति भावः ॥

**'एतां विद्यामधीत्य ब्रह्मदर्शी वाव भवति । स एतां मनुष्येषु विब्रूयात् । यथा यथा ह वै ब्रूयात्तथा तथाऽधिको भवति' इति माठरश्रुतौ विद्यादानं श्रूयते । तच्च बहूनां स्वीकरणार्थमाविष्कारेणेति न मन्तव्यम् । अन्वयाद्युक्तेः ॥ आविष्कारेऽयोग्यानामपि स्वीकारप्राप्तिः । तच्च निषिद्धम्—**

**'मा नः स्तेनेभ्यो ये अभिद्रुहस्पदे**
**निरामिणो रिपवोऽन्नेषु जागृधुः ।' (ऋ.२.२३.१६)**

**येषां नैतन्नापरं किं च नैकं**
**ब्रह्मणस्पते ब्रूहि तेभ्यः कदाचित् ॥**
**'अथोपशमेनोपरता मनुष्याः**
**ये धर्मिणो ब्रूहि तेभ्यः सदा नः ।**
**आदेवानामोहते विव्रयो हृदि**
**बृहस्पते न परः साम्नो विदुः ॥' (ऋ.२.२३.१६) इति ॥**

**'विद्या ह वै ब्राह्मणमाजगाम गोपाय मां शेवधिष्टेऽहमस्मि ।**
**अनार्यकायानृजवे शठाय मा स्म ब्रूया ऋजवे ब्रूहि नित्यम् ॥'**
**इति च ॥ ४९ ॥**

॥ इति अनाविष्काराधिकरणम् ॥ ९ ॥ (इति अन्वयाधिकरणम्)

भा.॥ श्रुत्युपन्यासपूर्वं सूत्रं व्याचक्षते- [1]**एतां विद्यामित्यादिना** ॥ **स्वीकरणार्थमिति** ॥ ज्ञानोत्पत्त्यर्थमित्यर्थः । **आविष्कारेणेति** ॥ कार्यमिति शेषः । युक्तिमेव विवृण्वन्ति- **आविष्कारे इति** ॥ **तच्चेति** ॥ अयोग्येभ्यः कथनं चेत्यर्थः । निषिद्धत्वे मानमाहुः- [2]**मानस्तेनेभ्य** इत्यादि ॥ **इति चेति** ॥ इत्यनेन चेत्यर्थः । इत्यनेन च निषिद्धमित्यन्वयः ॥ ४९ ॥ अ.९ ॥

॥ इति अनाविष्काराधिकरणम् ॥ ९ ॥ (इति अन्वयाधिकरणम्)

---

१. **एतामिति** ॥ **एतां** प्रकृतां **विद्यामधीत्य** श्रवणादिकं कृत्वा **ब्रह्मदर्शी** अपरोक्षज्ञानी भवति शिष्यः । **ह** प्रसिद्धः अतः स उपदेष्टा **गुरुः एतां** मनुष्येषु मध्ये **विब्रूयात्** उच्चैः सम्यगुपदिशेत्, यथा यथा ह वै ब्रूयादुच्चैः सम्यक् ब्रूयात् तथा तथा फलेऽधिको भवतीत्यर्थः ।

२. **मान इति** ॥ (ऋ.२.२३.१६) इदं मन्त्रद्वयं वायुं प्रति विद्यादेवतानां प्रार्थनारूपं वचनम् । हे **ब्रह्मणस्पते** ब्रह्मणो वेदस्य पते वायो 'एष उ एव ब्रह्मणस्पतिः'(बृ.३.३) इति बृहदारण्यकोक्तेः । **निरामिणो** भगवदुत्तमत्वाज्ञानिनः तद्विमुखा वा रिपवः तद्विरोधिनः **अन्येषु** भोगेषु **जागृधुः** आकाङ्क्षां चक्रुः । **अभिद्रुहस्पदे** अत्यन्तविष्णुवैष्णवद्रोहफलस्य नित्यनिरतिशयदुःखस्याऽकरे तमसि स्थातुं योग्या इति शेषः । येषामयोग्यानाम् **एतत्** वासुदेवाख्यं परं ब्रह्म नास्ति **अपरं** जगच्च **नास्ति** किन्तु **किञ्चित्** निर्गुणं ब्रह्म **नैकम्** एकविधभिन्नं सदसद्विलक्षणमनिर्वाच्यं च जगदिति मतं तेभ्यः **स्तेनेभ्यः** ब्रह्मस्तेनेभ्यः **कदाचित्** कदाऽपि नोऽस्मान् **मा ब्रूहि** नोपदिशेति प्रथममन्त्रस्यार्थः । हे बृहस्पते बृहत्या वाण्याः पते वायो 'वाग्धि बृहती'(१.२.११) इति छान्दोग्योक्तेः । ये **उपशमेन** विष्णुनिष्ठया **उप** समीपे तस्मिन्नेव **रताः मनुष्या** मननशीला **धर्मिणः** निष्कामधर्मिणः ये च **देवानां व्रयः** सकारान्तनपुंसकलिङ्गमेतत् व्रं वरं यं नियामकं ब्रह्म हृदि वि आ ओहते व्योहते **वहन्ति साम्नः** विष्णोः सकाशात् **परमुत्तमं च** न विदुः तेभ्यो **नः सदा ब्रूहीति** द्वितीयमन्त्रस्यार्थः । **विद्येति** ॥ **विद्या** विद्यादेवता **ब्राह्मणं** वायुं प्रत्याजगाम ततो हे **वायो** मां **गोपाय** रक्ष अहं ते तव **शेवधिः** निधिरस्मि **मामनार्यकाय** 'तितिक्षवः कारुणिकाः सुहृदः सर्ववेदिनाम् । अजातशत्रवः शान्ताः साधवः साधुभूषणाः । मय्येवानन्यभावेन भक्तिं कुर्वन्ति ये दृढम् । मदर्थे त्यक्तकर्माणः त्यक्तस्वजनबान्धवाः । मदाश्रयकथाहृष्टाः' इत्यादिभागवतोक्तार्यलक्षणरहिताय **अनृजवे** विपरीतचित्तवृत्त्यादिमते **शठाय** मूर्खाय दोषदृशे वा **मां न ब्रूयाः ऋजवे** मर्माचीनज्ञानवते **आर्यकाय** अशठाय **नित्यं** नियमेन मां ब्रूहीत्यर्थः ॥ ४९ ॥ अ.९ ॥

## १०. ऐहिकाधिकरणम्

**(प्रारब्धकर्मप्रतिबन्धाभावे श्रवणमननादिभिः तज्जन्मन्येव ज्ञानं सम्भवति, अन्यथा जन्मान्तरे)**

अत्र नये ज्ञानस्य प्रतिबन्धकाभावे साधनसम्पत्तिजन्मन्येवोत्पत्तिसमर्थनम् । अन्यथा कदाचिदपि ज्ञानाभावप्रसङ्गेन ज्ञानार्थमुपासनं व्यर्थमिति पूर्वपादेन सङ्गतिः । ज्ञानं विषयः । साधनपूर्ति-जन्मन्येवोत्पद्यते जन्मान्तरे वेति संशयः । कृष्यादौ यागादौ चोभयथादर्शनं तद्बीजम् । सत्यपि प्रतिबन्धके साधनपूर्तिजन्मन्येवोत्पद्यत इति पूर्वपक्षः ॥

**॥ ॐ ऐहिकमप्रस्तुतप्रतिबन्धे तद्दर्शनात् ॐ ॥ ५० ॥**

ज्ञानमिति प्रकृतम् । अयमर्थः - **ज्ञानम्** अपरोक्षज्ञानम् **अप्रस्तुतप्रतिबन्धे** ज्ञानोदयप्रतिबन्धकत्वेन प्रसक्तप्रारब्धकर्मरूपप्रतिबन्धकाभावे **ऐहिकमेव** साधनसम्पत्तिजन्मन्येवोत्पद्यमानं **तद्दर्शनात्** तस्योक्तार्थस्य 'श्रुत्वाऽत्मानम्' इति सौपर्णश्रुतौ दृष्टत्वादिति ॥ प्रतिबन्धके सति तदपगमे जन्मान्तरे उत्पद्यते इति भावः ।

**'आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः' (बृ.४.४.५) इति दर्शनार्थं श्रवणादि विधीयते । तच्च दर्शनमैहिकमेव प्रारब्धप्रतिबन्धाभावे ।**

**'श्रुत्वाऽऽत्मानं मतिपूर्वं ह्युपास्य इहैव दृष्टिं परमस्य विन्देत् ।**
**यद्यारब्धं कर्म निबन्धकं स्यात्प्रेत्यैव पश्येद्योगमेवान्ववेक्ष्य ॥'**

**इति सौपर्णश्रुतौ तद्दर्शनात् ॥**

**अनादिजन्मसम्बन्धं निर्भेत्तुं पापपञ्जरम् ।**
**यावत्या सेवया शक्यं तावत्कार्यं न संशयः ॥**

**यावद्दूरे स्थितो गम्यात्तावद्गन्तव्यमेव हि ।**
**इह जन्मान्तरे वाऽपि तावत्यैव तु दर्शनम् ॥**

**श्रवणं मननं चैव निदिध्यासनमेव च ।**
**परे गुरौ च या भक्तिः परिचर्यादिकं हरेः ।**
**एषा सेवेति सम्प्रोक्ता यया तद्दर्शनं भवेत् ॥ इति च बृहत्संहितायाम् ॥**

**॥ इत्यैहिकाधिकरणम् ॥ १० ॥**

**भा.॥** श्रुत्युपन्यासपूर्वं सूत्रं व्याचक्षते- [१]**आत्मा वा इति** ॥ (प्रतिबन्धकाभावे इहैव, तत्सत्त्वे जन्मान्तरे इत्यत्र मानमाहुः- [२]**श्रुत्वेति** ॥ अत्र स्मृतिं चाहुः- [३]**अनादीति** ॥ **संहितायामिति** ॥ तद्दर्शनादित्यत्र सम्बध्यते ॥ ५० ॥ अ.१० ॥

**॥ इति ऐहिकाधिकरणम् ॥ १० ॥**

---

१. **आत्मा वा इति** ॥ व्या.(सं.१. पृ.४०)

२. **श्रुत्वेति** ॥ **आत्मानं** परमात्मानं **श्रुत्वा** अथ **मतिपूर्वं** मननपूर्वकम् **उपास्य** ध्यात्वा **इहैव** श्रवणादिसम्पत्तिजन्मन्येव **परमस्य** विष्णोः **दर्शनं** साक्षात्कारं **विन्देत्** प्राप्नुयात् । प्रतिबन्धकाभावे इति शेषः। **यदि आरब्धं** प्रारब्धं **निबन्धकम्** अपरोक्षज्ञानप्रतिबन्धकं कर्म स्यात् तर्हि **प्रेत्य** एतज्जन्मानन्तरं **योवं** श्रवणाद्युपायम् **अनु** पुनः **अवेक्ष्य** कृत्वा परमं पश्येदित्यर्थः ।

३. **अनादीति** ॥ **अनादि** प्रवाहतोऽनादि **जन्मसम्बन्धं** जन्मन उत्पत्तेः सम्बन्धः येन तत् जन्मसम्बन्धं जन्मप्रदमिति यावत् । **पापपञ्जरं** पापाख्यनीडं **यावत्या सेवया** यावज्जन्मभवेन सेवनेन **निर्भेत्तुं शक्यं** तावत्सेवनं कार्यमेव संशयो नास्ति, यावद्दूरे ग्रामादितो दूरे स्थितो यावत् गम्यान् यावत् गत्वैव ग्रामादिकं प्राप्नुयात् तावद्दूरं गन्तव्यमेव हि प्रसिद्धम् **इह** जन्मनि वा, **जन्मान्तरेऽपि,** यावत्या सेवया पापपञ्जरं निर्भेत्तुं शक्यं तावत्यैव सेवया दर्शनं ब्रह्मापरोक्षज्ञानं भवेत्, सेवाशब्दार्थमाह- **श्रवणमिति** ॥ परे विष्णौ परिचर्या पूजा यया तद्दर्शनं भगवद्दर्शनं भवेत् । या च भक्तिः यच्च श्रवणादिकम् एषा सेवेति सम्प्रोक्तेत्यर्थः । शिष्टं स्पष्टम् ॥ ५० ॥ अ.१० ॥

## ११. मुक्तिफलाधिकरणम्

**(ज्ञानिनोऽपि प्रारब्धकर्मप्रतिबन्धाभावे तच्छरीरपातानन्तरमेव मोक्षः)**

अत्र नये प्रतिबन्धकाऽभावे ज्ञानस्य स्वोत्पत्तिजन्मसमनन्तरमेव मुक्तिजनकत्वसमर्थनम्। अन्यथा ज्ञानस्य मुक्तिजनकत्वाऽभावसम्भावनया 'विद्यैव तु' इति (३.३.२९) नयोक्तमयुक्तं स्यादिति तेन नयेन सङ्गतिः । ज्ञानसाध्यो मोक्षो विषयः। ज्ञानोत्पत्त्यवच्छेदशरीरपातानन्तरमेव भवति न वेति संशयः। उभयथाऽप्यदृष्टफले तदृष्टिस्तद्बीजम्। तद्देहपातानन्तरमेवेति पूर्वपक्षः ॥

**॥ ॐ एवं मुक्तिफलानियमस्तदवस्थावधृतेस्तदवस्थावधृतेः ॐ ॥ ५१ ॥**

एवं शब्दोऽवधारणे (पूर्वोक्तार्थपरामर्शे) च। तस्मिन् ब्रह्मणि अवस्था निष्ठा यस्येति विग्रहः। श्रुतावित्यर्थाल्लभ्यते । अयमर्थः- एवं ज्ञानस्य साधनसम्पत्तिजन्मन्येवोत्पत्त्यनियमवत् **मुक्तिफलानियमः** मुक्त्याख्यफलस्यापि **अनियम एव** ज्ञानोत्पत्तिदेहसमनन्तरमेवोत्पत्तिरिति नियमाऽभाव एव न तु मुक्त्यभावः। **श्रुतौ** 'ब्रह्मसंस्थोऽमृतत्वमेति' इति श्रुतौ **तदवस्थावधृतेः** तदवस्थस्य ब्रह्मज्ञानिनो मुक्त्यवधारणादिति । द्विरुक्तिरुक्तार्थस्य प्रामाणिकत्वसूचनाय । मुक्त्यनियम इति वक्तव्यं फलशब्दोपादनं ज्ञानस्य मुख्यफलं मुक्तिः न तु धर्मादिवदमुख्यं फलमिति द्योतनाय।

**एवमेव प्रारब्धकर्माभावे शरीरपातानन्तरमेव मोक्षः। तद्भावे जन्मान्तराणीत्यनियमः। 'धर्मी स्वर्गं विधर्मी निरयमेत्येव ब्रह्मसंस्थोऽमृतत्वमेत्येव ब्रह्मसंस्थोऽमृतत्वमेत्येव ब्रह्मसंस्थस्य मोक्षस्यैवावधाणात् ॥**

**'विद्वानमृतमाप्नोति नात्र कार्या विचारणा।**
**अवसन्नं यदारब्धं कर्म तत्रैव गच्छति।**
**न चेद्बहूनि जन्मानि प्राप्यैवान्ते न संशयः ॥' इति नारायणाध्यात्मे ॥५१॥**

॥ इति मुक्तिफलाधिकरणम् ॥ ११ ॥

**॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते ब्रह्मसूत्रभाष्ये तृतीयाध्यायस्य चतुर्थः पादः ॥**

**भा.** ॥ सूत्रं व्याचक्षते- **एवमिति** ॥ ज्ञानोत्पत्तिवदेवेत्यर्थः । **अनियम** इति ॥ इत्यनियम एवेत्यर्थः, न तु मुक्त्यभाव इति भावः । अत्र श्रुतिमाहुः- [1]**धर्मीति** ॥ अत्र स्मृतिं चाहुः- [2]**विद्वानिति** ॥ **अध्यात्म इति** ॥ मोक्षस्यावघारणा मोक्षस्यावधारणादिति वर्तते ॥ ५१ ॥ अ.११ ॥

॥ इति **मुक्तिफलाधिकरणम्** ॥ ११ ॥

## ॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितश्रीब्रह्मसूत्रभाष्यस्य व्याख्यायां भाष्यार्थसहितसूत्रार्थमणिमञ्जर्यां तृतीयाध्यायस्य चतुर्थः पादः ॥

| अ.(३) | पा(१) | सू | अ. |
|---|---|---|---|
| | १ | २९ | २० |
| | २ | ४२ | २० |
| | ३ | ६८ | ४२ |
| | ४ | ५१ | ११ |
| | (४)पा. | १९० | ९३ |

*****

१. **धर्मीति** ॥ धर्मी पुण्यकर्मवान् **विधर्मी** पापकर्मवान् ब्रह्मसंस्थो ब्रह्मदर्शीत्यर्थः । अन्यत् स्पष्टम् । द्विरुक्तिस्तात्पर्यार्था ।

२. **विद्वानिति** ॥ विद्वानपरोक्षज्ञानी अमृतं मोक्षं यत् यदि आरब्धं प्रारब्धं कर्म तत्रैव तद्देह एव अवसन्नमवसानं प्राप्तं तद्देहपर्यन्तमेव स्थितमिति यावत् । तद्देहपातानन्तरमेव अमृतं प्राप्नोति न चेत् तद्देह एव प्रारब्धनाशाभावे बहूनि जन्मानि प्रारब्धकर्मायत्तानेकजन्मानि प्राप्य अन्ते प्रारब्धक्षयान्ते अमृतं गच्छतीत्यर्थः । शिष्टम् सुगमम् ॥ ५१ ॥ अ.११ ॥

# श्रीमद्ब्रह्मसूत्रभाष्ये चतुर्थोऽध्यायः

## ॥ प्रथमः पादः ॥

### १. आवृत्त्यधिकरणम्

**(श्रवणमननादीनाम् आवृत्तिः कर्तव्या)**

॥ श्री गुरुभ्यो नमः ॥

## सूत्रार्थमणिमञ्जरी

### (भाष्यम्)

**फलं निगद्यतेऽस्मिन्नध्याये। कर्मनाशाख्यं फलमस्मिन्पादे। नित्यशः कार्यं सर्वथा भाव्यं साधनं प्रथमत उच्यते। प्रायिकत्वाच्चाध्यायानां पादनां च न विरोधः॥**

पूर्वाध्यायसङ्गतत्वेनैतदध्यायप्रतिपाद्यार्थमाहुः- **फलमिति ॥** मोक्षाख्यफलमित्यर्थः। प्रत्यासत्त्या पूर्वाध्यायोक्तज्ञानस्येति लभ्यते। एवं चाध्याययोः फलफलिभावरूपा सङ्गतिरिति भावः। ननु 'अनियमस्सर्वेषाम्, (३.३.३२) विद्यैव तु, (३.३.४८) अधिकोपदेशात्तु, (३.४.८) एवं मुक्तिफलानियमः' (३.४.५१) इत्यादिसूत्रैर्मोक्षो ज्ञानफलमित्युक्तमेवाऽतोऽयमध्यायो व्यर्थ इत्यत आहुः- **निगद्यते इति ॥** मोक्षस्वरूपं कीदृशमिति शङ्कायां, वादिविप्रतिपत्त्या मोक्षस्वरूपमन्यादृशमितिशङ्कायां च, ईदृशं कर्मक्षयोत्क्रान्तिमार्गभोगरूपमिति निर्णीयते सूत्रकृतेत्यर्थः। निपूर्वकगदधातोः प्रकृते शङ्कापूर्वकत्वोपलक्षितनिर्णयोऽर्थः। प्रथमपादार्थं दर्शयन्ति- **कर्मनाशेति ॥** सञ्चितप्रारब्धकर्मणोर्नाशः आगामि-कर्मणोऽश्लेषश्चेत्यर्थः। ननु 'आवृत्तिरसकृदुपदेशात्' इत्यादौ कर्मक्षयोक्त्यभावात्कथमेवमुच्यत इत्यत आहुः- **नित्यश इति ॥** अवश्यमित्यर्थः। **सर्वथेति ॥** सर्वप्रकारेण विघ्नेऽपि यावच्छक्त्यनुष्ठेयमित्यर्थः। सर्वथा भाव्यत्वादेवावश्यकमिति भावः। **प्रथमतः**- सप्तसु नयेषु। **उच्यत इति ॥** आवश्यकत्वद्योतनाय पुनरुच्यत इति भावः। ननु तर्हि फलाध्याये कर्मक्षयपादे चैषामन्तर्भावो न स्यादत आहुः- **प्रायिकत्वाच्चेति ॥** अध्यायानां समन्वयाध्यायादिव्यवहाराणां प्रायिकत्वात् बाहुल्येन तदर्थप्रतिपादकत्वाभिप्रायकत्वात् पादानां नामपादादिव्यवहाराणां प्रायिकत्वाच्चेत्यर्थः। अत्र नये

**ज्ञानार्थं श्रवणाद्यावृत्तेः कर्तव्यतासमर्थनम् । अन्यथा तत्त्वनिर्णयाद्ययोगात् श्रवणादेर्मोक्षजनकत्वं न स्यादिति 'तन्निर्धारणार्थ' (३.३.२५) इति नयेनाक्षेपिकीसङ्गतिः । श्रवणादिकं विषयः । सकृदनुष्ठेयमावर्तनीयं वेति संशयः । उभयविधसाधनदर्शनं तद्बीजम् । सकृदेवेति पूर्वः पक्षः ।।**

**।। ॐ आवृत्तिरसकृदुपदेशात् ॐ ।। १ ।।**

ज्ञानार्थकातः पदं वर्तते । अर्थाच्छ्रवणादेः, कार्येति लभ्यते । अयमर्थः- श्रवणादेः 'आत्मा वा अरे' इति श्रुतिविहितश्रवणादेः **आवृत्तिः** कार्या **असकृदुपदेशात्** 'स एषोऽणिमा, ऐतदात्म्यमिदं सर्वम्' इति श्वेतकेतुं प्रति उद्दालकेन पुनःपुनः (नवकृत्वः) उपदेशादिति ।।

**'आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः' (बृ.४.४.५) इत्यादीनां नाग्निष्टोमादिवदेकवारेणैव फलप्राप्तिः । किन्त्वावृत्तिः कर्तव्या । स य एषोऽणिमैतदात्म्यमिदं सर्वम्' (छं.६.८.७) इत्याद्यसकृदुपदेशात् ।। १ ।।**

भा.।। श्रुत्युपन्यासपूर्वं सूत्रं व्याचक्षते- [1]**आत्मा वा इति** ।। **इत्यादीनामिति** ।। इत्यादिविहित-श्रवणादीनामित्यर्थः । **एकवारेण**- सकृदनुष्ठानमात्रेण । हेतौ श्रुतिमाहुः- [2]**स य एष इति** ।। (ननु असकृदुपदेशाऽभ्याससिद्ध्यर्थं तत्कथमेतज्ज्ञापकत्वमिति चेन्न- उभयार्थत्वे बाधकाभावाद् विनिगमनाविरहाच्च ) ।। १ ।।

**युक्त्यन्तरेणोक्तार्थसाधनाय सूत्रम्-**

**।। ॐ लिङ्गाच्च ॐ ।। २ ।।**

**श्रवणादेरावृत्तिः कार्येति वर्तते । अयमर्थः**- श्रवणादेरावृत्तिः कार्या **लिङ्गाच्च** 'स तपोऽतप्यत पुनरेव वरुणं पितरमुपससार' इति अनुष्ठानावृत्तिरूपलिङ्गच्चेति ।।

---

१. **आत्मा वा इति** ।। व्या.(सं.१. पृ.४०) ।।

२. **स य एषोऽणिमेति** ।। (छा.६.८.७) प्रकृतो विष्णुः **सः** साररूपः **यः** नियामकः ज्ञानरूपो वा । **एषः** सर्वेष्टः इच्छारूपो वा **अणिमा** सूक्ष्मपरिमाणवान् सूक्ष्मज्ञानविषयो वा **इदं सर्वं** जगत् **ऐतदात्म्यं** एतत् सच्छब्दितं ब्रह्म **आत्मा** स्वामी यस्य तत् स्वार्थे ष्यञ् ऐतदात्म्यं विष्णुस्वामिकम् । यद्वा एष चासावात्मा च एतदात्मा तस्येदमित्यर्थे ष्यञ् ऐतदात्म्यमित्यर्थः ।। १ ।।

**'स तपोऽतप्यत, पुनरेव वरुणं पितरमुपससार' (तै.३.१.२) इत्याद्यावर्तन-लिङ्गाच्च ।**

**'नित्यशः श्रवणं चैव मननं ध्यानमेव च ।**
**कर्तव्यमेव पुरुषैर्ब्रह्मदर्शनमिच्छुभिः ॥' इति हि बृहत्तन्त्रे ॥ २ ॥**

**भा.॥ [1]स तप इति ॥** श्रुतान्नादिविषय एव पुनः पुनरालोचनं तथैव प्रश्नः एवंरूपलिङ्गादित्यर्थः । उक्तार्थे स्मृतिं चाहुः- **[2]नित्यश इति ॥ बृहत्तन्त्र इति ॥** तत्रेत्युक्तेरित्यर्थः । अस्य, लिङ्गाच्चेत्यस्य च, कर्तव्येति पूर्वसूत्रभाष्येऽन्वयः ॥ २ ॥ अ.१ ॥

॥ इत्यावृत्त्यधिकरणम् ॥ १ ॥

१. **स तप इति ॥** (तै.३.२) 'स तपस्तप्त्वा' इति वाक्यशेषः । वरुणपुत्रो भृगुः ब्रह्मज्ञानार्थं पितरं वरुणमुपससार वरुणस्तूपदिदेश अन्नादिरूपं जगत्कारणत्वादिविशिष्टं ब्रह्मेति स भृगुः तपसा अन्नशब्दिताऽनिरुद्धं जगज्जन्मादिकारणं साक्षात्कृत्य रूपान्तरसाक्षात्कारार्थं पुनरेव वरुणमुपससारेति बहुकृत्वः श्रूयते । तपः ध्यानम् अतप्यत अकृतेत्यर्थः । अन्यत् स्पष्टम् ।

२. **नित्यश इति ॥** स्पष्टम् ॥ २ ॥ अ.१ ॥

## २. आत्मोपगमाधिकरणम्

**(विष्णुः मम स्वामी इत्युपासना कर्तव्या)**

अत्र नये आत्मत्वोपासनस्य नित्यं कार्यत्वसमर्थनम् । सर्वानुस्यूतात्मत्वोपासनस्याऽनावश्यकत्वे पूर्वनयोक्तावृत्तिर्व्यर्था स्यादिति पूर्वनयेन(१) सङ्गतिः । आत्मत्वं विषयः । अवश्योपास्यं न वेति संशयः । नित्यशः कर्तव्यत्वोक्तिः गुणान्तरसाम्यं च तद्बीजम् । नेति पूर्वपक्षः ॥

**॥ ॐ आत्मेति तूपगच्छन्ति ग्राहयन्ति च ॐ ॥ ३ ॥**

उपदेशादिति वर्तते । यथायथमावृत्तिविपरिणामौ । अयमर्थः- **उपदेशात्** 'नान्यं विचिन्तये' इत्यादि-श्रुतिमनुसृत्य **आत्मा विष्णुः आत्मा** मम स्वामी **इति उपगच्छन्ति** जानन्ति उपासते **च ग्राहयन्ति च** शिष्येभ्य उपदिशन्ति च सन्त इति शेषः, अतः च तथा उपगच्छेत् **तु** जानीयादेव, उपासीतैव च, ग्राहयेच्च शिष्येभ्य उपदिशेदेव चेति ॥

**आत्मेत्युपदेश उपासनं च मोक्षार्थिभिः सर्वथा कार्यमेव । 'नान्यं विचिन्तय आत्मानमेवाहं विजानीयामात्मानमुपास आत्मा हि ममैष भवति' इति ह्युप-गच्छन्ति ॥**

**'आत्मेत्येवोपास्व, आत्मेत्येव विजानीहि नान्यं किञ्चन विजानथ आत्मा ह्येवैष भवति' इति ग्राहयन्ति च ॥**

**'आत्मेत्युपासनं कार्यं सर्वथैव मुमुक्षुभिः ।**
**नानाक्लेशसमायुक्तोऽप्येतावन्नैव विस्मरेत् ॥' इति भविष्यत्पर्वणि ॥**

**'आत्मा विष्णुरिति ध्यानं विशेषणविशेष्यतः ।**
**सर्वेषां च मुमुक्षूणामुपदेशश्च तादृशः ।**
**कर्तव्यो नास्य हानेन कस्यचिन्मोक्ष इष्यते ॥' इति च ब्राह्मे ॥**

॥ इत्यात्मोपगमाधिकरणम् ॥ २ ॥

**भा.**।। सूत्रं व्याचक्षते- **आत्मेत्युपदेश इति** ।। सूत्रार्थे श्रुतिमाहुः- [1]**नान्यमिति** ।। **इति हीति** ।। हि यतः इति श्रुत्योपगच्छन्ति जानन्ति उपासते च । श्रुत्यन्तरमाहुः- [2]**आत्मेति** ।। अत्रार्थे स्मृतिमाहुः- [3]**आत्मेति** ।। विष्णुर्जीवत्वेनोपास्य इति शङ्कावारणायाऽऽहुः- [4]**आत्मा विष्णुरिति** ।। **ग्राह्य इति** ।। यत उपगच्छन्ति ग्राहयन्ति च अतः, पर्वणि इत्युक्तेः, ग्राह्ये इत्युक्तेश्च, कार्यमेवेत्यन्वयः ।। ३ ।। अ.२ ।।

**।। इत्यात्मोपगमाधिकरणम् ।। २ ।।**

---

१. **नान्यमिति** ।। अहम् परमात्मनोऽन्यं स्वामीति न चिन्तये । आत्मानमेव स्वामीति विजानीयां परमात्मानमेव स्वामीति उपासे । हि यतः एष विष्णुः ममात्मा भवतीति प्रथमश्रुतेरर्थः । **ह्युपगच्छन्तीति** ।। भाष्यकारीयं वचनम् ।

२. **आत्मेति** ।। हे शिष्य विष्णुम् आत्मेत्येव स्वामीत्येवोपास्व आत्मेत्येव विजानीहि । अन्यं विष्णवन्यं कञ्चन न विजानथ आत्मेति न विजानीथाः । हि यतः एष विष्णुरात्मा स्वामी भवति अत इत्यर्थः । **ग्राहयन्ति चेति** ।। भाष्यकारीयं वाक्यम् ।

३. **आत्मेति** ।। आत्मा स्वामी एतावत् स्वामित्वमात्रमित्यर्थः । शिष्टं सुगमम् ।

४. **आत्मा विष्णुरिति** ।। विष्णुरात्मा स्वामी विशेषणविशेष्यतः स्वस्वामिभावादिभेदसम्बन्धेनैव न तु विष्णुरात्मा अहमिति अभेदेन ध्यानमुपासनं कर्तव्यं उपदेशश्च कर्तव्यः तादृशः विशेषणविशेष्यभावेन विष्णुः स्वामीत्याकारकः अस्यात्मत्वोपासनस्य मुमुक्षूणां मुमुक्षुभिरित्यर्थः । शिष्टं स्पष्टम् ।। ३ ।। अ.२ ।

## ३. न प्रतीकाधिकरणम्

**(नामादिप्रतिमायां ब्रह्मदृष्टिः न कर्तव्या, किन्तु तत्स्थत्वेनैव)**

अत्र नये विष्णुप्रतीकयोरैक्योपासनाभावसमर्थनम् । अन्यथा स्वामित्वोपासनं न स्यादिति पूर्वनयेन (४.१.२) सङ्गतिः । (छा.७) उक्तनामवागादिप्रतीकं विषयः । ब्रह्मतयोपास्यं न वेति संशयः । श्रुतिः अन्यत्वं च तद्बीजम् । ब्रह्मतयोपास्यमिति पूवपक्षः ॥

**॥ ॐ न प्रतीके न हि सः ॐ ॥ ४ ॥**

आत्मेति तूपगच्छन्तीति वर्तते । यथायथमावृत्तिविपरिणामौ । अयमर्थः- **हि** यतः **स** हरिः **प्रतीकं** 'नाम ब्रह्मेत्युपास्ते' इत्यादिश्रुत्युक्तनामादिप्रतीकं **न भवति** । अतः **प्रतीकम्** आत्मेति विष्णुरिति नोपगच्छेत् नोपासीत किन्तु **प्रतीके** आत्मास्तीत्युपगच्छेदिति ॥

**'नाम ब्रह्मेत्युपासीत' (छा.७.१.४) इत्यादिना शब्दभ्रान्त्या न प्रतीके ब्रह्मदृष्टिः कार्या ।**

**किन्तु तत्स्थत्वेनैवोपासनं कार्यम् ।**

**ब्रह्मतर्के च–**

**'नामादिप्राणपर्यन्तम् उभयोः प्रथमात्वतः ।**
**ऐक्यदृष्टिरिति भ्रान्तिरबुधानां भविष्यति ॥**

**नामादिस्थितिरेवात्र ब्रह्मणो हि विधीयते ।**
**सर्वार्था प्रथमा यस्मात् सप्तम्यर्था ततो मता' इति ॥ ४ ॥**

॥ इति न प्रतीकाधिकरणम् ॥ ३ ॥

भा. ॥ श्रुत्युपन्यासेन सूत्रार्थमाहुः- **'नाम ब्रह्मेतीति** ॥ **इत्यादिनेति** ॥ जातयेति शेषः ।

---

१. **नामेति** ॥ योऽधिकारी नाम नाम्नि उषोदेव्यां ब्रह्म उपास्ते अस्योपासकस्य उषोदेव्या व्याप्तदेशे यथेष्टाचरणं भवतीति सिद्धान्तेऽर्थः । पूर्वपक्षे तु- नाम ब्रह्मत्वेनोपास्ते इत्यर्थः । शिष्टं समानम् । भाष्ये उपासीतेति अर्थतोऽनुवादः ।

**शब्दभ्रान्त्येति** ॥ 'नाम ब्रह्मेत्युपास्ते' इत्यत्र नाम ब्रह्मशब्दयोः प्रथमान्तत्वेन सामानाधिकरण्यभ्रान्त्या 'वाचं ब्रह्मेत्युपास्ते' इत्यादौ वागादिकर्मकब्रह्मत्वप्रकारकोपासनाविधिरिति शब्दभ्रान्त्या चेत्यर्थः । **प्रतीके ब्रह्मदृष्टिरिति** ॥ ब्रह्मत्वप्रकारकप्रतीकविशेष्यकोपासनेत्यर्थः । उक्तार्थे स्मृतिमाहुः- [१]**नामादीति** ॥ **मतेतीति** ॥ ब्रह्मतर्के इत्युक्तेरित्यर्थः ॥ ४ ॥ अ.३ ॥

॥ **इति न प्रतीकाधिकरणम्** ॥ ३ ॥

१. **नामादीति** ॥ अत्र प्रथमापदं 'प्रथमयोः पूर्वसवर्णः, ङे प्रथमयोरम्' इति पाणिनिसूत्रस्थप्रथमापदवत् प्रथमाद्वितीयोभयपरम् । नामादिप्राणपर्यन्तं छान्दोग्ये सप्तमे 'नाम ब्रह्मेत्युपास्ते' इत्यारभ्य 'प्राणं ब्रह्मेत्युपास्ते' इत्यन्तवाक्यसमूहे उभयोः उपासनाविशेषणविशेष्यवाचकपदयोः प्रथमात्वतः प्रथमान्तद्वितीयान्तत्वान्यतरत्वादुभयोः ब्रह्मप्रतीकयोरैक्यदृष्टिरभेदोपास्तिः कर्तव्यतया विधीयते इति शेषः । इति भ्रान्तिः अबुधानामज्ञानां भविष्यति, उक्तज्ञानं प्रमैव किं न स्यादित्यत आह- **नामादिस्थितिरिति** ॥ नामादौ प्रतीके स्थितिरवस्थानं अत्र नाम ब्रह्मेत्यादिवाक्ये विधीयते अभिधीयते हि यतः अतो भ्रान्तिरित्यन्वयः । यतः प्रथमाविभक्तिः सर्वार्था सर्वविभक्त्यर्थप्रतिपादिका । द्वितीयापि सर्वार्था प्रथमातिरिक्तसर्वविभक्त्यर्था 'षट्सु द्वितीया' इत्युक्तेः ततः सप्तम्यर्था अधिकरणार्था मतेत्यर्थः ॥ ४ ॥ अ.३ ॥

## ४. ब्रह्मदृष्ट्यधिकरणम्

**(ब्रह्म सर्वोत्कृष्टम् इति उपास्यम्)**

अत्र नये पूर्णत्वोपासनस्यावश्यकत्वसमर्थनम् । अन्यथा भूमगुणस्य श्रेष्ठत्वं न स्यादिति 'भूम्नः क्रतुवत्' इति (३.३.३७) नयेन सङ्गतिः । पूर्णत्वोपासनं विषयः । आवश्यकं न वेति सन्देहः । उभयथापि दर्शनं तद्बीजम् । नेति पूर्वपक्षः ॥

**॥ ॐ ब्रह्मदृष्टिरुत्कर्षात् ॐ ॥ ५ ॥**

आत्मा, कार्येति वर्तते । आत्मनीति विपरिणम्यते । अयमर्थः- **आत्मनि विष्णौ ब्रह्मदृष्टिः** पूर्णत्वोपास्तिः कार्या **उत्कर्षात्** सर्वगुणपूर्णत्वोपास्तेरुत्कृष्टत्वादिति ॥

**ब्रह्मदृष्टिश्च सर्वथा कार्यैव परमेश्वरे । उत्कृष्टत्वात् ।**

**'ब्रह्मदृष्ट्या सदोपास्यो विष्णुः सर्वैरपि ध्रुवम् ।**
**महत्त्ववाची शब्दोऽयं महत्त्वज्ञानमेव हि ।**
**सर्वतः प्रीतिजनकमतस्तत्सर्वथा भवेत् ॥'**

**'आत्मेत्येव यदोपासा तदा ब्रह्मत्वसंयुता ।**
**कार्यैव सर्वथा विष्णोर्ब्रह्मत्वं न परित्यजेत् ॥' इति च ब्रह्मतर्के ॥ ५ ॥**

**भा.॥** (सूत्रं व्याचक्षते- **ब्रह्मेति** ॥) उक्तार्थे स्मृतिमाहुः- **'ब्रह्मदृष्ट्येति** ॥ **ब्रह्मतर्के** इति ॥ तत्रेत्युक्तेरित्यर्थः ॥ ५ ॥ अ.४ ॥

॥ इति ब्रह्मदृष्ट्यधिकरणम् ॥ ४ ॥

---

१. **ब्रह्मदृष्ट्येति ॥** विष्णुः सर्वैः **ब्रह्मदृष्ट्या** सर्वोत्कृष्टत्वोपासनेनोपास्यो विषयीकर्तव्यः **ध्रुवं** निश्चयः हि यतः **अयं शब्दो** ब्रह्मशब्दो **महत्ववाची सर्वतो** लक्ष्म्यादिभ्यः **महत्वज्ञानमेव** प्रीतिजनकम् अतः तत् ब्रह्मत्वोपासनं सर्वथा भवेत् । आधिक्येन कर्तव्यमिति तात्पर्यम् । **यदा** यथा **आत्मेत्येव** विष्णूपासना आवश्यकी तदा तथा **ब्रह्मत्वसंयुता** ब्रह्मत्वप्रकारिका **उपासना सर्वथा कार्यैव** । **ब्रह्मत्वं** ब्रह्मत्वोपासनं **न परित्यजेत्** । यद्वा ननु ब्रह्मत्वोपासनस्याऽवश्यकत्वे चतुर्गुणोपास्तिनियमभङ्गः स्यादित्यत आह- **आत्मेति ॥ यदा** काले **आत्मेत्येवोपासा** क्रियते तदा सोपासा **ब्रह्मत्वसंयुता** पूर्णत्वसंयुता कार्या । पूर्णस्वामित्ववानिति उपासनं कार्यमिति यावत् । शेषं पूर्ववदित्यर्थः ॥ ५ ॥ अ.४ ॥

## ५. आदित्याधिकरणम्

**(स्वजनकावयवेषु तत्तदवयवजन्यत्वेनोपासना देवैः कार्या)**

अत्र नये भगवदङ्गाश्रितत्वेन देवतोपासनस्यावश्यकत्वसमर्थनम् । अन्यथा तन्न्यायेन आत्मेति सूत्रोक्तात्मत्वोपासनस्याप्यनावश्यकत्वप्राप्तिरिति तेन (४.१.३) नयेन सङ्गतिः । अङ्गाश्रितत्वेन देवोपासनं विषयः । आवश्यकं न वेति संशयः । द्विविधोपास्तिदर्शनं तद्बीजम् । नेति पूर्वपक्षः ॥

**॥ ॐ आदित्यादिमतयश्चाङ्ग उपपत्तेः ॐ ॥ ६ ॥**

आत्मा कार्येति वर्तते । आदित्यादीति पृथक्पदं च । यथायथमावृत्तिविपरिणामौ । अयमर्थः- **आदित्यादिभिः** देवैः आत्मनो विष्णोः **अङ्गे** चक्षुराद्यङ्गेषु **आदित्यादिमतयश्च** आदित्यादिदेवाश्रयत्वमतयः तदाश्रयचक्षुराद्यङ्गकविष्णूपास्तय इति यावत् । कार्याः **उपपत्तेः** उपपन्नत्वादिति ॥ यस्य यत उत्पत्तिः तस्य तत्र लय इति नियमात् तत्र लयस्यापेक्षितत्वेन फलानुरोधित्वादुपासनायाः, स्वोत्पत्तिस्थानत्वाच्चोपपन्नत्वमिति भावः । उपासनाज्ञानविशेष इति द्योतनाय 'उपगच्छन्ति, ब्रह्मदृष्टिः, मतयः' इति भिन्नधातुप्रयोगः तथा ज्ञानमप्यावश्यकमिति द्योतनाय वा । मतय इति बहुवचनं तु एकाङ्गे बहव उपासका इति सूचनाय ॥

**'चक्षोः सूर्यो अजायत' (ऋ.१०.९०.१३) इत्याद्युपासनं च देवानां कार्यमेव । स्वोत्पत्तिस्थानत्वात् स्वाश्रयत्वान्मुक्तौ तत्र लयस्यापेक्षितत्वाच्चोपपन्नं तेषां तथोपासनम् ।**

**नारायणतन्त्रे च–**

**'आधिव्याधिनिमित्तेन विक्षिप्तमनसोऽपि तु ।**
**गुणानां स्मरणाशक्तौ विष्णोर्ब्रह्मत्वमेव तु ॥**
**स्मर्तव्यं सततं तत्तु न कदाचित्परित्यजेत् ।**
**अत्र सर्वगुणानां च यतोऽन्तर्भाव इष्यते ॥'**

**'स्वोत्पत्त्यङ्गं च देवानां विष्णोश्चिन्त्यं सदैव तु ।**
**तेषां तत्र प्रवेशो हि मुक्तिरित्युच्यते बुधैः ।**
**तदाश्रिताश्च ते नित्यं ततश्चिन्त्यं विशेषतः ॥' इति ॥ ६ ॥**

**॥ इत्यादित्याधिकरणम् ॥ ५ ॥**

**भा.॥** श्रुत्युपन्यासेन सूत्रं व्याचक्षते- [1]**चक्षोरिति ॥ इत्याद्युपासनमिति ॥** इत्यादिनोक्तस्वाश्रयत्वेन विष्ण्वङ्गोपासनमित्यर्थः । यद्यपि 'चक्षोस्सूर्योऽजायत' इत्यादावुत्पत्तिमात्रमुक्तं, तथापि 'आध्यानाय' (३.३.१५) इति न्यायेनोपासनमप्युक्तं बोध्यम् । **उपपन्नमिति ॥** युक्तिसिद्धमित्यर्थः । अधिकरणद्वयार्थे स्मृतिमाहुः- **नारायणतन्त्र इति ॥** अधिकरणद्वयार्थ उक्त इति शेषः । स्मृतिस्वरूपमाहुः- [2]**आधीति** ॥ ६ ॥ अ.५ ॥

**॥ इत्यादित्याधिकरणम् ॥ ५ ॥ (आदित्यादिमत्यधिकरणम्)**

---

१. **चक्षोः सूर्य इति ॥** (ऋ.१०.९०.१३) ॥ स्पष्टम् ॥

२. **आधीति ॥ विक्षिप्तमनसः** अन्यासक्तमनसः विष्णोर्गुणानां स्मरणाशक्तावपि विष्णोर्ब्रह्मत्वं पूर्णगुणत्वम् । अत्र पूर्णत्वगुणे **सर्वगुणानां** ज्ञानानन्दादिविष्णुधर्माणाम् **अन्तर्भावः** तद्रूपत्वं देवानां **स्वोत्पत्त्यङ्गं** स्वोत्पत्तिजनकं **विष्णोरङ्गं** यतः **तेषां** देवानां **तत्र** स्वोत्पत्त्यङ्गेषु यतश्च **ते** देवाः **नित्यं तदाश्रिताः** रूपान्तरेण भगवदङ्गाश्रिता इत्यर्थः । शिष्टं सुगमम् ॥ ६ ॥ अ.५ ॥

## ६. आसीनाधिकरणम्

**(आसीनः सन् उपासनां कुर्यात्)**

अत्र नये ध्याने आसनादिनियमसमर्थनम् । अन्यथोक्तोपासनं न स्यादिति (उपासनापरैः) अतीतनयैः सङ्गतिः । आसनादिकं विषयः । सर्वथाऽपेक्षितं न वेति संशयः । द्विविधसाधनदर्शनं तद्बीजम् । नेति पूर्वपक्षः ॥

**॥ ॐ आसीनः सम्भवात् ॐ ॥ ७ ॥**

ल्यब्लोपे पञ्चमी (सम्भवादिति।) च उपगच्छेदिति वर्तते। मुमुक्षुरित्यर्थाल्लभ्यते। अयमर्थः- मुमुक्षुः **सम्भवात्** उपासनस्य सम्यक् सम्भवमपेक्ष्य **आसीनश्च** आसने उपविशन्नेव उपगच्छेत् उपासीतेति ॥

**सर्वदोपासनं कुर्वन्नप्यासीनो विशेषतः कुर्यात् । तदा विक्षेपाल्पत्वेन सम्भवात् ॥ ७ ॥**

भा. ॥ सूत्रं व्याचक्षते- **सर्वदेति** ॥ **विशेषत इति** ॥ सर्वथेत्यर्थः ॥ ७ ॥

ननु न सर्वदोपासनमासनस्य सर्वथापेक्षितत्वं चाऽसम्भवि तत्र सदोपासनमेव ग्राह्यं विहितत्वात् आसनादि न ग्राह्यमिति शङ्कावारणाय सूत्रम्-

**॥ ॐ ध्यानाच्च ॐ ॥ ८ ॥**

मतयः, आसीनः, उपगच्छेदिति वर्तते । मतेरिति विपरिणम्यते । च आधिक्ये । अयमर्थः- **मतेः** ज्ञानसाधनोपासन(विशेष)स्य **ध्यानाच्च** स्मरणाधिक्यविशिष्टनैरन्तर्ययुक्तमनोवृत्तिरूपत्वात् **आसीनः** आसने उपविशन् उपगच्छेत् उपासीतेति ॥ स्मरणध्यानरूपोपासनयोर्मध्ये ध्यानस्यैवासनापेक्षत्वेन सर्वदोपासनस्य स्मरणरूपत्वेन न तयोर्विरोध इति भावः ॥

**'स्मरणोपासनं चैव ध्यानात्मकमिति द्विधा ।**
**स्मरणं सर्वदा योग्यं ध्यानोपासनमासने ॥**
**नैरन्तर्यं मनोवृत्तेर्ध्यानमित्युच्यते बुधैः ।**
**आसीनस्य भवेत्तत्तु न शयानस्य निद्रया ॥**

**स्थितस्य गच्छतो वाऽपि विक्षेपस्यैव सम्भवात् ।**
**स्मरणात्परमं ज्ञेयं ध्यानं नास्त्यत्र संशयः ॥' इति नारायणतन्त्रे ॥**

**अतो ध्यानत्वाच्च ॥ ८ ॥**

भा.॥ सूत्रं सप्रमाणं व्याचक्षते- [1]**स्मरणेति ॥ इति नारायणतन्त्र इति ॥** तत्रेत्युक्तमित्यर्थः । **अतो ध्यानत्वाच्चेति ॥** नारायणतन्त्रोक्तगुणयुक्तध्यानरूपत्वाच्चेत्यर्थः । अस्य सौत्रपदार्थमात्रविवरण-परत्वेन नान्वयापेक्षा । (तस्मात्) ध्याने मनोविक्षेपाऽभावार्थमासनमावश्यकमिति भावः ॥ ८ ॥

**ननु मनोविक्षेपाभावार्थमासनं नावश्यकं प्रत्याहारादिना चित्तविक्षेपाभावसिद्धेरिति शङ्कावारणाय सूत्रम्-**

**॥ ॐ अचलत्वं चापेक्ष्य ॐ ॥ ९ ॥**

**मुमुक्षुरासीन उपगच्छेदिति वर्तते । शरीरस्येत्यर्थाल्लभ्यते । अयमर्थः- मुमुक्षुः शरीरस्य अचलत्वं चापेक्ष्य मनोऽचाञ्चल्यफलकशरीराचाञ्चल्योद्देशेनापि आसीन उपगच्छेत् । आसने उपविशन् उप-सीतेति ॥ मनोविक्षेपाभावे शरीराचाञ्चल्यमेव मुख्यं कारणं न तु प्रत्याहारादिकमिति भावः ॥**

**'अचलं चेच्छरीरं स्यान्मनसश्चाप्यचालनम् ।**
**चलने तु शरीरस्य चञ्चलं तु मनो भवेत् ॥' इति ब्रह्माण्डे ॥ ९ ॥**

भा.॥ सूत्रं स्मृत्यैव व्याचक्षते- [2]**अचलमिति ॥ ब्रह्माण्ड इति ॥** उक्तमिति शेषः ॥ अस्य सूत्रेऽन्वयः ॥ ९ ॥

**स्मृतिभिरपि उक्तार्थसाधनाय सूत्रम्-**

---

१. **स्मरणेति ॥** अयमर्थः- उपासनमिति शेषः । **उपासनं** स्मरणोपासनं, विच्छेदेन मनोवृत्तिरूपोपासनं ध्यानात्मकं चेति द्विधैव । **ध्यानोपासनं** ध्यानरूपोपासनम् । **आसने** उपविश्य कार्यमिति शेषः । तन्नु ध्यानं तु शयानस्य न भवति निद्रया निद्राप्रसक्तेः । स्थितस्य तिष्ठतः गच्छतो वा न भवेत् । तदा विक्षेपस्यान्यासक्तेरेव सम्भवात् । ननु तर्हि लघुना स्मरणेनैवालं किं ध्यानेनेत्यत आह- **स्मरणादिति ॥** शिष्टं सुगमम् ॥ ८ ॥
२. **अचलमिति ॥** स्पष्टम् ॥ ९ ॥

**॥ ॐ स्मरन्ति च ॐ ॥ १० ॥**

महान्तः, उक्तमिति शेषः । अयमर्थः- महान्त उक्तमासनादिनियमं **स्मरन्ति** 'उपविश्यासने', 'समं कायशिरोग्रीवम्' इत्यादिस्मृतिभिरपि बोधयन्ति चेति ॥

**'समं कायशिरोग्रीवं धारयन्नचलं स्थिरः ।**
**सम्प्रेक्ष्य नासिकाग्रं स्वं दिशश्चानवकोलयन् ॥' इत्यादि ॥**

भा.॥ स्मृतिमाहुः- '**सममिति** ॥ **इत्यादीति** ॥ अस्य सूत्रे स्मरन्तिपदार्थे स्मृतावन्वयः ॥ १०॥

ननु ध्याने आसनसामान्यनियमवत् पद्मासनं वीरासनमित्याद्यासनविशेषदेशकालादिविशेषनियमोऽप्यस्तीति शङ्कावारणाय सूत्रम्-

**॥ ॐ यत्रैकाग्रता तत्राऽविशेषात् ॐ ॥ ११ ॥**

एकं वस्तु अग्रं मुख्यविषयो यस्य तत् एकाग्रं तस्य भावः एकाग्रता । मुमुक्षुः, आसीनो, ध्यानादुपगच्छेदिति वर्तते । ध्यानस्येति विपरिणम्यते । अयमर्थः- **यत्र** यस्मिन् देशे, काले, आसने वा, ध्यान **एकाग्रता** भवति, मुमुक्षुः तस्मिन्नासीनः स्थितस्सन् उपगच्छेत् उपासीत । **अविशेषात्** देशकालादिनियमप्रयुक्तविशेषस्य ध्यानेऽभावादिति । अमुककालादिरिति नियमो नेति भावः ॥

**देशकालावस्थादिषु यत्रैकाग्रता भवति तत्रैव स्थातव्यम् ।**

**'तमेव देशं सेवेत तं कालं तामवस्थितिम् ।**
**तानेव भोगान् भुञ्जीत मनो यत्र प्रसीदति ॥**
**न हि देशादिभिः कश्चिद्विशेषः समुदीरितः ।**
**मनः प्रसादनार्थं हि देशकालादिचिन्तना ॥' इति वाराहे ॥ ११ ॥**

॥ इत्यासीनाधिकरणम् ॥ ६ ॥

---

१. **सममिति** ॥ (गी. ६-१३) आसने उपविश्य **कायशिरोग्रीवं** कायं देहं शिरः कण्ठं च समं यथा भवति तथा धारयन् **स्थिरः** स्थिरमनाः स्वं नासिकाग्रमेव सम्प्रेक्ष्य **दिशः** दिगवस्थितविषयान् अनवलोकयन्नित्यर्थः । अस्य युञ्ज्यादित्यत्रान्वयः ॥ १० ॥

**भा.** ॥ सूत्रं व्याचक्षते- **देशेति** ॥ **अवस्थेति** ॥ आसनेत्यर्थः । अत्र स्मृतिमाहुः- [१]**तमेवेति** ॥ **वाराहे इति** ॥ तत्रेत्युक्तेरित्यर्थः ॥ ११ ॥ अ.६ ॥

**॥ इति आसीनाधिकरणम् ॥**

१. **तमेवेति** ॥ अवस्थितिरासनम् । यत्र देशादौ विशेषो ध्यानेऽतिशय इत्यर्थः । शिष्टं स्पष्टम् ॥ ११ ॥ अ.६ ॥

## ७. आप्रायणाधिकरणम्

**(आमोक्षम् उपासना अस्ति)**

अत्र नये ध्यानस्य मुक्तिपर्यन्तं कर्तव्यत्वसमर्थनम् । ज्ञानपर्यन्तमेव कर्तव्यत्वे ज्ञानिनां शुकादीनां ध्यानस्य मुक्तावतिशयाधायकत्वं न स्यादिति 'यावदधिकार (३.३.२०)मिति नयोक्तव्यवस्था न स्यादिति तेन नयेन सङ्गतिः । ध्यानं विषयः । ज्ञानपर्यन्तमेवावश्यकमुत मुक्तिपर्यन्तमपीति संशयः । ज्ञानसाधनत्वं ज्ञानिनामपि तद्दर्शनं तद्बीजम् । ज्ञानपर्यन्तमेवेति पूर्वपक्षः ॥

**॥ ॐ आ प्रायणात्तत्रापि हि दृष्टम् ॐ ॥ १२ ॥**

मुमुक्षुरुपगच्छेदिति वर्तते । **अपिः** मुक्तावप्युपासनाऽस्ति किमु मुक्तिपर्यन्तमिति कैमुत्यद्योतनाय । दृष्टशब्दः श्रुतिस्मृत्युभयपरः, आवर्तते च । अयमर्थः- **हि** यतः **तत्रापि** मुक्तावपि दृष्टम् उपासनं दृश्यते । तथा **दृष्टं** 'स यो ह वै' इति श्रुतिः 'श्रुणुयाद्यावदज्ञानम्' इति स्मृतिश्चास्तीति शेषः । अतश्च **आप्रायणात्** मुक्तिं मर्यादीकृत्य मुमुक्षुरुपगच्छेदिति ॥

**यावन्मोक्षस्तावदुपासनादि कार्यम् ।**

**'स यो ह वै तद्भगवन्मनुष्येषु प्रायणान्तमोङ्कारमभिध्यायीत' (प्र.उ.५.१)**
**इति हि श्रुतिः ॥**

**'सर्वदैनमुपासीत यावद्विमुक्तिर्मुक्ता अपि ह्येनमुपासते' इति सौपर्णश्रुतिः ।**

**'श्रुणुयाद्यावदज्ञानं मतिर्यावदयुक्तता ।**
**ध्यानं च यावदीक्षा स्यान्नेक्षा क्वचन बाध्यते ॥**

**दृष्टतत्वस्य च ध्यानं यदा दृष्टिर्न विद्यते ।**
**भक्तिश्चानन्तकालीना परमे ब्रह्मणि स्फुटा ।**
**आ विमुक्तेर्विधिर्नित्यं स्वत एव ततः परम् ॥' इति ब्रह्माण्डे ॥**

॥ इति (आ)प्रायणाधिकरणम् ॥ ७ ॥

**भा.**।। सूत्रार्थमाहुः- **यावदिति** ।। दृष्टमित्यनेन सूचितश्रुत्यादिकमाहुः- [१]**स यो ह वै इति** ।। **ब्रह्माण्ड इति** ।। **हि** यतः **श्रुतिः** सौपर्णश्रुतिश्चास्ति अतः, ब्रह्माण्ड इत्युक्तेश्च, कार्यमिति सम्बन्धः ।। १२ ।। अ.७ ।।

।। इति आप्रायणाधिकरणम् ।। ७ ।।

१. **स यो हवै इति** ।।(प.प्र.५.१) **हे भगवन्** पूज्य **एतत्** एतेषु ज्ञानिषु **मनुष्येषु** स यःकश्चित् **प्रायणान्तम्** उत्क्रमणपर्यन्तम् **ओङ्कारं** तद्वाच्यं परमात्मानम् **अभिध्यायीत** प्रणवेन चिन्तयेत् स पुरुषः तेन ध्यानेन कतमं लोकं प्राप्नोतीत्यर्थः । **सर्वदैनमिति** ।। हि यतो मुक्ता अपि उपासते अतो मुक्तिर्यावत् मुक्तिपर्यन्तं सर्वदा एनं परमात्मानम् उपासीतेत्यर्थः । **श्रुणुयादिति** ।। अज्ञानं यावत् अज्ञाननिवृत्तिपर्यन्तं तत्त्वं श्रुणुयात्, अयुक्तता यावत् विपर्ययनिवृत्तिपर्यन्तं, युक्तायुक्तसंशयनिवृत्तिपर्यन्तं वा, मतिः मननं कार्या । ईक्षा यावत् अपरोक्षज्ञानपर्यन्तं ध्यानं कर्तव्यम् । **ईक्षा** अपरोक्षज्ञानं **कचन** कदापि **न बाध्यते** मोक्षासाधिका न भवति । **दृष्टतत्त्वस्य च** अपरोक्षीकृतब्रह्मणोऽपि **ध्यानं** कर्तव्यमेव यदा काले दृष्टिरपरोक्षज्ञानं **न विद्यते** विच्छिन्नं भवति तदेति पूर्वेणान्वयः । परमे **ब्रह्मणि** स्फुटा निरुपाधिका अनन्तकालिका अपेक्षिता । अयं विधिः आमुक्तेः मुक्तिं मर्यादीकृत्य नित्यं सदा भवति । ततः परं मुक्तिप्राप्त्यनन्तरं स्वत एव विध्यभावेऽपि स्वभावत एवोक्तध्यानादिकं भवतीत्यर्थः ।। १२ ।। अ.७ ।।

## ८. तदधिगमाधिकरणम्

**(परमात्माऽपरोक्षे जाते पूर्वतनयोः अनारब्धयोः अनभीष्टयोश्च पुण्यपापयोः नाशः, उत्तरयोः अनारब्धयोः अनभीष्टयोः पुण्यपापयोरसम्बन्धः भवति ।)**

प्रासङ्गिकं समाप्य अत्र नये ज्ञानेन कर्मक्षयसमर्थनम् । अन्यथा मोक्षो न स्यादिति 'अनियमः सर्वेषाम्' इति (३.३.३२) सूत्रेण सङ्गतिः । ज्ञानं विषयः । मोक्षं साधयति न वेति संशयः । उभयविधार्थदर्शनं तद्बीजम् । नेति पूर्वपक्षः ॥

**॥ ॐ तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशौ तद्व्यपदेशात् ॐ ॥ १३ ॥**

अयमर्थः- **तदधिगमे** ब्रह्मापरोक्षज्ञाने सति **उत्तरपूर्वाघयोः** ज्ञानोत्तरकालज्ञानपूर्वकालजयोरघयोः **अश्लेषविनाशौ** असम्बन्धो विनाशश्च यथाक्रमं भवतः । **तद्व्यपदेशात्** तस्योक्तार्थस्य 'तद्यथा' इति छन्दोगश्रुतौ उक्तत्वादिति ॥ पूर्वोत्तरेति **वक्तव्ये एवमुक्तिः छन्दोगश्रुतौ** अश्लेषस्य प्रथमं विनाशस्य **अनन्तरमुक्तेः तदनुरोधेन** इति ज्ञेयम् ॥

**ब्रह्मदर्शन उत्तराघस्याश्लेषः पूर्वस्य विनाशश्च । 'तद्यथा पुष्करपलाश आपो न श्लिष्यन्त एवमेवंविदि पापं कर्म न श्लिष्यते (लिप्यते) (छां.४.१४.३) । 'तद्यथेषीकातूलमग्नौ प्रोतं प्रदूयतैवं हैवास्य सर्वे पाप्मानः प्रदूयन्ते' (छां.४.१४.३) इति तद्व्यपदेशात् ॥**

भा. ॥ सूत्रं व्याचक्षते- **ब्रह्मेति** ॥ श्रुती आहुः- **'तद्यथेत्यादि** ॥ १३ ॥

तुल्यन्यायेन द्वेषिपुण्यस्याप्यश्लेषविनाशप्रतिपादनाय सूत्रम्-

**॥ ॐ इतरस्याप्येवमसंश्लेषः पाते तु ॐ ॥ १४ ॥**

---

१. **तद्यथेति** ॥ (छा.४.१४.३) तत् तत्रार्थे वक्ष्यमाणदृष्टान्तो यथा **पुष्करपलाशे** पद्मपत्रे **एवंविदि** उक्तप्रकारेण ब्रह्मज्ञानिनि **पापं कर्म न श्लिष्यते** तत्फलनरकादिकं न भवतीत्यर्थः । शिष्टं स्पष्टम् ॥ **तद्यथेति** ॥ (छा.५.२४.३) यथा **इषीकातूलम्** इषीकातृणविशेषः । इषीका च तूलं चाग्नौ **प्रोतं** प्रविष्टं **प्रदूयते** प्रदह्यते । एवमेवास्य ज्ञानिनो ज्ञानात्पूर्वकृताः सर्वे पाप्मानः पापानि प्रदूयन्ते स्वरूपतो नश्यन्तीत्यर्थः ॥ १३ ॥

**असंश्लेष** इत्युपलक्षणं नाशस्यापि । **तु** शब्दोऽनुत्थानवाचकः । **पात** इति सप्तमी सामीप्य-रूपौपश्लेषिकेऽधिकरणे । इतरस्येत्यावर्तते । पुण्यस्येत्यनुक्त्वा इतरस्येत्युक्तिरावृत्तौ मानम् । अयमर्थः- **एवं** ज्ञानोदये सति ज्ञान्यघयोरिव **इतरस्य** ज्ञानीतरस्य विष्णुद्वेषिणः **पाते तु** अनुत्थानतमः प्रवेशे आसन्ने सति, द्वेषपरिपाकोत्तरमिति यावत् । **इतरस्यापि** द्वेषिपुण्यस्यापि **अश्लेषः** विनाशश्च भवतीति ॥ अश्लेषविनाशावित्यनुवृत्त्या सिद्धे पुनरश्लेषग्रहणं ज्ञानिविषये उत्तराघस्य प्रबलस्य सम्बन्धेन आनन्दह्रासकत्ववत् द्वेषिविषये प्रबलस्योत्तरपुण्यस्य सम्बन्धेन दुःखह्रासकत्वशङ्कावारणायेति **तन्त्रदीपिका** ॥

**पुण्यस्याप्येवमसंश्लेषः पाते । तु शब्दोऽनुत्थानवाची ।**

**'यथाऽश्लेषो विनाशश्च मुक्तस्य तु विकर्मणः ।**
**एवं सुकर्मणश्चापि पततस्तमसि ध्रुवम् ॥' इति चाऽग्नेये ॥ १४ ॥**

भा.॥ सूत्रं व्याचक्षते- **पुण्यस्येति** ॥ ननु तमोऽनुभवानन्तरं पुण्यभोगसम्भवात् तदश्लेषादिकल्पनं कुत इत्यत आहुः- **तुशब्द इति** ॥ सूत्रार्थे स्मृतिं चाहुः- **[१]यथेति** ॥ **आग्नेये इति** ॥ तत्रेत्युक्तेरित्यर्थः ॥ १४ ॥

ननु ज्ञानिद्वेषिणोर्ज्ञानद्वेषपरिपाकाभ्यामेव पापपुण्यक्षये ज्ञानाद्युदय एव मोक्षादिप्रसङ्ग इति शङ्कावारणाय सूत्रम्-

**॥ ॐ अनारब्धकार्ये एव तु पूर्वे तदवधेः ॐ ॥ १५ ॥**

अनारब्धे भोगाऽनुन्मुखे **कार्ये** फले ययोस्ते अनारब्धकार्ये । विनश्यत इति लभ्यते औचित्यात् । तुः स्मृतिद्योतकः । अयमर्थः- **अनारब्धकार्ये एव** भोगानुन्मुखसुखदुःखरूपफलके एव **पूर्वे** ज्ञानद्वेषपरिपाकाभ्यां पूर्वतने ज्ञानिपापद्वेषिपुण्ये नश्यतः । न त्वारब्धकार्ये अपि । **तदवधेस्तु** तस्य प्रारब्धकर्मनाशस्य अवधेः मोक्षं प्रति अवधित्वबोधक'तस्य तावदेव चिरम्' इति श्रुतेः 'यदनारब्धम्' इति स्मृतेश्चेति ॥

---

१. **यथेति** ॥ **मुक्तस्य** प्रत्यासन्नमुक्तस्य **विकर्मणो** ज्ञानोत्तरपापस्याश्लेषः । ज्ञानात्पूर्वस्य पापस्य विनाशश्च । यथा एवं तमसि प्रत्यासन्नपतनवतोऽपि अयोग्यस्य सुकर्मणः पुण्यकर्मणोऽश्लेषः विनाशश्च भवति ध्रुवं निश्चय इत्यर्थः ॥ १४ ॥

**अनारब्धकार्ये एव पूर्वे पुण्यपापे विनश्यतः। 'तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ सम्पत्स्यते' (छां.६.१४.२) इति तदवधेः॥**

**तु शब्दः स्मृतिद्योतकः।**

**'यदनारब्धपापं स्यात्तद्विनाश्यति निश्चयात्।**
**पश्यतो ब्रह्म निर्द्वन्द्वं हीनं च ब्रह्म पश्यतः।**
**द्विषतो वा भवेत्पुण्यनाशो नास्त्यत्र संशयः॥'**

**'तस्याप्यारब्धकार्यस्य न विनाशोऽस्ति कुत्रचित्।**
**आरब्धयोश्च नाशः स्यादल्पयोः पुण्यपापयोः॥' इति नारायणतन्त्रे॥ १५॥**

भा.॥ सूत्रं व्याचक्षते- **अनारब्धेति**॥ (ज्ञानानन्तरमपि प्रारब्ध(रूप)प्रतिबन्धकसद्भावः कुत इत्यत आहुः- [1]**तस्येति**॥) अत्र श्रुतौ प्रारब्धस्य प्रतिबन्धकत्वं न स्फुटं प्रतीयते, किं च प्रारब्धद्वेषिपुण्यस्य तमःप्रवेशं प्रति प्रतिबन्धकत्वं न प्रतीयतेऽतः तद्विषये **स्पष्टस्मृतिमाहुः**- [2]**यदनारब्धमिति**॥ **नारायणतन्त्र इति**॥ तत्रेत्युक्तेरित्यर्थः॥ १५॥

**ननु ज्ञानिपापयोरेवाश्लेषविनाशावुक्तौ न तु पुण्ययोः ततश्च ज्ञानिनोऽकाम्यपुण्यसत्त्वात् कथं मोक्ष इति शङ्कावारणाय सूत्रम्-**

**॥ ॐ अग्निहोत्रादि तु तत्कार्यायैव तद्दर्शनात् ॐ॥ १६॥**

**तत्कार्यायेति कर्मधारयः, षष्ठीतत्पुरुषश्च। ज्ञानिद्वेषिणोः प्रकृतत्वेऽपि ज्ञानिविषय एवेदमिति विशेषे**

---

१. **तस्य तावदिति**॥ (छा.६.१४.२) तस्यापरोक्षज्ञानिनः तावदेव तावानेव कालः चिरं मोक्षविलम्बः **यावत्** यावत्कालपर्यन्तं **न विमोक्ष्ये** प्रारब्धकर्मणः सकाशान्न विमुच्यते **अथ** प्रारब्धकर्मनिवृत्त्यनन्तरं ब्रह्म **सम्पत्स्यते** प्राप्नोतीत्यर्थः॥

२. **यदनारब्धेति**॥ यथा **निर्द्वन्द्वं** समाधिकरहितं **ब्रह्म पश्यतः यत् अनारब्धपापं** प्रारब्धभिन्नं पापं स्यात् **तत्पापं निश्चयाद्विनश्यति** विनश्यत्येव। एवं **हीनगुणाकृतिहीनत्वेन** जीवैक्येन च **ब्रह्म पश्यतः द्विषतो वा** द्विषतश्च **पुण्यनाशः** मिथ्याज्ञानपूर्वकालिकधर्मनाशो भवेत् तस्यापि द्वेषिपुण्यस्यापि कुत्रचिद्देशकालेऽपि आरब्धयोस्तु आरब्धकार्ययोरपि अल्पयोः पुण्यपापयोः नाशः फलह्रास उपमर्दः स्यादित्यर्थः। शिष्टं सुगमम्॥ १५॥

तुशब्दः । अयमर्थः- **अग्निहोत्रादि तु** ज्ञानात्पूर्वोऽग्निहोत्राद्यकाम्यं कर्म **तत्कार्यायैव** ज्ञानरूप-कार्यायैव । ज्ञानोत्तरं तत्कर्म तत्कार्यायैव ज्ञानकार्यमोक्षानुभवायैव भवति । **तद्दर्शनात्** तस्योक्तार्थस्य 'स एनमविदितः' इति श्रुतौ दृष्टत्वादिति ॥

**अग्निहोत्राद्यपि तु मोक्षाऽनुभवायैव । तुशब्दाद्ब्रह्मदर्शनवतः ।**

**'स एनमविदितो न भुनक्ति यथा वेदो वाऽननूक्तोऽन्यद्वा कर्माकृतं यदि ह वा अप्यनेवंविन्महत्पुण्यं कर्म करोति तद्धास्यान्ततः क्षीयत एवाऽत्मानमेव लोकमुपासीत स य आत्मानमेव लोकमुपास्ते न हास्य कर्म क्षीयतेऽस्माद्ध्येवाऽत्मनो यद्यत्कामयते तत्तत्सृजते' इति तद्दर्शनात् ॥ १६ ॥**

भा.॥ सूत्रं व्याचक्षते- **अग्निहोत्रादीति** ॥ अकाम्याग्निहोत्रादीत्यर्थः । **मोक्षानुभवायैव**-मोक्षजनकापरोक्षज्ञानायैव, मोक्षेऽतिशयानुभवायैव भवति । ननु ज्ञानिद्वेषिणः प्रकृतत्वात् ज्ञानिमात्रविषय इदमिति कथमित्यत आहुः- **तुशब्दादिति** ॥ अन्यस्माद्विशिनष्टीति शेषः । तत्र श्रुतिमाहुः- **'स एनमिति** ॥ १६ ॥

**मोक्षप्रतिबन्धककाम्यपुण्यसत्त्वात्कथं मोक्ष इति शङ्कावारणाय सूत्रम्-**

**॥ ॐ अतोऽन्यदपीत्येकेषामुभयोः ॐ ॥ १७ ॥**

अनारब्धकार्ये, अश्लेषविनाशाविति वर्तते । यथायथं विपरिणामः, प्राप्नोतीति शेषः । अयमर्थः- अनारब्धकार्यम् **अतः** अग्निहोत्राद्यकाम्यपुण्यात् **अन्यदपि** पूर्वोत्तरकाम्यपुण्यमपि अश्लेषविनाशौ प्राप्नोति कुतः **एकेषां** शाखिनाम् **उभयोः** अप्रारब्धयोः पापाऽनिष्टपुण्ययोः इति त्यागप्रकाशक 'तस्य पुत्रा' इति श्रुतेरिति ॥

**मुक्तावनुभवकारणाद्यदन्यत् तत्पुण्यमपि विनश्यति । अप्रारब्धमनभीष्टं च । तथा ह्येकेषां पाठ उभयोस्त्यागेन–**

**'तस्य पुत्रा दायमुपयन्ति सुहृदः साधुकृत्यां द्विषन्तः पापकृत्यम्' (शाट्यायनशाखा) इति ।**

१. स एनमिति ॥ व्या. (पृ. ११) ॥ १६ ॥

**अनारब्धकार्ये एव पूर्वे पुण्यपापे विनश्यतः । 'तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ सम्पत्स्यते' (छां.६.१४.२) इति तदवधेः ॥**

**तु शब्दः स्मृतिद्योतकः ।**

**'यदनारब्धपापं स्यात्तद्विनाश्यति निश्चयात् ।**
**पश्यतो ब्रह्म निर्द्वन्द्वं हीनं च ब्रह्म पश्यतः ।**
**द्विषतो वा भवेत्पुण्यनाशो नास्त्यत्र संशयः ॥'**

**'तस्याप्यारब्धकार्यस्य न विनाशोऽस्ति कुत्रचित् ।**
**आरब्धयोश्च नाशः स्यादल्पयोः पुण्यपापयोः ॥' इति नारायणतन्त्रे ॥ १५ ॥**

**भा.**॥ सूत्रं व्याचक्षते- **अनारब्धेति** ॥ (ज्ञानानन्तरमपि प्रारब्ध(रूप)प्रतिबन्धकसद्भावः कुत इत्यत आहुः- [1]**तस्येति** ॥) अत्र श्रुतौ प्रारब्धस्य प्रतिबन्धकत्वं न स्फुटं प्रतीयते, किं च प्रारब्धद्वेषिपुण्यस्य तमःप्रवेशं प्रति प्रतिबन्धकत्वं न प्रतीयतेऽतः तद्विषये **स्पष्टस्मृतिमाहुः-** [2]**यदनारब्धमिति** ॥ **नारायणतन्त्र इति** ॥ तत्रेत्युक्तेरित्यर्थः ॥ १५ ॥

**ननु ज्ञानिपापयोरेवाश्लेषविनाशावुक्तौ न तु पुण्ययोः ततश्च ज्ञानिनोऽकाम्यपुण्यसत्त्वात् कथं मोक्ष इति शङ्कावारणाय सूत्रम्-**

**॥ ॐ अग्निहोत्रादि तु तत्कार्यायैव तद्दर्शनात् ॐ ॥ १६ ॥**

**तत्कार्यायेति कर्मधारयः, षष्ठीतत्पुरुषश्च । ज्ञानिद्वेषिणोः प्रकृतत्वेऽपि ज्ञानिविषय एवेदमिति विशेषे**

---

१. **तस्य तावदिति** ॥ (छा.६.१४.२) तस्यापरोक्षज्ञानिनः तावदेव तावानेव कालः चिरं मोक्षविलम्बः **यावत्** यावत्कालपर्यन्तं **न विमोक्ष्ये** प्रारब्धकर्मणः सकाशान्न विमुच्यते **अथ** प्रारब्धकर्मनिवृत्त्यनन्तरं ब्रह्म **सम्पत्स्यते** प्राप्नोतीत्यर्थः ॥

२. **यदनारब्धेति** ॥ यथा **निर्द्वन्द्वं** समाधिकरहितं **ब्रह्म पश्यतः यत् अनारब्धपापं** प्रारब्धभिन्नं पापं स्यात् **तत्पापं निश्चयाद्विनश्यति** विनश्यत्येव । एवं **हीनगुणाकृतिर्हीनत्वेन** जीवैक्येन च **ब्रह्म पश्यतः द्विषतो वा** द्विषतश्च **पुण्यनाशः** मिथ्याज्ञानपूर्वकालिकधर्मनाशो भवेत् तस्यापि द्वेषिपुण्यस्यापि कुत्रचिद्देशकालेऽपि आरब्धयोस्तु आरब्धकार्ययोरपि अल्पयोः पुण्यपापयोः नाशः फलह्रास उपमर्दः स्यादित्यर्थः । शिष्टं सुगमम् ॥ १५ ॥

तुशब्दः । अयमर्थः- **अग्निहोत्रादि तु** ज्ञानात्पूर्वोऽग्निहोत्राद्यकाम्यं कर्म **तत्कार्यायैव** ज्ञानरूप-कार्यायैव । ज्ञानोत्तरं तत्कर्म तत्कार्यायैव ज्ञानकार्यमोक्षानुभवायैव भवति । **तद्दर्शनात्** तस्योक्तार्थस्य 'स एनमविदितः' इति श्रुतौ दृष्टत्वादिति ॥

**अग्निहोत्राद्यपि तु मोक्षाऽनुभवायैव । तुशब्दाद्ब्रह्मदर्शनवतः ।**

**'स एनमविदितो न भुनक्ति यथा वेदो वाऽननूक्तोऽन्यद्वा कर्माकृतं यदि ह वा अप्यनेवंविन्महत्पुण्यं कर्म करोति तद्धास्यान्ततः क्षीयत एवाऽत्मानमेव लोकमुपासीत स य आत्मानमेव लोकमुपास्ते न हास्य कर्म क्षीयतेऽस्माद्ध्येवाऽत्मनो यद्यत्कामयते तत्तत्सृजते' इति तद्दर्शनात् ॥ १६ ॥**

भा.॥ सूत्रं व्याचक्षते- **अग्निहोत्रादीति** ॥ अकाम्याग्निहोत्रादीत्यर्थः । **मोक्षानुभवायैव**- मोक्षजनकापरोक्षज्ञानायैव, मोक्षेऽतिशयानुभवायैव भवति । ननु ज्ञानिद्वेषिणः प्रकृतत्वात् ज्ञानिमात्रविषय इदमिति कथमित्यत आहुः- **तुशब्दादिति** ॥ अन्यस्माद्विशिनष्टीति शेषः । तत्र श्रुतिमाहुः- **'स एनमिति** ॥ १६ ॥

मोक्षप्रतिबन्धककाम्यपुण्यसत्त्वात्कथं मोक्ष इति शङ्कावारणाय सूत्रम्-

**॥ ॐ अतोऽन्यदपीत्येकेषामुभयोः ॐ ॥ १७ ॥**

अनारब्धकार्ये, अश्लेषविनाशाविति वर्तते । यथायथं विपरिणामः, प्राप्नोतीति शेषः । अयमर्थः- अनारब्धकार्यम् **अतः** अग्निहोत्राद्यकाम्यपुण्यात् **अन्यदपि** पूर्वोत्तरकाम्यपुण्यमपि अश्लेपविनाशौ प्राप्नोति कुतः **एकेषां** शाखिनाम् **उभयोः** अप्रारब्धयोः पापाऽनिष्टपुण्ययोः इति त्यागप्रकाशक'तस्य पुत्रा' इति श्रुतेरिति ॥

**मुक्तावनुभवकारणाद्यदन्यत् तत्पुण्यमपि विनश्यति । अप्रारब्धमनभीष्टं च । तथा ह्येकेषां पाठ उभयोस्त्यागेन–**

**'तस्य पुत्रा दायमुपयन्ति सुहृदः साधुकृत्यां द्विषन्तः पापकृत्यम्' (शाट्यायनशाखा) इति ।**

१. स एनमिति ॥ व्या. (पृ. ११) ॥ १६ ॥

**'अनभीष्टमनारब्धं पुण्यमप्यस्य नश्यति ।**
**किमु पापं परब्रह्मज्ञानिनो नात्र संशयः ॥' इति पाद्मे ॥ १७ ॥**

भा.॥ सूत्रार्थमाहुः- **मुक्ताविति** ॥ कुतो मानादेतदित्यत आहुः- **तथाहीति** ॥ **उभयोरिति** ॥ अनारब्धपापाऽनिष्टपुण्ययोरित्यर्थः । **त्यागेनेति** ॥ तृतीयार्थो ज्ञापकत्वं तस्य पाठेऽन्वयः । हि यतः तथोभयोस्त्यागेन पाठः सुहृदां पुण्यप्राप्तिप्रतिपादकपाठोऽस्ति । अतः विनश्यतीति पूर्वेण सम्बन्धः। श्रुतिमाहुः- [1]**तस्य पुत्रा इति** ॥ **कृत्यामिति** ॥ अस्य पाठेऽभेदेनान्वयः । उक्तार्थे स्पष्टप्रमाणमाहुः- [2]**अनभीष्टमिति** ॥ **पाद्मे इति** ॥ तत्रेत्युक्तेरित्यर्थः ॥ १७ ॥

**ज्ञानोत्तराकाम्यपुण्यस्य कथं मोक्षेऽनुप्रवेशः कर्मणो नश्वराल्पफलकत्वादिति शङ्कावारणाय सूत्रम्-**

**॥ ॐ यदेव विद्ययेति हि ॐ ॥ १८ ॥**

**अग्निहोत्रादि तत्कार्यायैवेति वर्तते । ज्ञानिन इति प्रकृतम् । इतिराद्यर्थे । हिः स्मृतिसूचकः । अयमर्थः- ज्ञानिनोऽग्निहोत्राद्यकाम्यं कर्म तत्कार्यायैव मोक्षेऽतिशयाऽनुभवायैव 'यदेव विद्यया' इत्यादि श्रुतेः । आदिना 'न हास्य कर्म क्षीयते' इति श्रुतेः । हि 'अल्पमात्र' इति स्मृतेश्चेति ॥ यदेवेति श्रुतौ ज्ञानिकर्मणः वीर्यवत्तरत्वमुच्यते । तच्चानल्पनाशशून्यफलकत्वं ज्ञेयम् ॥**

**ब्रह्मदर्शिकृतमल्पमपि पुण्यं महत्तममनन्तं च भवति । 'यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्यवत्तरं भवति' (छा.१.१.१०) इति श्रुतेः ॥ 'न हास्य कर्म क्षीयते' (बृ.३.४.१५) इति च ।**

**'अल्पमात्रः कृतो धर्मो भवेज्ज्ञानवतो महान् ।**
**महानपि कृतो धर्मो ह्यज्ञानां निष्फलो भवेत्' ॥ इति च भारते ॥**

---

१. **तस्य पुत्रा इति** ॥ तस्य ज्ञानिनः दायं पित्रादिद्रव्यं पुत्रा उपयन्ति सुहृदो योग्याः प्रत्युपकारमनपेक्ष्योपकर्तारः अप्रारब्धमनभीष्टं काम्यं पुण्यमेवोपयन्ति न तु प्रारब्धमिष्टमकाम्यं च अकाम्यस्य ज्ञाने, मोक्षेऽतिशये च, विनियुक्तत्वात् प्रारब्धस्य भोक्तव्यत्वात् इष्टहानेरपुरुषार्थत्वात् द्विषन्तः पापकृत्याम् अधर्ममुपयन्तीत्यर्थः ।
२. **अनभीष्टमिति** ॥ अस्य ज्ञानिन इत्यर्थः । शिष्टं स्पष्टम् ॥ १७ ॥

**भा.** ॥ सूत्रं व्याचक्षते ॥ **ब्रह्मदर्शीति** ॥ उक्तेऽर्थे श्रुतिस्मृतीराहुः- **'यदेवेत्यादि** ॥ **इति चेति** ॥ श्रुतेरिति वर्तते । श्रुतेश्चेति सम्बन्धः । **भारत इति** ॥ भारते इत्युक्तेश्चेत्यर्थः । अत्रेदमवधेयम्- अदृष्टं द्विविधं पापं पुण्यं चेति ॥ पापं द्विविधं नाश्यमनाश्यं चेति । तत्र नाश्यं विकर्मजं नरकाद्यनर्थप्रदम् । अनाश्यमुत्तमे विषये महापराधजन्यं मोक्षे आनन्दह्रासकरं यथा चन्द्रसुग्रीवयोः स्वोच्च(त्तम)दारपरिग्रहजन्यम्[२] । पुण्यमपि द्विविधम् इष्टमनिष्टं चेति । तत्रेष्टमकाम्यकर्मजम् । अनिष्टं काम्यकर्मजं स्वर्गाद्युपभोगप्रदम् । नाश्यपापमनिष्टपुण्यं च प्रत्येकं पुनर्द्विविधं - प्रारब्धमप्रारब्धं चेति । तत्राप्रारब्धं नाश्यं ज्ञानिनः पूर्वोत्तरं पापं ज्ञानिनमुत्सृज्य विष्णुद्वेषिषु गच्छति । अनिष्टमप्रारब्धं ज्ञानिनः पूर्वोत्तरं पुण्यं, ज्ञानिनमुत्सृज्य सुहृत्सु गच्छति । सूत्रोक्तनाशश्लेषाविमावेव । अथवा कयोश्चिदुक्तविधयोः पुण्यपापयोः स्वरूपतो नाशः कयोश्चित्सुहृत्सु दुर्हृत्सु सम्बन्धः । अनाश्यं पापं मोक्षे आनन्दह्रासकं भवति, पूर्वमिष्टपुण्यं ज्ञानाय उत्तरमिष्टपुण्यं मोक्षे(आनन्दस्य) उन्नाहाय भवति । ज्ञानिकृतमल्पमपि अकाम्यपुण्यं स्थिरानन्तफलकं भवतीति ।

एतत्सूत्रन्यायो द्वेषिविषयेऽप्यनुसन्धेयः । तथाहि- अदृष्टं द्विविधं पापं पुण्यं चेति । पापमपि

---

१. **यदेवेति** ॥ व्या. (पृ. १७९) **न हास्येति** ॥ व्या.(पृ. १२) **अल्पमात्रेति** ॥ ज्ञानवतः ज्ञानिभिः कृतः अल्पमात्रोऽपि स्वरूपतः केवलाल्पोऽपि महान् महाफलप्रदो भवेत् । अज्ञानामज्ञैः कृतो महानपि स्वरूपतो महानपि धर्मोऽग्निहोत्रादिकर्म निष्फलो व्यर्थो अल्पफलो वा भवेदित्यर्थः ॥ १८ ॥

२. लेखकप्रमादायत्तमिति प्रतिभाति । वस्तुतस्तु 'स्वोच्चापराधान्नान्यदोषोऽस्ति गरीयः' इति ब्रह्मसूत्रानुव्याख्यानोक्तरीत्या स्वोत्तमापराधः दोषेषु गरिष्ठ एव गणितः । तत्र मनुष्योत्तमैर्यदि अपरोक्षज्ञानात् पूर्वं स्वोच्चापराधः क्रियते तर्हि स अपरोक्षज्ञानप्रतिबन्धको भवति । अपरोक्षज्ञानानन्तरं स्वोच्चापराधघटने मुक्तौ स्वयोग्यानन्दाविर्भावो न भवति । उत्तमाधिकारिणां देवानां तु देवपदप्राप्तेः पूर्वमेव ब्रह्मापरोक्षस्य विद्यमानत्वेन प्रायस्तैः स्वोच्चापराधः न क्रियते । तैस्तपआदिभिः यज्ञादिभिर्वा स्वयोग्यताया अधिकमपि पुण्यं प्राप्स्यते । अत्र निदर्शनभूतौ चन्द्रसुग्रीवौ । अश्वमेधादियज्ञानुष्ठानेन चन्द्रः, रामसेवया सुग्रीवश्च स्वयोग्यताया अधिकं पुण्यं लेभे । तेन चोत्तम-कक्ष्यागतदेवसमानानानन्दः तेषां प्रदेयो भवति । योग्यतातिरेकेण फलं भगवता कदाऽपि न प्रदीयत इति शास्त्रोक्तदिशा सम्पादितमधिकं पुण्यं स्वोच्चापराधं निमित्तीकृत्य भगवता परिह्रियते । ततश्च योग्यतानुगुण्येनानन्दानुभवः मुक्तौ देवानां कदाऽपि न प्रणश्यति । आनन्दह्रासोऽपि कथञ्चन न भवति । तदेतदुक्तं भगवत्पादाचार्यैः ब्रह्मसूत्रानुव्याख्याने- 'प्राप्तह्रासो भवेत् क्वापि महता तु विकर्मणा । चन्द्र-सुग्रीवयोश्चैव स्वोच्चदारपरिग्रहात् । प्राप्तहानिरभून्नैव क्लृप्तहानिः कथञ्चन ॥' इति ।

**'अनभीष्टमनारब्धं पुण्यमप्यस्य नश्यति ।**
**किमु पापं परब्रह्मज्ञानिनो नात्र संशयः ॥' इति पाद्मे ॥ १७ ॥**

भा.॥ सूत्रार्थमाहुः- **मुक्ताविति** ॥ कुतो मानादेतदित्यत आहुः- **तथाहीति** ॥ **उभयोरिति** ॥ अनारब्धपापाऽनिष्टपुण्ययोरित्यर्थः । **त्यागेनेति** ॥ तृतीयार्थो ज्ञापकत्वं तस्य पाठेऽन्वयः । हि यतः तथोभयोस्त्यागेन पाठः सुहृदां पुण्यप्राप्तिप्रतिपादकपाठोऽस्ति । अतः विनश्यतीति पूर्वेण सम्बन्धः। श्रुतिमाहुः- **[1]तस्य पुत्रा इति** ॥ **कृत्यामिति** ॥ अस्य पाठेऽभेदेनान्वयः । उक्तार्थे स्पष्टप्रमाणमाहुः- **[2]अनभीष्टमिति** ॥ **पाद्मे इति** ॥ तत्रेत्युक्तेरित्यर्थः ॥ १७ ॥

ज्ञानोत्तराकाम्यपुण्यस्य कथं मोक्षेऽनुप्रवेशः कर्मणो नश्वराल्पफलकत्वादिति शङ्कावारणाय सूत्रम्-

**॥ ॐ यदेव विद्ययेति हि ॐ ॥ १८ ॥**

अग्निहोत्रादि तत्कार्यायैवेति वर्तते । ज्ञानिन इति प्रकृतम् । इतिराद्यर्थे । हिः स्मृतिसूचकः । अयमर्थः- ज्ञानिनोऽग्निहोत्राद्यकाम्यं कर्म तत्कार्यायैव मोक्षेऽतिशयाऽनुभवायैव 'यदेव विद्यया' इत्यादि श्रुतेः । आदिना 'न हास्य कर्म क्षीयते' इति श्रुतेः । हि 'अल्पमात्र' इति स्मृतेश्चेति ॥ यदेवेति श्रुतौ ज्ञानिकर्मणः वीर्यवत्तरत्वमुच्यते । तच्चानल्पनाशशून्यफलकत्वं ज्ञेयम् ॥

**ब्रह्मदर्शिकृतमल्पमपि पुण्यं महत्तममनन्तं च भवति । 'यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्यवत्तरं भवति' (छा.१.१.१०) इति श्रुतेः ॥ 'न हास्य कर्म क्षीयते' (बृ.३.४.१५) इति च ।**

**'अल्पमात्रः कृतो धर्मो भवेज्ज्ञानवतो महान् ।**
**महानपि कृतो धर्मो ह्यज्ञानां निष्फलो भवेत्' ॥ इति च भारते ॥**

---

१. **तस्य पुत्रा इति** ॥ तस्य ज्ञानिनः दायं पित्रादिद्रव्यं पुत्रा उपयन्ति सुहृदो योग्याः प्रत्युपकारमनपेक्ष्योपकर्तारः अप्रारब्धमनभीष्टं काम्यं पुण्यमेवोपयन्ति न तु प्रारब्धमिष्टमकाम्यं च अकाम्यस्य ज्ञाने, मोक्षेऽतिशये च, विनियुक्तत्वात् प्रारब्धस्य भोक्तव्यत्वात् इष्टहानेरपुरुषार्थत्वात् द्विषन्तः पापकृत्याम् अधर्ममुपयन्तीत्यर्थः ।
२. **अनभीष्टमिति** ॥ अस्य ज्ञानिन इत्यर्थः । शिष्टं स्पष्टम् ॥ १७ ॥

**भा.** ।। सूत्रं व्याचक्षते ।। **ब्रह्मदर्शीति** ।। उक्तेऽर्थे श्रुतिस्मृतीराहुः- '**यदेवेत्यादि** ।। **इति चेति** ।। श्रुतेरिति वर्तते । **श्रुतेश्चेति सम्बन्धः** । **भारत इति** ।। भारते इत्युक्तेश्चेत्यर्थः । अत्रेदमवधेयम्- अदृष्टं द्विविधं पापं पुण्यं चेति ।। पापं द्विविधं नाश्यमनाश्यं चेति । तत्र नाश्यं विकर्मजं नरकाद्यनर्थप्रदम् । अनाश्यमुत्तमे विषये महापराधजन्यं मोक्षे आनन्दह्रासकरं यथा चन्द्रसुग्रीवयोः स्वोच्च(त्तम)दारपरिग्रहजन्यम्[२] । पुण्यमपि द्विविधम् इष्टमनिष्टं चेति । तत्रेष्टमकाम्यकर्मजम् । अनिष्टं काम्यकर्मजं स्वर्गाद्युपभोगप्रदम् । नाश्यपापमनिष्टपुण्यं च प्रत्येकं पुनर्द्विविधं - प्रारब्धमप्रारब्धं चेति । तत्राप्रारब्धं नाश्यं ज्ञानिनः पूर्वोत्तरं पापं ज्ञानिनमुत्सृज्य विष्णुद्वेषिषु गच्छति । अनिष्टमप्रारब्धं ज्ञानिनः पूर्वोत्तरं पुण्यं, ज्ञानिनमुत्सृज्य सुहृत्सु गच्छति । सूत्रोक्तनाशश्लेषाविमावेव । अथवा कयोश्चिदुक्तविधयोः पुण्यपापयोः स्वरूपतो नाशः कयोश्चित्सुहृत्सु दुर्हृत्सु सम्बन्धः । अनाश्यं पापं मोक्षे आनन्दह्रासकं भवति, पूर्वमिष्टपुण्यं ज्ञानाय उत्तरमिष्टपुण्यं मोक्षे(आनन्दस्य) उन्नाहाय भवति । ज्ञानिकृतमल्पमपि अकाम्यपुण्यं स्थिरानन्तफलकं भवतीति ।

एतत्सूत्रन्यायो द्वेषिविषयेऽप्यनुसन्धेयः । तथाहि- अदृष्टं द्विविधं पापं पुण्यं चेति । पापमपि

---

१. **यदेवेति** ।। व्या. (पृ. १७९) **न हास्येति** ।। व्या.(पृ. १२) **अल्पमात्रेति** ।। ज्ञानवतः ज्ञानिभिः कृतः अल्पमात्रोऽपि स्वरूपतः केवलाल्पोऽपि महान् महाफलप्रदो भवेत् । अज्ञानामज्ञैः कृतो महानपि स्वरूपतो महानपि धर्मोऽग्निहोत्रादिकर्म निष्फलो व्यर्थो अल्पफलो वा भवेदित्यर्थः ।। १८ ।।

२. लेखकप्रमादायत्तमिति प्रतिभाति । वस्तुतस्तु 'स्वोच्चापराधान्नान्यदोषोऽस्ति गरीयः' इति ब्रह्मसूत्रानुव्याख्यानोक्तरीत्या स्वोत्तमापराधः दोषेषु गरिष्ठ एव गणितः । तत्र मनुष्योत्तमैर्यदि अपरोक्षज्ञानात् पूर्वं स्वोच्चापराधः क्रियते तर्हि स अपरोक्षज्ञानप्रतिबन्धको भवति । अपरोक्षज्ञानानन्तरं स्वोच्चापराधघटने मुक्तौ स्वयोग्यानन्दाविर्भावो न भवति । उत्तमाधिकारिणां देवानां तु देवपदप्राप्तेः पूर्वमेव ब्रह्मापरोक्षस्य विद्यमानत्वेन प्रायस्तैः स्वोच्चापराधः न क्रियते । तैस्तपआदिभिः यज्ञादिभिर्वा स्वयोग्यताया अधिकमपि पुण्यं प्राप्स्यते । अत्र निदर्शनभूतौ चन्द्रसुग्रीवौ । अश्वमेधादियज्ञानुष्ठानेन चन्द्रः, रामसेवया सुग्रीवश्च स्वयोग्यताया अधिकं पुण्यं लेभे । तेन चोत्तम-कक्ष्यागतदेवसमानानानन्दः तेषां प्रदेयो भवति । योग्यतातिरेकेण फलं भगवता कदाऽपि न प्रदीयत इति शास्त्रोक्तदिशा सम्पादितमधिकं पुण्यं स्वोच्चापराधं निमित्तीकृत्य भगवता परिह्रियते । ततश्च योग्यतानुगुण्येनानन्दानुभवः मुक्तौ देवानां कदाऽपि न प्रणश्यति । आनन्दह्रासोऽपि कथञ्चन न भवति । तदेतदुक्तं भगवत्पादाचार्यैः ब्रह्मसूत्रानुव्याख्याने- 'प्राप्तह्रासो भवेत् क्वापि महता तु विकर्मणा । चन्द्र-सुग्रीवयोश्चैव स्वोच्चदारपरिग्रहात् । प्राप्तहानिरभून्नैव क्लृप्तहानिः कथञ्चन ।।' इति ।

द्विविधम्- महदल्पश्चेति । तत्र महत्पापमन्यथोपासनापूर्वकमहदपराधपरोद्देश्यकोपदेशादिजन्यम् । अल्पं पापं विकर्मजम् । पुण्यमपि द्विविधम्- इष्टमनिष्टं चेति । तत्रेष्टं काम्यकर्मजन्यम् । अनिष्टं मिथ्याज्ञानपूर्वकमकाम्यकर्मजन्यं पापतुल्यं कर्मणो विहितत्वात्पुण्यत्वेन व्यवह्रियमाणम् । तत्राल्पं पापमिष्टपुण्यं च प्रत्येकं पुनर्द्विविधं प्रारब्धमप्रारब्धं चेति । तत्र द्वेषपरिपाकात्पूर्वभावि महापापम् 'अग्निहोत्रादि' (४.१.१६) इतिसूत्रन्यायेन द्वेषपरिपाकाय भवति । उत्तरमहापापं तमसि दुःखातिशयानुभवाय भवति । 'अतोऽन्यत्' (४.१.१७) इति सूत्रन्यायेन पाते आसन्ने अप्रारब्धं पूर्वोत्तरमल्पं पापं कर्तृभूतद्वेषिणमुत्सृज्य तत्सुहृत्सु विष्णुद्वेषिषु गच्छति । अप्रारब्धं पूर्वोत्तरमिष्टं पुण्यं कर्तृभूतभगवद्द्वेषिणमुत्सृज्य तद्विषत्सु भगवद्भक्तेषु गच्छति । इमावेव नाशाश्लेषौ । अथवा कयोश्चिदनारब्धयोः पुण्यपापयोः स्वरूपतो नाशः, कयोश्चिदुक्तव्यवस्थेति । 'यदेव विद्यया'(४-१-१८) इति सूत्रन्यायेन अल्पस्यापि द्वेषपरिपाकोत्तरपापस्य स्थिराधिकफलकत्वमिति । अनिष्टं पुण्यं न नश्यति नाप्यन्यत्र गच्छति । अत एवोक्तं टीकायाम्- 'अनिष्टं चेन्न नश्यतीत्यादि ग्राह्यं तेषामपि किञ्चित्पुण्यसंश्लेषदर्शनात्' इति । 'इतरस्यापि' (४.१.१४) इति सूत्रे तमसि पुण्यसम्बन्धः सर्वथा नास्तीति । **तन्त्रदीपिका** तु इष्टपुण्यासम्बन्धाऽभिप्रायेणेति न तद्विरोधः । उभयविषयेऽपि प्रारब्धपुण्यपापयोः गतिं वक्ष्यन्तीति ॥ १८ ॥

**ननु ज्ञानिद्वेषिणोर्मुक्तितमसी न सिद्ध्यतः तत्प्रतिबन्धकयोः प्रारब्धपुण्यपापयोः सत्त्वादिति शङ्कावारणाय सूत्रम्-**

**॥ ॐ भोगेन त्वितरे क्षपयित्वाऽथ सम्पत्स्यते ॐ ॥ १९ ॥**

पूर्वे तदवधेरिति वर्तते । ज्ञानी द्वेषीति प्रकृतम् । सम्पत्तिकर्मत्वेन योग्यतया ब्रह्म तम इति लभ्यते । तुशब्दः 'उपमर्दं च' (३.४.१६) इतिसूत्रोक्तविशेषे, एवार्थे च । क्त्वाप्रत्ययेनैवोत्तरमित्यर्थे लब्धे अथ पदमव्यवहितोत्तरमेवेति नियमसूचकम् । अयमर्थः- **इतरे** अनारब्धकाम्यकर्मभ्यां भिन्ने प्रारब्धपुण्यपापे तदवधेः तस्य चतुर्मुखस्य अवधिभूतशतायुषः **पूर्वे** **तु** पूर्वस्मिन् काले एव **भोगेन** **तु** भुक्तावशिष्टफलानुभवेन 'उपमर्दश्च' इति सूत्रन्यायात् ज्ञानद्वेषपरिपाकाभ्यां च **क्षपयित्वा** नाशयित्वा **अथ** तदव्यवहितोत्तरमेव ज्ञानी **सम्पत्स्यते** ब्रह्म सम्पत्स्यते प्राप्नोति । द्वेषी तमः सम्पत्स्यते इति ॥

**आरब्धपुण्यपापे भोगेन क्षपयित्वा ब्रह्म सम्पत्स्यते । अथेति नियमसूचकः ॥**

**'आरब्धपुण्यपापस्य भोगेन क्षपणादनु ।**
**प्राप्नोत्येव तमो घोरं ब्रह्म वा नात्र संशयः ॥**

**ब्रह्मणां शतकालात्तु पूर्वमारब्धसंक्षयः ।**
**नियमेन भवेन्नात्र कार्या काचिद्विचारणा' ॥ इति च नारायणतन्त्रे ॥ १९ ॥**

॥ इति तदधिगमाधिकरणम् ॥ ८ ॥

## ॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते श्रीमद्ब्रह्मसूत्रभाष्ये चतुर्थाध्यायस्य प्रथमः पादः ॥ ४ ॥ १ ॥

**भा.॥** सूत्रं व्याचक्षते - **आरब्धेति ॥ संपत्स्यते इति ॥** ज्ञानीति शेषः । इदमुपलक्षणं, द्वेषी तमः प्राप्नोतीत्यस्यापि । **अथेतीति** । अथशब्द इत्यर्थः । **नियमसूचकः**- अव्यवहितोत्तरमेवेति नियम-सूचकः तदवधेः पूर्वमेव प्रारब्धकर्मनाशः नाशाव्यवहितोत्तरमेव प्राप्तिरिति नियमद्वयघटितसूत्रार्थे स्मृतिं चाहुः - [1]**'आरब्धेति ॥ इति च नारायणतन्त्र इति ॥** तत्रेत्युक्तेश्चेत्यर्थः । ज्ञाप्यत्वं पञ्चम्यर्थः । तस्य सम्पत्स्यते इत्यत्रान्वयः ॥ १९ ॥ अ. ८ ॥

॥ इति तदधिगमधिकरणम् ॥ ८ ॥

## ॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितब्रह्मसूत्रभाष्यस्य व्याख्यायां भाष्यार्थसहितसूत्रार्थमणिमञ्जर्यां चतुर्थाध्यायस्य प्रथमः पादः ॥

---

१. **आरब्धेति ॥** ब्रह्मद्विट् आरब्धस्य पुण्यस्य पापस्य च क्षपणात् नाशात् अनु अनन्तरमेव घोरं तमः प्राप्नोत्येव । ब्रह्मदर्शी तु आरब्धपुण्यस्य पापस्य च क्षपणादनु ब्रह्मप्राप्नोत्येव न संशयः । नन्वारब्धभोगस्य निरवधिकत्वे ज्ञानिद्वेषिणोः ब्रह्मतमःप्राप्ती अनुपपन्ने इत्यत आह- **ब्रह्मणामिति ॥** ब्रह्मणां शतस्य यः कालः तत्समाप्तेः पूर्वमेव सर्वेषां ज्ञानिनामारब्धसंक्षयः प्रारब्धनाशो भवतीत्यर्थः । शिष्टं स्पष्टम् । एवं च प्रारब्धकर्मणोऽपर्यवसानं नास्तीति भावः ॥ १९ ॥ अ.८ ॥

# अथ चतुर्थाध्यायस्य द्वितीयः पादः

## १. वाङ्मनसाधिकरणम्

**(उमा रुद्रे विलीयते, सर्वे देवाः स्वोत्तमेषु श्रुत्युक्तक्रमेण विलीयन्त इति निरूपणम्)**

**देवानां मोक्ष उत्क्रान्तिश्चास्मिन्पाद उच्यते—**

एतत्पादार्थं दर्शयन्ति- **देवानामिति** ॥ इदमावर्तते । देवानां प्रकाशमानानां ज्ञानभोगाभ्यां प्रक्षीणकर्मणामिति यावत् । देवानां मुक्तियोग्यानां मोक्षः स्वोत्तमेषु प्रवेशेन तत्र देहलयः । उत्क्रान्तिश्च ब्रह्मनाड्या देहादुत्क्रमणं च, यथायोग्यमुच्यते इत्यर्थः । एवं च देवानां मोक्षः मनुष्याणामुत्क्रान्तिरिति ज्ञेयम् । न चैवं पादभेदप्रसङ्ग इति वाच्यम् । उभयजन्यदेहत्यागलक्षणफलस्यैव पादोपाधित्वात् । यस्मिन् देवतालये विवादः सोऽत्र पादे विचार्यते इति ज्ञेयम् । अत्र नये भगवत्प्राप्तिलक्षणमोक्षार्थं वागभिमानिन्या मनोऽभिमानिनि लयसमर्थनम् । अन्यथा मोक्षो न स्यादिति **'अनियमः'** (३.३.३२) इति सूत्रेण सङ्गतिः । वाग्विषयः । मनसि लीयते न वेति संशयः । 'तत्पूर्वकत्वात्' इति वाचो मनोजातत्वोक्तिः, विशेषानुक्तिश्च तद्बीजम् । न लीयत इति पूर्वपक्षः ॥

**॥ ॐ वाङ्मनसि दर्शनाच्छब्दाच्च ॐ ॥ १ ॥**

सम्पत्स्यत इति वर्तते । अयमर्थः- **वाक्** वागभिमानिसौपर्णीवारुण्यौ **मनसि** मनोऽभिमानि-गरुडशेषयोः **सम्पत्स्यते** लीयते **दर्शनात्** मनसा सङ्कल्पितस्यैव वाचा व्यवहारेण वाचो मनोवशत्व-दर्शनात् । **शब्दाच्च** 'तस्य यावन्न वाङ्मनसि सम्पद्यते' इति श्रुतेश्चेति ॥ अचेतनेऽन्योन्यवशत्वस्य देवता-निमित्तकत्वादिति भावः । सौपर्ण्यादिपदे प्रयोक्तव्ये अभिमन्यमानवाचकशब्दप्रयोगः मुक्ति-कालेऽभिमानिदेवतानां स्वोत्तमेषु लयवत् देहपातेऽभिमन्यमानवागादिवृत्तीनामपि स्वकारणेषु लयबोधनार्थम् ॥

**वागभिमानिन्युमा मनोभिमानिनि रुद्रे विलीयते । वाचो मनोवशत्वदर्शनात् । 'तस्य यावन्न वाङ्मनसि सम्पद्यते' (छा. ६.१५.१) इति शब्दाच्च ।**

**'उमा वै वाक् समुद्दिष्टा मनो रुद्र उदाहृतः ।**
**तदेतन्मिथुनं ज्ञात्वा न दाम्पत्याद्विहीयते ॥' इति स्कान्दे ।**

**भा.॥** (सूत्रार्थमाहुः- **वागिति ॥**) **उमेति ॥** सौपर्णीवारुण्यौ । **रुद्रे-** गरुडशेषयोः । अस्तु वाचो मनोवशत्वं तथापि तत्र लयः कुत इत्यत आहुः- [1]**तस्येति ॥** वाङ्मनःशब्दयोरुमारुद्रपरत्वे मानमाहुः- [2]**उमेति ॥ स्कान्द इति ॥** तत्रेत्युक्तेरित्यर्थः । वाङ्मनःशब्दावभिमानिपराविति शेषः । वागादिपदानामुमादिपरत्वेऽपि तदवस्थायां मोक्षाभावेन वारुण्यादिपरत्वं व्याख्येयम् । तदवस्थायां मोक्षात् । सौपर्ण्यादिपरत्वं च वागादिपदस्य सम्भवति तदादेरपि वागाद्यभिमानित्वात् ॥ १ ॥

**अन्यदेवानामपि लयप्रतिपादनाय सूत्रम्-**

## ॥ ॐ अत एव च सर्वाण्यनु ॥ २ ॥

**सम्पत्स्यत इति वर्तते । बहुवचनान्ततया विपरिणम्यते । चोऽप्यर्थे समुच्चये च । अयमर्थः- अत एव 'अग्नौ सर्वे देवाः' इति श्रुतेरेव सर्वाणि च इन्द्रियाद्यभिमानिदैवतानि, इन्द्रियादीनि च अनु यथायोग्यं सम्पत्स्यन्ते स्वोत्तमेषु, स्वकारणेषु च लीयन्त इति ॥ शब्दादिति प्रकृतेऽपि अत एवेत्युक्तिः नियामकानां बहुत्वेऽपि श्रुत्युक्तप्रकारेण लयबोधनाय ॥**

**अत एव च शब्दात् सर्वाणि दैवतानि यथानुकूलं विलीयन्ते । 'अग्नौ सर्वे देवा विलीयन्तेऽग्निरिन्द्रे इन्द्र उमायामुमा रुद्रे विलीयते एवमन्यानि दैवतानि यथानुकूलम्' इति हि गौपवनश्रुतिः ।**

**भा.॥** अत एवेत्यनूद्य शब्दादिति व्याख्यातम् । विशिष्टार्थमाहुः- **सर्वाणीति ॥** यथानुकूलं-यथायोग्यम् । शब्दः क इत्याकाङ्क्षायां तत्स्वरूपमाहुः- [3]**अग्नाविति** ॥ २ ॥ अ.१ ॥

**॥ इति वाङ्मनसाधिकरणम् (वागधिकरणम्) ॥ १ ॥**

---

१. **तस्य यावदिति ॥** (छा.६.१८.१) **तस्य** म्रियमाणस्य पुरुषस्य । यावत्पर्यन्तम् **वाक्** तदभिमानिनी उमा **मनसि** तदभिमानिनि रुद्रे न सम्पद्यते ग्रस्तव्यापारा न भवतीत्यर्थः । 'यदा तु वाक् मनसि सम्पद्यते' इति उत्तरवाक्यमप्युदाहर्तव्यम् । यद्यपीदं वाक्यद्वयं स्वाभाविकमरणकालिकवागादिदेवतापरमिति भाति । तथापि बाधकाभावात् चरमोत्क्रमणकालिकवागादिदेवतापरमपीति बोध्यम् ।

२. **उमेति ॥** वाक् श्रुतिस्थवाक्शब्दवाच्या उमा समुद्दिष्टा सौपर्णीवारुण्यौ समुद्धिष्टे मनः मनःपदवाच्यः रुद्रः शेषगरुडौ उदाहृतः । तत् वाङ्मनसाख्यं दांपत्यात् जायापतिभावादित्यर्थः । शिष्टं स्पष्टम् ॥ १ ॥

३. **अग्नाविति ॥** अग्निः सूर्यद्वारा इन्द्रे विलीयते इत्यर्थः । शिष्टं स्पष्टम् ॥ २ ॥ अ.१ ॥

## २. मनःप्राणाधिकरणम्

**(मनोऽभिमानी रुद्रः मुख्यप्राणे विलीयते)**

अत्र नये मनसः प्राणे लयसमर्थनम् । पूर्वनयवत्सङ्गतिः । मनो विषयः । प्राणे लीयते न वेति संशयः । मनसः प्राणोत्पन्नत्वं विशेषानुक्तिश्च तद्बीजम् । नेति पूर्वपक्षः ॥

**॥ ॐ तन्मनः प्राण उत्तरात् ॥ ॐ ॥ ३ ॥**

सम्पत्स्यत इति वर्तते । अयमर्थः- **तत्** वाग्लयविशिष्टं **मनः** मनोऽभिमानी शेषो गरुडश्च **प्राणे** चतुर्मुखे **सम्पत्स्यते** वाणीद्वारा लीयते । **उत्तरात्** 'वाङ्मनसि सम्पद्यते' इत्यपेक्षया उत्तरभूत'मनः प्राणे' इति श्रुतेरिति ॥

**'मनः प्राणे' (छां.६.१५.२) इत्युत्तराद्वचनान्मनोऽभिमानी रुद्रः प्राणे वायौ विलीयते । वायोर्वाव रुद्र उदेति वायौ विलीयते तस्मादाहुर्वायुर्देवानां श्रेष्ठः' इति च कौण्डिन्यश्रुतिः ॥ ३ ॥**

॥ इति मनःप्राणाधिकरणम् (मनोऽधिकरणम्) ॥ २ ॥

**भा.**॥ उत्तरश्रुतिमुपन्यस्य सूत्रं व्याचक्षते- [1]**मनःप्राणे इति** ॥ **रुद्रः-** शेषगरुडौ । **वायौ-** चतुर्मुखे । ननु प्राणादनुत्पन्नस्य कथं प्राणे लयोऽत आहुः- [2]**वायोर्वावेति** ॥ **श्रुतिरिति** ॥ च यतः श्रुतिः इति वक्ति अतश्चेत्यर्थः ॥ ३ ॥ अ.२ ॥

॥ इति मनःप्राणाधिकरणम् ॥

---

१. **मनःप्राणे इति** ॥ (छां.६.१५.१) मनः मनःशब्दवाच्यः पूर्वोक्तोऽर्थः प्राणे चतुर्मुखे सम्पत्स्यते इत्यर्थः ।

२. **वायोर्वावेति** ॥ **उदेति** उत्पद्यते **तस्माद्** वायुतः उत्पन्नत्वात् । **देवानां** रुद्रादिदेवानामित्यर्थः । स्पष्टमन्यत् ॥ ३ ॥ अ.२ ॥

## ३. अध्यक्षाधिकरणम्

**(मुख्यप्राणः परमात्मनि विलीयते)**

अत्र नये प्राणस्य परमात्मनि लयसमर्थनम् । अन्यथा कस्यापि मोक्षो न स्यादिति पूर्ववत् सङ्गतिः । प्राणो विषयः । भगवति लीयते न वेति संशयः । पूर्वनयवत् तद्बीजं, नेति पूर्वपक्षः ॥

**॥ ॐ सोऽध्यक्षे तदुपगमादिभ्यः ॐ ॥ ४ ॥**

तस्य ब्रह्मण उपगमः प्राप्तिरादिर्येषामनुप्राणनतत्प्रवेशादीनां (ते) तदुपगमादयः तेन तद्बोधकश्रुति-स्मृतयो लक्ष्यन्ते । सम्पत्स्यत इति वर्तते । अयमर्थः- **स** चतुर्मुखः **अध्यक्षे** अधिपतौ विष्णौ **सम्पत्स्यते** लीयते **तदुपगमादिभ्यः** ब्रह्मप्राप्तिब्रह्मानुप्राणनब्रह्मानुप्रवेशादिपर'सर्वे प्राणमुपगच्छन्ति' इत्यादि श्रुति-स्मृतिभ्य इति ॥

**स प्राणः परमात्मनि विलीयते । 'सर्वे प्राणमुपगच्छन्ति प्राणः परममुपगच्छति प्राणं देवा अनुप्राणन्ति प्राणः परमनुप्राणिति तस्मादाहुः प्राणस्य प्राण इति' 'प्राणः परस्यां देवतायाम्' ॥**

**'मुक्ताः सन्तोऽग्निमाविश्य देवाः सर्वेऽपि भुञ्जते ।**
**अग्निरिद्रं तथेन्द्रश्च वायुमाविश्य सोऽपि तु ॥**

**आविश्य परमात्मानं भुङ्क्ते भोगांस्तु बाह्यकान् ।**
**नह्यानन्दो निजस्तेषां परैर्लभ्यः कथञ्चन ।**
**किमु विष्णोः परानन्दो न ते विष्णाविति श्रुतेः ॥**

**प्राणस्य तेजसि लयो मार्गमात्रमुदाहृतम् ।**
**सर्वेशितुश्च सर्वादेस्तस्यान्यत्र लयः कथम् ॥' इत्यादिश्रुतिस्मृतिभ्यः ॥**

॥ इत्यध्यक्षाधिकरणम् ॥ ३ ॥

भा. ॥ सूत्रं व्याचक्षते- **स प्राण इति** ॥ चतुर्मुख इत्यर्थः । अत्र सर्वत्र प्राणपदं चतुर्मुखपरम् । यद्यपि 'प्राणस्तेजसि' इति प्राणस्य रमायां लयः श्रूयते तथापि स लयः प्रणत्वावस्थायमेव ।

चतुर्मुखत्वावस्थायां तु रमाप्राप्तिमात्रं न तु तत्र लयः । किन्तु परमात्मन्येवेति बोध्यम् । श्रुति स्मृतीराहुः- **'सर्वे इत्यादि ॥** ॥ अ.३ ॥

**॥ इत्यध्यक्षाधिकरणम् ॥**

---

१. **सर्व इति ॥ सर्वे** देवाः प्राणं चतुर्मुखम् **उपगच्छन्ति** प्राप्नुवन्ति प्राणः परं परमात्मानम् उपगच्छति । **देवाः** शेषादयः **प्राणमनु** अनुसृत्य **प्राणन्ति** चेष्टां कुर्वन्ति । **परं** परमात्मानम् । तस्मात्प्राणप्रवर्तकत्वादित्यर्थः । स्पष्टमन्यत् । **प्राणः परस्यामिति ॥** श्रुत्यन्तरमिदमिति **दीपिका** । परस्यां देवतायां विष्णौ प्राणः चतुर्मुखः लीयते इत्यर्थः । **मुक्ता इति ॥** सर्वेऽपि देवा अग्र्यधमाः अग्नौ लययोग्याः । देवा मुक्ताः कर्मक्षयम् प्राप्ताः सन्तोऽग्निमाविश्य तत्र स्थितान् भोग्यान् स्वभोग्यानन्दादीन् भुञ्जतेऽनुभवन्ति । अग्निरिन्द्रम् परंपरया प्रविश्य, इन्द्रो वायुं विरिञ्चं सौपर्णी सुपर्णसरस्वतीद्वारा प्रविश्य, सोऽपि वायुरपि परमात्मानमाविश्य, बाह्यकान् ब्रह्मानन्दात् मुक्तान्तरानन्दाच्च, बहिर्भूतान् स्वस्वरूपानन्दान् भुङ्क्ते बहिर्भूतांस्तु ब्रह्मविषयांश्च भुञ्जते । हि यतः तेषां मुक्तानां मध्ये एकस्य निजः स्वस्वरूपभूत आनन्दः परैरन्यैः कथञ्चन केनाप्युपायेन न लभ्यः विष्णोः परानन्दस्तु न प्राप्य इति किमु वक्तव्यं 'न ते विष्णोः' इति श्रुतेश्च न प्राप्य इत्यन्वयः । प्राणस्य तेजसि लयः 'प्राणस्तेजसि' इति छान्दोग्योक्तः लक्ष्म्यां प्राणस्य लयस्तु मार्गमात्रं तत्प्राप्तिमात्रं न तु तत्र प्रवेशः । हि यतः तस्य प्राणस्य सर्वेशितुः सर्वेश्वरात् सर्वदिः सर्वकारणात् परमात्मनोऽन्यत्र तेजसि कथं लयो भवेदित्यर्थः । अग्न्यादीनामपीन्द्रादौ प्रवेशे तत्रस्थितस्वयोग्यभोगानुभवो व्याख्येयः ॥ ४ ॥ अ.३ ॥

## ४. भूताधिकरणम्

**(अधमदेवतानां भूताभिमानिषु लयः)**

**अत्र नये देवानां समस्तभूतेषु लयसमर्थनम् । अग्नावेव सर्वलये 'यो यन्नियतः स तत्र लीयते' इति न्यायरूपबाधकेन मोक्षाऽभावः स्यादिति 'अनियमः' (३.३.१९)इति नयेन सङ्गतिः । 'अग्नौ सर्वे देवा विलीयन्ते' इत्युक्तसर्वदेवा विषयः । अग्नावेव लीयन्ते उत भूतान्तरेऽपीति संशयः । श्रुतिः अन्याधीनत्वं च तद्बीजम् । अग्नावेवेति पूर्वपक्षः ॥**

**॥ ॐ भूतेषु तच्छ्रुतेः ॐ ॥ ५ ॥**

सर्वाणि सम्पत्स्यन्त इति वर्तते । अयमर्थः- **सर्वाणि** उक्तान्यसर्वदैवतानि **भूतेषु** आकाशादि-भूताभिमानिषु **सम्पत्स्यन्ते तच्छ्रुतेः** तदर्थक'भूतेषु देवाः' इति बृहच्छ्रुतेरिति ॥

**भूतेष्वन्येषां देवानां लयः । 'भूतेषु देवा विलीयन्ते भूतानि परे न पर उदेति नास्तमेत्येकल एव मध्ये स्थाता' इति बृहच्छ्रुतेः ॥ ५ ॥**

॥ इति भूताधिकरणम् ॥ ४ ॥

भा.॥ सूत्रं व्याचक्षते- **'भूतेष्विति** ॥ श्रुतिमाहुः- **भूतेषु देवा इति** ॥ ५. ॥ अ.४ ॥

॥ इति भूताधिकरणम् ॥ ४ ॥

---

१. **भूतेष्विति ॥** देवा उक्तान्ये देवाः भूतानि पृथिव्याद्यभिमानिनः परे परमात्मनि भूतानां परमात्मनि लयस्तु वक्ष्यमाणपरंपरया द्रष्टव्यः । परः परमात्मा नोदेति नोत्पद्यते अस्तं लयं नैति न प्राप्नोति एकल एव स्वतन्त्र एव मध्ये देहमध्ये हृदये स्थाता विद्यमानः । यद्वा मध्ये उत्पत्तिलययोर्मध्ये स्थितावित्यर्थः । अन्यत् सुगमम् ॥ ५ ॥ अ.४ ॥

## ५. नैकस्मिन्नधिकरणम्

**(अग्नौ न सर्वेषां लयः)**

अत्र नये पुनर्देवानां भूतेषु लयसमर्थनम् । अन्यथोत्तमानामधमेषु लयापत्त्या पूर्वनयेषूक्तः स्वोत्तमेषु लयोऽयुक्तः स्यादिति पूर्वनयैः सङ्गतिः । देवा विषयः । सर्वभूतेषु लीयन्ते अग्नावेव वेति संशयः । श्रुतिः देवान्तराधीनत्वं च तद्बीजम् । अग्नावेवेति पूर्वपक्षः ॥

**॥ ॐ नैकस्मिन्दर्शयतो हि ॐ ॥ ६ ॥**

सर्वाणि सम्पत्स्यन्ते इति वर्तते । हिः हेतावधारणे च । इति श्रुती इति शेषः । अयमर्थः- **हि** यतः **श्रुती** 'पृथिव्यामृभवो विलीयन्ते' इति महोपनिषत् 'ऋभवः पृथिव्याम्' इति चतुर्वेदशिखा च इति **दर्शयतः** अतः **एकस्मिन् हि** एकभूताभिमानिन्यग्नावेव **सर्वाणि** दैवतानि **न** सम्पत्स्यन्ते इति ॥ किन्तु महोपनिषच्चतुर्वेदशिखोक्तप्रकारेण सर्वभूताभिमानिषु प्रत्येकं लीयन्त इति भावः ॥

**नैकस्मिन्भूते सर्वेषां देवानां लयः । 'पृथिव्यामृभवो विलीयन्ते वरुणेऽश्विनावग्नावग्नयो वायाविन्द्रः सोम आदित्यो बृहस्पतिरित्याकाश एव साध्या विलीयन्ते' । 'मृत्यवः पृथिव्यां वरुण आपोऽग्नयस्तेजसि मरुतो मारुत आकाशे विनायका विलीयन्ते' इति महोपनिषच्चतुर्वेदशिखा च दर्शयतः । अतः 'अग्नौ देवा विलीयन्ते' इति तत्र निर्दिष्टानामेव ॥**

॥ इति नैकस्मिन्नधिकरणम् (अनेकलयाधिकरणम्) ॥ ५ ॥

भा. ॥ सूत्रार्थमाहुः- **नैकस्मिन्निति** ॥ श्रुती आहुः- **[१]पृथिव्यामृभव इत्यादि** ॥ **दर्शयत इति** ॥

---

१. **पृथिव्यामिति** ॥ पृथिव्यां तदभिमानिधरादेव्याम् ऋभवः तन्नामका देवाः । वरुणेऽश्विनौ अग्नौ । जडाग्न्यभिमानिदेवे, अग्नयोऽग्निपुत्राः । वायौ, हिरण्यगर्भे, इन्द्रः सोम आदित्यः बृहस्पतिरित्याद्याः सर्वे देवा विलीयन्ते इत्यर्थः । विलीयन्ते इत्यस्य द्विर्ग्रहणात् प्रत्येकं सम्बन्धः ॥

**अत्रायं विवेकः** । तत्र इन्द्रस्य 'उन्द्र उमायाम्' इति श्रुत्युक्तक्रमेण सौपर्णी सुपर्णवाणीद्वारा । सोमोऽनिरुद्ध-कामवारुणी शेषवाणीद्वारा । सूर्यः बृहस्पतिः उक्तशक्रादिद्वारा, बृहस्पतिः शक्रादिद्वारा हिरण्यगर्भे विलीयन्ते इति । आकाशे तदभिमानिगणपतौ साध्याः तन्नामका देवाः विलीयन्त इत्यर्थः । ऋभव इति ॥ मृत्यव इति क्वचित्पाठः । पाठभेदेन तत्तन्नामका देवाः पृथिव्यां धरादेव्यां विलीयन्ते । आपः तदभिमानिवरुणाभिन्नदेवाः वरुणे विलीयन्ते अग्नयस्तेजसि तेजोऽभिमान्यग्नौ विलीयन्ते मरुतो भूतवाय्वादयो मरुद्गणाः मारुते चतुर्मुखे

यतो दर्शयतः अतो नैकस्मिन्नित्यन्वयः । ननु तर्हि 'अग्नौ देवा विलीयन्ते' इति श्रुतेः का गतिरत आहुः- [1]**अतोऽग्नाविति ॥** अत्र भाष्ये एकस्मिन् भूते लयः दर्शयति इत्यनुवर्तते ॥ यथायोग्यं विपरिणम्यते च । अयमर्थः- अतः प्रत्येकं भूतेषु लयस्य सिद्धत्वात् 'अग्नौ देवा विलीयन्ते' इति श्रुतिः अत्र महोपनिषदि चतुर्वेदशिखायां च निर्दिष्टानामेव अग्नौ लीयमानत्वेनोक्तानामग्निपुत्राणामेव एकस्मिन् भूते अग्नौ लयं दर्शयतीति ॥ ६ ॥ अ.५ ॥

**॥ इति नैकस्मिन्नधिकरणम् ॥**

---

इन्द्रादिद्वारेति शेषः विलीयन्ते, विनायकाः गणपतिपुत्राः गणपतिभृत्या वा, आकाशे विनायके विलीयन्ते इत्यर्थः। गणपतेर्गृहस्थत्वेन पुत्रसम्भव इति केचित् अन्ये तु तस्य ब्रह्मचारित्वेन भृत्या एवात्र विवक्षिता इति वदन्ति ।

तथा चायं लयक्रमनिर्णयः । मार्गो द्विविधः शेषमार्गो गरुडमार्गश्चेति । तत्राद्ये पक्षे (शेषमार्गे) गन्धर्वसिद्धचारणानां सुरानुगानां च कुबेरे लयः, अश्विनोर्गङ्गाद्यब्देवतानां च वरुणे लयः, वरुणस्य कुबेरस्य च सोमे लयः, सोमस्य विष्वक्सेनादिविष्णुपार्षदानां च अनिरुद्धे लयः, अनिरुद्धस्य सनकसनन्दनसनत्सुजातानां त्रयाणां यतीनां च कामे लयः, कामस्य वारुण्यां लयः, वारुण्याः शेषे लयः । गरुडमार्गे तु - निर्ऋते पितृणां च वर्णाश्रमाचाररतानां च देहादुत्क्रान्तानां मनुष्योत्तमानां च धर्मे लयः । धर्मस्य वैवस्वतादिद्वादशमनूनां प्रियव्रतादिचक्रवर्तिनां च स्वायम्भुवमनौ लयः । इतरेषां सर्वदेवानामग्नौ लयः । अग्नेः सूर्ये लयः । ऋभूणां मृत्यूनां च धरादेव्यां लयः, साध्यानां विनायकानां च गणपतौ लयः, गणपतेर्धरायाः सूर्यस्य च गुरौ लयः भृग्वादीनां प्रजापतीनां च दक्षे लयः, दक्षस्य गुरोः स्वायम्भुवमनोः मरुद्गणानां च इन्द्रे लयः, इन्द्रस्य सौपर्ण्यां लयः, सौपर्ण्या गरुडे लयः, गरुडस्य शेषस्य च सरस्वत्यां लयः । सरस्वत्याश्चतुर्मुखे लयः, चतुर्मुखस्य लक्ष्मीद्वारा हरौ लयः । स्त्रीणां स्वस्वपतौ लयः । अत्र भाष्यानुक्तार्थे प्रमाणं तु- 'सोमस्तु वारीशयुतोऽनिरुद्धं विशत्यसौ काममसौ च वारुणीम् । सा शेषदेवं स गिरञ्च सैव वायुं विशत्यञ्ज इतीह निर्णयः ॥ सूर्योऽग्नियुक्तो गुरुमाप्य तेन शक्रं सहैतेन सुपर्णपत्नीम् । तया सुपर्णं सह तेन वाणीं ब्रह्माणमेतद्गत एव याति । भृग्वादयो दक्षमवाप्य तेन प्राप्येन्द्रमेतेन सुपर्णपत्नीम् । विशन्ति ये मनवो राजमुख्याः मनुं प्रविश्यात्र गता महेन्द्रम् । आकाश उर्वीं च गुरुं प्रविश्य तेनैव यातः पुरुहूतदेवम् । सनादयो यतयः कामदेवं विशन्ति शिष्टा अपि हव्यवाहम् । वर्णाश्रमाचाररता मनुष्या धर्मं मनुं सोऽपि समेति काले । तमेव सर्वे पितरः सुरानुगाः सर्वे कुबेरं स च सोममेव । प्रयाति धर्मं निर्ऋतिस्तु शक्रं मरुद्गणाः पारिषदास्तथैव । सर्वेऽनिरुद्धं पृतनाधिपाद्यास्तुरश्रुतिर्हीत्थम् ॥' इत्याद्यनुव्याख्यानमिति बोध्यम् । इति लयक्रममाहुः **केचन । अन्येतु-** धर्मेण सह पितृणां स्वायम्भुवमनौ लय इति व्यत्यासं वदन्ति । इतरेषां सर्वदेवानामग्नौ लय इत्यत्र अग्निपुत्राणामग्नौ लय इति च वदन्ति । नन्वत्र ऋभुत्रयस्य पृथिवीसाम्योक्त्या कथं पृथिव्यां लय इति चेदुच्यते । अत एव ज्ञापकात् पृथिव्यपेक्षया ऋभुत्रयस्य किञ्चिदूनत्वं कल्प्यते इति ॥

१. **अग्नाविति ॥** व्या.(६५१-पु.) ॥ ६ ॥ अ.५ ॥

## ६. समनाधिकरणम्

### (लक्ष्म्याः लयो नास्ति)

अत्र नये 'तेजः परस्यां देवतायाम्' इति श्रुत्या आपातप्रतीत्या प्राप्तस्य श्रीतत्त्वलयस्याभावसमर्थनम् । अन्यथा प्रकृतेः अधिकारित्वापत्त्या 'कामादितरत्र' (३.३.२४) इति नयोक्तानधिकरित्वं न स्यादिति तेन नयेन सङ्गतिः । प्रकृतिर्विषयः लीयते न वेति सन्देहः । भगवदधीनत्वं नित्यमुक्तत्वं च तद्बीजम् । लीयते इति पूर्वपक्षः ॥

**॥ ॐ समना चासृत्युपक्रमादमृतत्वं चानुपोष्य ॐ ॥ ७ ॥**

अत्रानुपोष्येति न वसधातो रूपं, तथा सति निराहारमकृत्वेत्यर्थापत्तेः । किन्तु आसधातोः । धातोराकारस्योकारादेशः सस्य षकारश्च छान्दस इति ज्ञेयम् । आद्यश्चशब्दः नञोऽनुकर्षणार्थः । द्वितीय एवार्थः । समो देशकालव्याप्त्या सदृशो ना परमपुरुषो यस्याः सा समना । समासान्तविधेरनित्यत्वात् नद्यृतश्चेति न कप्प्रत्ययः । ऋतश्छन्दसीति सूत्रेण छन्दसि ऋदन्तोत्तरपदे बहुव्रीहौ कपो निषेधाच्च । न चेदं छन्दः- 'छन्दोवत्सूत्राणि भवन्ति' इति 'वृद्धिरादैच्' इति सूत्रे महाभाष्योक्तेः छान्दसत्वादेव ऋन्नेभ्य इति ङीबपि न । समनेत्यनेन सर्वदेशकालव्यापिनीति तत्पत्नीति च लब्धम् । तस्य हेतुगर्भत्वान्नित्यत्वे सति सर्वगतत्वादिति हेतुर्लभ्यते । न सम्पत्स्यत इति वर्तते । अयमर्थः- **समना** श्रीः न **सम्पत्स्यते** न लीयते । नित्यत्वे सति सर्वगतत्वात् **असृत्युपक्रमात्** संसारोपक्रमाभावात् यतः **अनुपोष्य** च अमृतत्वमनुपास्यैव तस्या मोक्षः नित्यमुक्तत्वमिति यावत् । **अतश्चेति** ॥ अत्र नित्यत्वे सति सर्वगतत्वमसृत्युपक्रमे, असृत्युपक्रमश्च नित्यमुक्तत्वे, तच्च लयाभावे, हेतुरिति विवेकः । असृतेरिति वाच्ये असृत्युपक्रमादित्युक्तिस्तु 'द्वावेव' इति श्रुतिसूचनाय । 'तेजः परस्यां देवतायाम्' इति श्रुतिस्तु भगवतोऽत्यन्तसामीप्यलक्षणं लयं वक्ति न तु अन्यलयवल्लयमिति ज्ञेयम् ॥

**देशतः कालतश्च व्याप्त्या समो ना परमपुरुषो यस्याः सा समना । संसारानुपक्रमात्स्वत एवामृतत्वं तस्याः ।**

**बृहच्छ्रुतिश्च– 'द्वौ वाव सृत्यनुपक्रमौ प्रकृतिश्च परमश्च द्वावेतौ नित्यमुक्तौ नित्यौ च सर्वगतौ चैतौ ज्ञात्वा विमुच्यते' इति । नैतावता साम्यम् ॥ ७ ॥**

**भा.**।। सूत्रस्थपदार्थानाहुः- **देशत इत्यादिना** ।। समनेत्यन्तेन प्रथमहेतुः सूचितः । उत्तरभाष्येण हेतुद्वयमुक्तम् । हेतुत्रयस्य पक्षधर्मत्वे मानमाहुः- **बृहच्छ्रुतिश्च** - '[1]**द्वौ वावेति** ।। **इतीति** ।। यत इति बृहच्छ्रुतिरस्ति, अतः समना संसारानुपक्रमात्स्वत एवामृतत्वं तस्या इति सम्बन्धः ।। ७ ।।

**उत्तरसूत्रमवतारयन्ति- नैतावतेति ।। (तस्या) नित्यमुक्तत्वाद्यस्तीत्येतावता साम्यं प्रकृति-पुरुषयोस्सर्वसाम्यं नेत्यर्थः । अत्र हेतुतया सूत्रं पठन्ति-**

**।। ॐ तदपीतेः संसारव्यपदेशात् ॐ ।। ८ ।।**

**अध्यक्षे, न समना इति वर्तते । समेति शेषः । अध्यक्षेणेति विपरिणम्यते । अयमर्थः- समना श्रीः अध्यक्षेण परमात्मना समा सर्वांशे(न) सदृशा न भवति । तदपीतेः तस्यां श्रियि अपीतेः लयस्य लीनमनसः संसारव्यपदेशात् संसारहेतुत्वेन 'समावेतौ' इति श्रुतावुक्तत्वादिति ।।**

**'समावेतौ प्रकृतिश्च परमश्च नित्यौ सर्वगतौ नित्यमुक्तावसमावेतौ प्रकृतिश्च परमश्च विलीनो हि प्रकृतौ संसारमेति विलीनः परमे ह्यमृतत्वमेति' इति सौपर्ण-श्रुतेः ।।**

**भा.**।। श्रुतिमाहुः- '[2]**समावेताविति** ।। **श्रुतेरिति** ।। नैतावता साम्यमित्यन्वयः ।। एवं च मोचकाऽमोचकयोर्न सर्वसाम्यमिति भावः । **तन्त्रदीपिकायां- तत्वप्रदीपरीत्या तदापीतेरिति पाठः उक्तः** । (तत्र) आङः प्रश्लेषेणाऽर्थो वर्णनीयः ।। ८ ।।

**हेत्वन्तरेण सर्वसाम्यनिषेधाय सूत्रम्-**

**।। ॐ सूक्ष्मं प्रमाणतश्च तथोपलब्धेः ॐ ।। ९ ।।**

**अध्यक्षे, समा, न, समनेति वर्तते । अधिकमिति शेषः । यथायथमावृत्तिविपरिणामौ । अयमर्थः- च यतः अध्यक्षं ब्रह्म समनुः श्रीतत्वात् अधिकं सूक्ष्मं प्रमाणतश्च ज्ञानानन्दाद्यैश्वर्यरूप-परिमाणेनाप्यधिकं तथोपलब्धेः 'सर्वतः प्रकृतिः' इति तुरश्रुतावुक्तप्रकारेण दर्शनात् । अतः समनाऽध्यक्षेण समा नेति ।।**

---

१. **द्वौ वावेति** ।। प्रकृतिर्लक्ष्मीः परमः परमात्मा विमुच्यते अधिकारीति शेष इत्यर्थः । शिष्टं स्पष्टम् ।।७।।

२. **समाविति** ।। नित्यमुक्तावित्यन्तं साम्योपपादकम् । हि यतोऽतः समावित्यन्वयः ।। ८ ।।

**सूक्ष्मत्वं चाधिकं ब्रह्मणः प्रकृतेः । ज्ञानानन्दैश्वर्यादिप्रमाणाधिक्यं च ।**

**'सर्वतः प्रकृतिः सूक्ष्मा प्रकृतेः परमेश्वरः ।**
**ज्ञानानन्दौ तथैश्वर्यं गुणाश्चान्येऽधिकाः प्रभोः ॥' इति तुरश्रुतिः ॥ ९ ॥**

**भा.**॥ सूत्रं व्याचक्षते- **सूक्ष्मत्वमिति** ॥ अत्रार्थे श्रुतिमाहुः- [१]**सर्वत इति** ॥ **तुरश्रुतिरिति** ॥ यतो वक्तीति शेषः । यतः प्रकृतेः चित्प्रकृत्यपेक्षया ब्रह्मणोऽधिकं सूक्ष्मत्वं ज्ञानानन्दाद्यैश्वर्याद्याधिक्यं च श्रुतिर्वक्ति अतो नैतावता साम्यमित्यन्वयः ॥ ९ ॥

**ननु प्रकृतेः पुरुषेण सर्वसाम्याऽभावे नित्यमुक्तत्वमपि न स्यादिति शङ्कावारणाय सूत्रम्-**

**॥ ॐ नोपमर्देनातः ॐ ॥ १० ॥**

**अध्यक्षेण समा समनेति वर्तते । उपमर्दकर्मत्वेन योग्यतया स्वातन्त्र्यादिगुणेति लभ्यते । अयमर्थः- समना** लक्ष्मीः **अतः** समत्वाऽसमत्वयोस्साधितत्वात् **नोपमर्देन** स्वातन्त्र्यादिगुणोपमर्दाऽभावेन स्वातन्त्र्याद्यसाधारणगुणान्विहायेति यावत् । **अध्यक्षेण समा** नित्यमुक्तत्वादिसाम्यवतीति ॥

**अतस्तस्य ये विशेषगुणास्तेषामनुपमर्देनैव साम्यम् ॥**

**'देशतः कालतश्चैव समा प्रकृतिरीश्वरे ।**
**उभयोरप्यबद्धत्वं तदबन्धः परात्मनः ।**
**स्वत एव परेशस्य सा चोपास्ते सदा हरिम् ॥**
**प्रकृतेः प्राकृतस्यापि ये गुणास्ते तु विष्णुना ।**
**नियता नैव केनापि नियता हि हरेर्गुणाः ॥' इति हि भविष्यत्पर्वणि ॥ १० ॥**

**भा.**॥ सूत्रभावमाहुः- **अत इति** ॥ **विशेषगुणा इति** ॥ स्वातन्त्र्यादय इत्यर्थः । ननु नित्यमुक्तत्वे स्वातन्त्र्याद्यपि स्यात् ततश्च विशेषगुणोपमर्द एवेत्यत आहुः- [२]**देशत इति** ॥ **भविष्यत्पर्वणीति** ॥ तत्रेत्युक्तेरित्यर्थः ॥ १० ॥

१. **सर्वत इति** ॥ सर्वतो ब्रह्मादिभ्यः प्रकृतेः श्रौतत्वात् अधिकाः प्रकृत्यानन्दाद्यपेक्षयेत्यर्थः । स्पष्टमन्यत् ॥९॥

२. **देशत इति** ॥ ईश्वरे ईश्वरेण उभयोः प्रकृतीश्वरयोः अबद्धत्वं नित्यमुक्तत्वं परेशस्य परमात्मनः तदबन्धः सः पूर्वोक्तः अबन्धो नित्यमुक्तत्वं स्वत एव अपराधीन एवास्तीति शेष इत्यर्थः । स्पष्टमन्यत् ॥ १० ॥

श्रुत्युक्तयुक्त्यन्तरेण किञ्चित्साम्यसमर्थनाय सूत्रम्-

**॥ ॐ अस्यैव चोपपत्तेरूष्मा ॐ ॥ ११ ॥**

अयमर्थः- **ऊष्मा** च ऊष्मापदघटिता 'द्विधा हीदं दृश्यते' इति श्रुतिश्च **अस्यैव** किञ्चित्साम्यस्यैव **उपपत्तेः** उपपादनसाधनी उपपादिकेति यावदिति ॥

**द्विधा हीदमवदृश्यते ऊष्मावदनूष्मावच्च । तत्रोष्मावत्परं ब्रह्म यन्न जिघ्रन्ति न पश्यन्ति न शृण्वन्ति न विजानन्ति । अथानूष्माव प्रकृतिश्च प्राकृतं च यन्न जिघ्रन्ति जिघ्रन्ति च यन्न पश्यन्ति पश्यन्ति च यन्न शृण्वन्ति शृण्वन्ति च यन्न जानन्ति जानन्ति च' इति सौपर्णश्रुतेश्च किञ्चित्साम्योपपत्तेः ॥ ११ ॥**

**भा.॥** श्रुतिमाहुः- **'द्विधा हीति ॥ उपपत्तेरिति ॥** उपपन्नत्वादित्यर्थः । अनुपमर्देनैव साम्यमिति पूर्वभाष्येऽन्वयोऽस्य ॥ ११ ॥

किञ्चित्साम्यमाक्षिप्य समाधानाय सूत्रम्-

**॥ ॐ प्रतिषेधादिति चेन्न शारीरात् ॐ ॥ १२ ॥**

अस्यैव समनेति वर्तते । एवोऽप्यर्थे च । यथायथमावृत्तिविपरिणामौ । अयमर्थः- **अस्य** सर्वदेशकालव्याप्तिरूपकिञ्चित्साम्यस्य **प्रतिषेधात्** 'असमो वाव एष भवति' इति चतुर्वेदशिखायां निषेधात् **समनुः** श्रियः इदमेव, किञ्चित्साम्यमपि **नेति चेन्न- अस्य** किञ्चित्साम्यस्य शारीरादेव जीवादेव **प्रतिषेधात्** व्यावर्तनमिति ॥ सर्वदेशवृत्तित्वरूपं किञ्चित्साम्यं जीवे नास्तीत्युक्तमिति भावः ।

---

१. **द्विधेति ॥** इदं चेतनजातम् ऊष्मावदनूष्मावच्चेति द्विधा अवदृश्यते हि प्रसिद्धम् । **ऊष्मा** नाम चक्षुराद्यगोचरत्वानुकूलसामर्थ्यं, **तत्र** चेतनसमुदाये, ब्रह्मण ऊष्मावत्त्वमुपपादयति - **तत्रेति ॥** यत् ब्रह्म न जिघ्रन्तीत्यादौ साकल्येनेति शेषः । न विजानन्ति मनसा, अथानन्तरमनूष्मावदुच्यते, प्रकृतिर्लक्ष्मीः, प्राकृतं ब्रह्मादि न जिघ्रन्ति केचनाधिकारिणः, जिघ्रन्ति केचनाधिकारिण इति विभागो ज्ञेय इत्यर्थः । शिष्टं स्पष्टम् । **केचित्तु** समा समत्वेन प्रतिपादने लक्ष्मीनारायणयोरेव प्रकृतत्वेन प्राकृतपदेन प्रकृतिसम्बन्धिरुक्मिण्याद्यवताररूपं ग्राह्यं न तु ब्रह्मादिकमिति वदन्ति ॥

**'असमो वा एष परो नहि कश्चिदेवं दृश्यते सर्वे ह्येतेऽणवो जायन्ते च म्रिन्यते च छिद्रा ह्येते भवन्ति । अथ परो न जायते न म्रियते पूर्णश्चैष भवति' इति चतुर्वेदशिखायां साम्यप्रतिषेधान्नेति चेन्न । शारीराद्धि साम्यं प्रतिषिध्यते ॥ १२ ॥**

भा.॥ प्रतिषेधश्रुतिमाहुः- [१]**असम इति ॥ शारीरादिति ॥** यतः शरीरान्निषिध्यतेऽत इति चेन्नेत्यन्वयः ॥ १२ ॥

उत्तरसूत्रमवतारयन्ति- **कुत इति ॥**

**कुतः ?**

उक्तचतुर्वेदशिखायाः सामान्यरूपत्वाच्छारीरे साम्यं निषिध्यते न प्रकृताविति कस्मात् प्रमाणात् कल्प्यत इत्याक्षेपार्थः । उक्तशङ्कावारणाय सूत्रम् -

**॥ ॐ स्पष्टो ह्येकेषाम् ॐ ॥ १३ ॥**

श्रुतौ समादिवाद इत्यर्थाल्लभ्यते। अस्यैव, प्रतिषेधात्, शारीरादिति वर्तते। प्रतिषेध इति विपरिणम्यते। अयमर्थः- **हि** यतः **एकेषां** माध्यंदिनायनशाखिनां **श्रुतौ** 'अथातः समाश्चाऽसमाश्च' इति श्रुतौ समादिवादः **स्पष्टः** अतोऽस्य किश्चित्साम्यस्य शारीरादेव प्रतिषेध इति ॥

**'अथातः समाश्वासमाश्चाभिधीयन्ते समासमाश्चाथ समानि ब्रह्मणो रूपाणि यैरुत्पत्तिः स्थितिर्लयो नियतिरायतिश्चैकं ह्येवैतद्भवत्यथासमा ब्रह्मेन्द्रो रुद्रः प्रजापतिर्बृहस्पतिर्ये के च देवा गन्धर्वा मनुष्याः पितरोऽसुरा यत्किश्चेदं चरमचरं चाथ समाऽसमा प्रकृतिर्वाव समाऽसमा सैषा हि नित्याऽजरा तद्वशा च' इति स्पष्टो हि माध्यन्दिनायनानां समादिवादः ॥ १३ ॥**

---

१. **असम इति ॥** हि यत एवं परमात्मवत् अणव अपूर्णाः छिद्राः दोषिणः पूर्णो व्याप्तः चशब्दाददोषश्चेत्यर्थः । स्पष्टमन्यात् ॥ १२ ॥

भा.॥ श्रुत्युपन्यासेन सूत्रं व्याचक्षते- [1]**अथात इति ॥ स्पष्टो हीति** ॥ हि यतः समादिवादः स्पष्टः अतः शारीरात्साम्यं निषिध्यते इति पूर्वभाष्येऽन्वयः ॥ १३ ॥

**स्मृत्याऽप्येतदर्थसमर्थनाय सूत्रम्-**

**॥ ॐ स्मर्यते च ॐ ॥ १४ ॥**

**प्रतिषेधः शारीरादस्यैवेति वर्तते । अयमर्थः- अस्य किञ्चित्साम्यस्य शारीरादेव प्रतिषेधः स्मर्यते च 'मत्स्यकूर्मवराहाद्या' इति स्मृत्यापि प्रतिपाद्यत इति ॥**

**'मत्स्यकूर्मवराहाद्याः समा विष्णोरभेदतः ।**
**ब्रह्माद्यास्त्वसमाः प्रोक्ताः प्रकृतिश्च समासमा ॥' इति वाराहे ॥ १५ ॥**

॥ इति **समनाधिकरणम्** ॥ ६ ॥

भा.॥ स्मृतिमुदाहरन्ति - [2]**मत्स्येति ॥ वाराह इति** ॥ सूत्रेऽन्वयः ॥ सूत्रार्थः स्पष्ट इति भावः ॥ १४ ॥ अ.६ ॥

॥ इति **समनाधिकरणम्** ॥ ६ ॥

---

१. **अथात इति ॥ अथ** अनन्तरम् **अतः** प्रयोजनसद्भावात् **समा** ब्रह्मसमाः सर्वधर्मैः **रूपाणि** मत्स्याद्यवतार-रूपाणि तैः रूपैः **नियतिः** नियमनम् **आयतिः** प्रवृत्तिः जगतो भवतीति शेषः । हि यतः एतदवतारजातम् **एकं** मूलरूपेण रूपान्तरैश्च अभिन्नं भवति । **ब्रह्मा** चतुर्मुखः प्रजापतिर्दक्षो देवाः उक्तान्ये देवाः अचरमचेतनम् समाऽसमा समा चासावसमा चेति विग्रहः उच्यते इति शेषः । अजरेति साम्योपपादनम् । तद्वशेत्यसाम्योप-पादनम् । तद्वशा विष्णुवशेत्यर्थः । शिष्टं स्पष्टम् ॥ १३ ॥

२. **मत्स्यकूर्मेति ॥** समाः सर्वधर्मैः समा इत्यर्थः । स्पष्टमन्यत् ॥ १४ ॥ अ.६ ॥

# ७. परलयाधिकरणम्

**(सर्वे देवाः क्रमात् परमात्मनि विलीयन्ते)**

अत्र नये चतुर्मुखेतरदेवानां मुक्तौ विष्णुप्राप्तिसमर्थनम् । अन्यथा ज्ञानिनां मोक्षाभावापत्त्या 'अनियमः सर्वेषाम्' (३.३.३२) इति सूत्रोक्तमयुक्तं स्यादिति (तन्त्रयेन) सङ्गतिः । भूतेषु लीयन्त इत्युक्तदेवा विषयः ।(३.३.३२) भगवति लीयन्ते न वेति संशयः । उभयथापि सम्भवस्तद्बीजं, नेति पूर्वपक्षः ॥

## ॥ ॐ तानि परे तथा ह्याह ॐ ॥ १५ ॥

सम्पत्स्यन्त इति वर्तते । श्रुतिरित्यर्थाल्लभ्यते । अयमर्थः - **तानि** भूतेषु लीनानि सर्वाणि दैवतानि **परे** विष्णौ **सम्पत्स्यन्ते** चतुर्मुखद्वारा लीयन्ते, **हि** यतः **श्रुतिः** 'सर्वे देवाः' इति श्रुतिः **तथा** उक्तप्रकारेणाऽह अत इति ॥

**प्राणद्वारेण सर्वाणि दैवतानि परमात्मनि विलीयन्ते । 'सर्वे देवाः प्राणमाविश्य देवे मुक्ता लयं परमे यान्त्यचिन्त्ये' इति कौषारवश्रुतिः ॥**

॥ इति परलयाधिकरणम् ॥ ७ ॥

भा.॥ सूत्रं व्याचक्षते- **प्राणद्वारेणेति** ॥ (आहेत्यस्य कर्तृतया) श्रुतिमाहुः- [1]**सर्वे देवा इति** ॥ **श्रुतिरिति** ॥ भाष्यस्य सूत्रेणैकवाक्यतयान्वयः । स प्रकारस्तु सूत्रार्थे उक्तः ॥ १५ ॥ अ.७ ॥

॥ इति परलयाधिकरणम् (तानिपराधिकरणम्) ॥ ७ ॥

---

१. **सर्वे इति** ॥ प्राणं विरिञ्चं मुक्ताः कर्मणः सकाशादित्यर्थः । शिष्टं सुगमम् ॥ १५ ॥ अ.७ ॥

# ८. अविभागाधिकरणम्

**(मुक्ताः भगवदधीनाः भगवदिच्छाऽनुसारेणैव कामयन्ते)**

अत्र नये देवानां मुक्तौ विष्णुवशत्वसमर्थनम् । अन्यथा विष्णोः सर्वोत्तमत्वाऽभावेन 'व्यतिहारो विशिंषन्ति' (३.३.३८)इति सूत्रोक्तमयुक्तं स्यादिति तेन नयेन सङ्गतिः । प्रकृता देवा विषयः । मुक्तौ स्वतन्त्रा न वेति संशयः । मुक्तत्वं स्वातन्त्र्यस्य भगवद्धर्मत्वं च तद्बीजम् । स्वतन्त्रा एव 'एते देवा' इति श्रुत्युक्तसत्यकामत्वसत्यसङ्कल्पादिमत्त्वादिति पूर्वपक्षः ॥

**॥ ॐ अविभागो वचनात् ॐ ॥ १६ ॥**

विभागो भेदः अविभाग ऐक्यम् । 'एते देवा' इति श्रुतिबलात् सत्यकामादीति लभ्यते । तस्यावृत्तिविपरिणामौ । प्रकृतत्वात् भगवतः मुक्तस्येति लभ्यते । अयमर्थः- भगवतः सत्यकामादिना मुक्तस्य सत्यकामादेः 'एते देवा' इति श्रुत्युक्तसत्यकामादेः **अविभागः** ऐक्यं तदधीनत्वमिति यावत् **वचनात्** 'कामेन मे काम' इति श्रुतेरिति ॥ ईश्वरेच्छाधीनसत्यकामत्वादिकं 'एते देवाः' इति श्रुतिर्वक्ति 'कामेन' इति श्रुत्यन्तरबलात् । एवं च मुक्तस्वातन्त्र्यसाधने हेत्वभाव इति ज्ञेयम् ॥

**एते देवा एतमात्मानमनुविश्य सत्याः सत्यकामाः सत्यसङ्कल्पा यथानिकाम-मन्तर्बहिः परिचरन्ति' इति गौपवनश्रुतिः । तत्परमेश्वरकामाद्यविभागेनैव तेषां सत्यकामत्वम् । कामेन मे काम आगाद्धृदयाद्धृदयं मृत्योः' (तै.आ.३.१५.४) इति वचनात् ।**

**'मुक्तानां सत्यकामत्वं सामर्थ्यं च परस्य तु ।**
**कामानुकूलकामत्वं नान्यत्तेषां विधीयते' ॥ इति ब्राह्मे ॥ १६ ॥**

॥ इत्यविभागाधिकरणम् ॥ ८ ॥

भा.॥ श्रुत्युपन्यासेन सूत्रं व्याचक्षते- **'एते देवा इति ॥ श्रुतिरिति ॥** यद्वक्तीति शेषः । श्रुतिर्यत्सत्यकामत्वं वक्ति तत्सत्यकामत्वमीश्वरकामाद्यविभागेनैव ईश्वरकामादिविषयविषयकत्वेनैव

१. **एते इति ॥ एते** प्रकृताः सायुज्यं प्राप्ता देवाः **सत्या** नित्याः **सत्यकामाः** सत्यार्भीष्टाः **सत्यसङ्कल्पाः** अबाधितसङ्कल्पाः **यथानिकामं** यथेच्छम् **अन्तः** ईश्वरदेहान्तः तद्बहिश्च परिचरन्तीत्यर्थः । स्पष्टमन्यत् ।

तेषां मुक्तानामित्यर्थः । वचनमाहुः - [1]**कामेनेति** ॥ अत्रैव स्मृतिमाहुः- **मुक्तानामिति** ॥ **ब्राह्म इति** ॥ तत्रेत्युक्तेरित्यर्थः ॥ १६ ॥ अ.८ ॥

**॥ इति अविभागाधिकरणम् ॥ ८ ॥**

१. **कामेनेति** ॥ (तै.आ. ३.१५.४) **मृत्योः** मारकस्य विष्णोः **कामेन** इच्छया मे कामः कामितमागात् प्राप्तं यतो मे हृदयम् । इच्छापि मृत्योर्हृदयादिच्छासकाशात् भवतीत्यर्थः । परममुक्तवाक्यमेतत् । **मुक्ताना-मिति** ॥ मुक्तानां सत्यकामत्वं सामर्थ्यं च ईश्वराधीनमिति शेषः । परस्य परमात्मनः कामानुकूलकामत्वमेव तेषां सत्यकामत्वं विधीयते उच्यते नान्यदित्यर्थः ॥ १६ ॥ अ.८ ॥

## ९. तदोकोऽधिकरणम्

**(मुक्तियोग्यानां मनुष्याणां देहादुत्क्रमणकाले हृदयस्य नाडीस्थप्रकाशद्वारेण निष्क्रमणं भवति)**

अत्र नये मानुषज्ञानिनो मुक्त्यर्थं देहादुत्क्रमणस्याऽज्ञमरणविलक्षणत्वसमर्थनम् । अन्यथा ज्ञानस्यातिशयो न स्यादिति 'ज्ञानपादेन' (३-४) (तत्स्थनयैः) सङ्गतिः । उत्क्रमणं विषयः । अज्ञानिमरणविलक्षणं न वेति संशयः । मरणत्वं ज्ञानिसम्बन्धित्वं च तद्बीजम् । नेति पूर्वपक्षः ॥

**॥ ॐ तदोकोऽग्रज्वलनं तत्प्रकाशितद्वारो विद्यासामर्थ्यात्तच्छेषगत्यनुस्मृतियोगाच्च हार्दानुगृहीतः शताधिकया ॐ ॥ १७ ॥**

तदिति लुप्तविभक्त्यन्तं पृथक्पदं च । तदोकोग्रेति तत्पदेन विष्णुर्गृह्यते । ओकः तदावासस्थानं हृदयम् । तत्पदेन जीवग्रहणे हार्दपदेन विष्णुग्रहणं सन्दर्भविरुद्धं स्यात् । ज्ञानी देहादुत्क्रामतीति प्रकृतश्रुतिबलाल्लभ्यते । प्रारब्धसत्त्वेऽपीति शेषः । यथायथमावृत्तिविपरिणामौ । अयमर्थः- **तस्मिन्** उत्क्रान्त्यव्यवहितपूर्वकाले ज्ञानिनः **तदोकोऽग्रज्वलनं** हृदयस्याग्रे प्रकाशः **तेन** परमात्मना परमात्मानुग्रहेण भवति ज्ञानी **तत्प्रकाशितद्वारः** तेन हृदयाग्रप्रकाशेन प्रकाशितमार्गपुरोभागः सन् प्रारब्धसत्त्वेऽपि **विद्यासामर्थ्यात्** अपरोक्षज्ञानबलात् **तच्छेषगत्यनुस्मृतियोगाच्च** तस्या विद्यायाः शेषभूता इतिकर्तव्यतारूपा या गत्यनुस्मृतिः, स्वहृदयादारभ्य ब्रह्मपर्यन्तं गमनस्य स्मरणं तस्या योगाच्च **हार्दानुगृहीतः** हृदयस्थपरमात्मानुगृहीतस्सन् **शताधिकया** हृदयाश्रितशतनाड्यपेक्षयाऽधिकभूतप्रधान-सुषुम्नानाड्या देहादुत्क्रामति बहिर्गच्छतीति ॥ एवं च ज्ञान्युत्क्रमणे हृदयाग्रप्रज्वलनादेः सत्त्वादज्ञमरणे तदभावात् वैलक्षण्यं सिद्धमिति भावः ॥

**उत्क्रान्तिकाले हृदयस्याग्रे ज्वलनं भवति । 'तस्य हैतस्य हृदयस्याग्रं प्रद्योतते' (बृ.६.४.२) इति श्रुतेः ॥ तत्प्रकाशितद्वारो निष्क्रामति । विद्यासामर्थ्यात्—**

**'यं यं वाऽपि स्मरन् भावं त्यजत्यन्ते कळेवरम् ।**
**तं तमेवैति कौन्तेय सदा तद्भावभावितः ॥' (भ.गी. ८.६)**

**इति स्मृतेर्विद्याशेषगत्यनुस्मरणयोगाच्च ॥**

**'आचार्यस्तु ते गतिं वक्ता' (छा.४.२४.२) इति हि लिङ्गम् ।**

**'हृदिस्थेनैव हरिणा तस्यैवानुग्रहेण तु ।**
**उत्क्रान्तिर्ब्रह्मरन्ध्रेण तमेवोपासतो भवेत् ॥' इति चाध्यात्मे ॥**

**'शतं चैका च हृदयस्य नाड्यस्तासां मूर्धानमभिनिःसृतैका ।**
**तयोर्ध्वमायन्नमृतत्वमेति विष्वङ्ङन्या उत्क्रमणे भवन्ति ॥' (कठ.२.३.१६) इति च ॥**

भा.॥ सूत्रं व्याचक्षते- **उत्क्रान्तिकाल इति** ॥ ज्ञानिन इति शेषः। उक्तार्थे मानमाहुः- [1]**तस्येति** ॥ **निष्क्रामतीति** ॥ ज्ञानीति भावः । ननूत्क्रमणकाले ज्ञानिनः प्रारब्धसत्त्वात्कथमयं विशेष इत्यत आहुः- **विद्ययेति** ॥ प्रारब्धसत्त्वेऽपीति शेषः । अपरोक्षज्ञानस्य स्वोदयादारभ्य फलप्रदत्वात्प्रारब्धस्य विरजातरणपर्यन्तं सत्त्वात्प्रारब्धसत्त्वेऽप्ययं विशेषो युज्यत इति भावः । यदि ज्ञानसामर्थ्यादेवैवम् उत्क्रमणं तर्हि ज्ञानिनः प्रथममरण एव एवं किं न स्यादत आहुः- [2]**यं यमिति** ॥ **स्मृतेरिति** ॥ गत्यनुस्मरणस्योत्क्रान्तिहेतुत्वे विशेषमानमाहुः- [3]**आचार्यस्त्विति** ॥ गत्यनुस्मरणेत्येकदेशः षष्ठ्या विपरिणम्यात्र सम्बध्यते । उत्क्रमणहेतुत्वे इति शेषः । विद्यागत्यनुस्मरणस्योत्क्रमणहेतुत्वे 'आचार्यस्तु ते गतिं वक्ता' इति श्रवणं लिङ्गमित्यर्थः । गत्यनुस्मरणमुत्क्रमणहेतुः 'आचार्यस्तु ते गतिं वक्ता' इति गत्युपदेशात् अन्यथा तदुपदेशो व्यर्थः स्यादिति भावः । स्मृतेः यतो लिङ्गमस्ति अतश्च एतद्द्वय-ज्ञाप्यगत्यनुस्मरणयोगाच्चेति सम्बन्धः । न केवलं गत्यनुस्मरणयुतेन ज्ञानसामर्थ्येनोत्क्रमणं किन्तु भगवत्प्रसादसहितेनेति सप्रमाणमाहुः- [4]**हृदिस्थेनेति** ॥ **अध्यात्म इति** ॥ तत्रेत्युक्तेरित्यर्थः । अस्य

---

१. **तस्य हेति** ॥ (बृ.६.४.१) तस्योत्क्रमिष्यतः एतस्य ज्ञानिनः हृदयस्याऽग्रं प्रद्योतते प्रकाशते ह खलु इत्यर्थः ।

२. **यं यमिति** ॥ ( गी.८-६) हे कौन्तेय ! अर्जुन ! अन्ते अन्तकाले यं यं वापि भावम् आकृतिविशेषं पदार्थं वा पूर्वकर्मानुभववशान् स्मरन् कलेबरं त्यजति पुरुषः स तं तं भावमेव एति प्राप्नोति सदा तद्भावभावितः तस्मिन्नाकृतिविशेषे पदार्थे वा भावो मनः तेन भावितः अतिवासित इति हेतुगर्भविशेषणमित्यर्थः ।

३. **आचार्य इति** ॥ (छा.४.१४.१) उपकोसलं प्रति अग्नीनां वाक्यमेतत् । हे उपकोसल ते आचार्यः सत्यकामः गतिं प्राप्य वक्तेत्यर्थः ।

४. **हृदीति** ॥ हृदि स्थितेन हरिणा सहैव तस्यानुग्रहेणैव तमेवोपासतां प्रतीकालम्बनानां ब्रह्मरन्ध्रेण सुषुम्नानाड्या उत्क्रान्तिर्भवेदित्यर्थः ।

हार्दानुगृहीत इति सूत्रखण्डेऽन्वयः शताधिकयेति सौत्रखण्डं श्रुत्युपन्यासेन व्याचक्षते- **[1]शतं चेति ॥ भवतीति चेति ॥** इत्यत्र चेत्यर्थः । उक्तयेति शेषः । अस्य शताधिकयेति सूत्रखण्डेऽन्वयः । तथा च भाष्यस्य सूत्रस्थपदसम्बन्धेन योजनेति ज्ञेयम् ॥ १७ ॥

**द्वारस्य प्रकाशितत्वेऽपि तदन्यनाडीरन्ध्रस्य तदभावात् अन्तः तमसैव गमनं स्यादित्यज्ञमरणवैलक्षण्यं न स्यात् अन्तरपि प्रकाशोऽस्ति चेद् द्वारपदवैयर्थ्यमिति शङ्कावारणाय सूत्रम्-**

**॥ ॐ रश्म्यनुसारी ॐ ॥ १८ ॥**

**रश्मिमनुसरतीति तथा । उत्क्रामति ज्ञानीति वर्तते । अयमर्थः- ज्ञानी रश्म्यनुसारी नाड्यन्तर्गत-सूर्यरश्मियुतः तादृशरश्मिप्रकाशितनाडीरन्ध्रयुतः सन्निति यावत् । उत्क्रामतीति । द्वारपदमुपलक्षणमिति भावः ।**

**निष्क्रामति । 'सहस्रं वा आदित्यस्य रश्मय आसु नाडीष्वाततास्तत्र श्वेतः सुषुम्नो ब्रह्मयानः सुषुम्नायामाततस्तत्प्रकाशेनैष निर्गच्छति ॥' इति पौत्रायणश्रुतिः ॥**

**भा.॥** आकाङ्क्षितं पूरयन्ति- **निष्क्रामतीति ॥** सूत्रार्थे श्रुतिमाहुः- **[2]सहस्रमिति ॥ श्रुतिरिति ॥** अत्र मानमिति शेषः ॥ १९ ॥

**उक्तमाक्षिप्य समाधानाय सूत्रम्-**

**॥ ॐ निशि नेति चेन्न सम्बन्धात् ॐ ॥ १९ ॥**

**रश्मीत्येकदेशः, शताधिकये वर्तते । यथायथमावृत्तिविपरिणामौ । अयमर्थः- निशि रश्मयः, सूर्यरश्मयः न सन्ति इति चेन्न- निशि निश्यपि शताधिकया नाड्या रश्मीनामन्तःस्थितसूर्यरश्मीनां**

---

१. **शतं चेति ॥** (का.२.६.१६) हृदयस्य नाड्यः हृदयसम्बन्धिनाड्यः शतं चैका च एकोत्तरशतं भवन्ति । तासां नाडीनां मध्ये एका नाडी मूर्धानमभि प्रति निःसृता मूर्धपर्यन्तं गता तया सुषुम्नानाड्या ऊर्ध्वमायन् गच्छन् पुरुषोऽमृतत्वमेति अन्याः शतं नाड्यः विष्वगुत्क्रमणे लोकान्तरगमनार्थं भवन्तीत्यर्थः ॥ १७ ॥

२. **सहस्रमिति ॥** आदित्यस्य सहस्रं रश्मयः, आसु नाडीषु आतताः अन्तराश्रिताः सन्ति । तत्र सहस्ररश्मिषु मध्ये श्वेतः श्वेतवर्णः सुषुम्ना तन्नामको ब्रह्मयानः ब्रह्मप्रापको रश्मिः सुषुम्नायां नाड्याम् आततः अन्तराश्रितोऽन्योऽस्ति । तत्प्रकाशेन एष ज्ञानिजीवः निर्गच्छति देहान्निष्क्रामतीत्यर्थः ॥ १८ ॥ १९ ॥

**सम्बन्धात्** सदा सम्बन्धसत्त्वादिति ॥ तथा च पर्यवसितकर्मणो ज्ञानिनो निशि उत्क्रमणमज्ञमरण-विलक्षणं न स्यात्सूर्यरश्म्यभावादिति पूर्वपक्षिण आशयः । सिद्धान्तिनस्तु- निशि बाह्यसूर्याऽभावेऽपि अन्तःसूर्योऽस्त्येवेति निश्यपि (ज्ञानिन) उत्क्रमणं युक्तमिति ॥

अन्तः सूर्यसत्त्वे मानं तु- 'अथ या' (छा.८-६) इत्यादिः श्रुतिः ॥

**रश्म्यभावान्निशि ज्ञानिन उत्क्रमणं न युक्तमिति चेन्न । सर्वदा सम्बन्धाद् रश्मीनाम् ॥ १९ ॥**

**भा.॥** सूत्रं व्याचक्षते- **रश्मीति** ॥ **न युक्तमिति** ॥ न युज्यत इत्यर्थः ॥ **रश्मीनाम्**-अन्तःस्थसूर्यरश्मीनामित्यर्थः ॥ १९ ॥

नाडीरश्मिसम्बन्धस्योत्क्रान्तेः कतिपयदिनात्पूर्वं निवृत्तावुत्क्रान्तिसमये तदभावोऽतोऽवधिं पृच्छन्ति- कियत्कालमिति ॥ कियत्कालपर्यन्तमित्यर्थः । 'कालाध्वनोरत्यन्तसंयोगे' इति द्वितीया । अत्र रश्मीनां सम्बन्धादिति वर्तते । विपरिणम्यते च प्रथमया । अयमर्थः- रश्मीनां सम्बन्धः नाडीरश्मिसम्बन्धः कियत्कालं वर्तत इति ॥ एतच्छङ्कावारणाय सूत्रमुपन्यस्यन्ति-

**कियत्कालम् –**

**॥ ॐ यावद्देहभावित्वाद्दर्शयति च ॐ ॥ २० ॥**

**यावद्देहो विद्यते तावद्रश्मिसम्बन्धोऽस्त्येव ।**

यावान् यादृशकालपरिमाणवान् देहः यावद्देहं 'यावदवधारणे' इति अव्ययीभावः । यावद्देहं भवतीति यावद्देहभावी । 'सुप्यजातौ णिनिस्ताच्छील्ये' इति णिनि प्रत्ययः । तस्य भावस्तस्मात् । न सम्बन्धादिति वर्तते । श्रुतिरित्यर्थाल्लभ्यते । यथायथमावृत्तिविपरिणामौ । अयमर्थः- च यतः श्रुतिः 'संसृष्टा वा'इति श्रुतिः सम्बन्धस्य नाडीरश्मिसम्बन्धस्य **यावद्देहभावित्वं दर्शयति** अतः सम्बन्धस्य नाडीरश्मि-सम्बन्धस्य यावद्देहभावित्वात् देहाधिकरणयावत्कालावृत्तित्वाङ्गीकारात् सम्बन्ध उत्क्रान्तिकाले तदभावप्रयुक्तदोषसम्बन्धो नेति । दोषस्तु ज्ञानिनोऽपि तमसोत्क्रमणं स्यादिति ॥

**'संसृष्टा वा एते रश्मयश्च नाड्यश्च नैषां वियोगो यावदिदं शरीरमत एतैः पश्यत्येतैरुत्क्रामत्येतैः प्रवर्तते' इति माध्यन्दिनायनश्रुतिः ॥ २० ॥**

**भा.**।। सूत्रं व्याचक्षते- **यावदिति** ।। (दर्शयतीत्यस्य कर्त्राकाङ्क्षायां श्रुतिमाहुः- **'संसृष्टा इति** ।। **श्रुतिरिति** ।। यतः श्रुतिरस्ति) अतोऽस्त्येवेति सम्बन्धः ।। २० ।।

ज्ञानिनो निशि उत्क्रान्तिर्नास्त्येव दक्षिणायने तदभाववत् अतः रात्रौ नाडीरश्मिसम्बन्धसमर्थनं व्यर्थमिति शङ्कावारणाय सूत्रम्-

**।। ॐ अतश्चायनेऽपि हि दक्षिणे ॐ ।। २१ ।।**

उत्क्रान्तिरिति प्रकृतत्वाल्लभ्यते । अत इति तन्त्रम् । अयमर्थः- अतश्च नाडीरश्मिसम्बन्धस्य यावद्देहभावित्वादेव अतश्च 'दक्षिणे मरणाद्' इति स्मृतेर्दक्षिणायनसञ्ज्ञकरश्मिपरत्वाच्च दक्षिणेऽयनेऽपि काले उत्क्रान्तिः ज्ञानिन उत्क्रमणं हि युक्तेति । तथा च दृष्टान्तोऽसिद्ध इति भावः ।।

**'दक्षिणे मरणाद्याति स्वर्गं ब्रह्मोत्तरायणे ।**
**इत्युक्तेऽपि ज्ञानिनो दक्षिणायनोत्क्रान्तिर्युज्यते ।।'**

**'शतं पञ्चैव सूर्यस्य दक्षिणायनरश्मयः ।**
**तावन्त एव निर्दिष्टा उत्तरायणरश्मयः ।।**
**ते सर्वे देहसम्बद्धाः सर्वदा सर्वदेहिनाम् ।**
**महर्लोकादिगन्तार उत्तरायणरश्मिभिः ।।**
**निर्गच्छन्तीतरैश्चापि यैरश्यन्येतरा गतिः ।**
**उत्तरं दक्षिणमिति त एव तु निगद्यते ।।**
**न तु कालविशेषोऽस्ति ज्ञानिनां नियमात्फलम् ।**
**ददाति कालेऽनुगुणे फलं किञ्चिद्विशिष्यते ।।**
**अत्युत्तमानां केषाञ्चिन्न विशेषोऽस्ति कालतः ।।' इति हि नारायणाध्यात्मे ।।**

।। इति हृदयाग्रज्वलनाधिकरणम् ।। ९ ।।

---

१. **संसृष्टा इति** ।। एते रश्मयः सूर्यरश्मयः नाड्यश्च मिथः इदं शरीरं यावत् एतच्छरीरस्थितिपर्यन्तं संसृष्टाः सम्बद्धाः । एषां रश्मीनां नाडीनां च वियोगो नास्ति । अतः एतैः रश्मिभिः पश्यति नाड्यन्तर्गतमार्गविशेषम् एतैः सहायभूतैः उत्क्रामति एतैः सहायभूतैः प्रवर्तते उत्क्रान्तावित्यर्थः ।। २० ।।

**भा.** ॥ पूर्वपक्षोपष्टंभकस्मृतिमाहुः- [1]**दक्षिणे इति** ॥ (सिद्धान्तमाहुः- ज्ञानिन इति ।।) सूत्रार्थे स्मृतिमाहुः- [2]**शतमिति ॥ अध्यात्म इति ॥** तत्रेत्युक्तेरित्यर्थः ॥ २१ ॥ अ.९ ॥

**॥ इति तदोकोऽधिकरणम् ॥ ९ ॥**

---

१. **दक्षिणे इति ॥** उत्तरायणे मरणात् ब्रह्म प्राप्नोतीत्यर्थः । शिष्टं स्पष्टम् ।

२. **शतमिति ॥** सूर्यस्य दक्षिणायनरश्मयः शतं पञ्चैव प्रञ्चशतान्येव सूर्यस्योत्तरायणरश्मयोऽपि तावन्त एव तावत्सङ्ख्याका एव निर्दिष्टाः । महर्लोकादिगन्तारः महर्लोकादीति अतद्गुणसंविज्ञानो बहुव्रीहिः । जन आदिलोको ग्राह्यः । महर्लोकस्य पुनरावृत्तिलोकत्वात् यैः रश्मिभिः इतरा गतिः स्वर्गादिलोकः एष्टव्या प्राप्या तैरितरैः दक्षिणायनरश्मिभिः निर्गच्छन्ति । त एव सूर्यरश्मय एव पञ्चशतानि उत्तरम् उत्तरायणम् । पञ्चशतानि दक्षिणं दक्षिणायनमिति निगद्यते आर्षमेकवचनं स्मृताविति शेषः । ज्ञानिनामुत्क्रान्त्याद्यर्थं कालविशेषः उत्तरायणाख्यो न भवति ज्ञानं नियमात् नियमेन फलं मुक्तिरूपं ददात्येव काले उत्तरायणशुक्लपक्षादिकाले अनुगुणे अनुकूले सति किञ्चित्फलं विशिष्यते यथा भीष्मादीनाम् अत्युत्तमानां भीष्माद्यपेक्षया उत्तमानामित्यर्थः । शिष्टं स्पष्टम् ॥ २१ ॥ अ.९ ॥

## १०. योग्याधिकरणम्

**(ज्ञानयोगिनः ब्रह्मप्राप्तिः कर्मयोगिनः चन्द्रपाप्तिः गतिस्मरणानुसारेण भवति)**

अत्र नये ब्रह्मप्राप्तौ गत्यनुस्मरणादेरावश्यकत्वसमर्थनम् । अन्यथा ज्ञानस्य मोक्षहेतुत्वाभावापत्त्या 'अनियमः सर्वेषाम्' इति (३.३.३२) सूत्रोक्तमयुक्तं स्यादिति(तन्नयेन) सङ्गतिः । पूर्ववद्वा सङ्गतिः । गतिर्विषयः । विद्या गत्यनुस्मृतिसापेक्षा न वेति संशयः । स्फुटप्रमाणाऽदर्शनं पूर्वोक्तिश्च तद्बीजम् । नेति पूर्वपक्षः ॥

**॥ ॐ योगिनः प्रति स्मर्येते स्मार्ते चैते ॐ ॥ २२ ॥**

योगिन इति द्वितीयान्तं प्रतियोगात् । स्मृतेरिमे स्मार्ते । सम्बन्धश्च साध्यत्वरूपः। यथायथमावृत्तिः । चोऽप्यर्थे इत्यर्थे च । अयमर्थः- एते 'अग्निर्ज्योतिः' इत्यादिस्मृत्युक्ते ब्रह्मचन्द्रगती योगिनः प्रति च ज्ञानकर्मरूपोपायवंतः प्रत्यपि ज्ञानकर्मनिमित्तकतयापि न कालादिमात्रनिमित्तकतया स्मर्येते 'अग्निर्ज्योतिः' इति 'धूमो रात्रिः' इति स्मृतिभ्यां प्रतिपाद्येते स्मार्ते च गत्यनुस्मृतिसाध्ये इति च स्मर्येते 'गत्यनुस्मरणाद् ब्रह्म' इति स्मृत्या प्रतिपाद्येते इति ॥

**न केवलं कालादिकृते ब्रह्मचन्द्रगती स्मर्येते । किन्तु ज्ञानयोगिनः कर्मयोगिनश्च ।**

**'अग्निर्ज्योतिरहः शुक्लः षण्मासा उत्तरायणम् ।**
**तत्र प्रयाता गच्छन्ति ब्रह्म ब्रह्मविदो जनाः ॥**
**धूमो रात्रिस्तथा कृष्णः षण्मासा दक्षिणायनम् ।**
**तत्र चान्द्रमसं ज्योतिर्योगी प्राप्य निवर्तते ॥' (भ.गी.८.२४-२५) ।**

**इत्यत्र योगीति विशेषणात् स्मरणनिमित्ते चैते गती ॥**

**'गत्यनुस्मरणाद् ब्रह्म चन्द्रं वा गच्छति ध्रुवम् ।**
**अननुस्मरतः काले स्मरणं प्राप्य वै गतिः ॥' इत्यध्यात्मे ॥ २२ ॥**

॥ इति प्रतिस्मरणाधिकरणम् ॥ १० ॥

भा.॥ सूत्रं व्याचक्षते- **न केवलं कालादीति** ॥ कालादिमात्रकृते इत्यर्थः । आदिना अग्न्यादि-

ग्रहणम् । **ज्ञानयोगिनः कर्मयोगिनश्चेति** ॥ प्रत्यपीति शेषः । ज्ञानकर्मनिमित्तकतयापीति यावत् । **स्मर्येते**- स्मृत्या बोध्येते । स्मृतीराहुः- [1]**अग्निर्ज्योतिरित्यादि** ॥ **योगीति** ॥ इदमुपलक्षणं ब्रह्मविद इत्यस्यापि । **विशेषणादीति** ॥ अयं ज्ञानयोगिनः कर्मयोगिनश्चेत्यत्र हेतुतया सम्बध्यते । **स्मरणनिमित्ते चेति** ॥ ब्रह्मपर्यन्तं चन्द्रपर्यन्तं च या स्वस्य गतिः तत्स्मरणनिमित्तके चेत्यर्थः । अत्र मानमाहुः- [2]**गतीति** ॥ **अध्यात्म इति** ॥ तत्रेत्युक्तेरित्यर्थः ॥ सू.२२ ॥ अ.१० ॥

॥ इति **योग्यधिकरणम्** ॥ १० ॥

## ॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितश्रीब्रह्मसूत्रभाष्यव्याख्यायां भाष्यार्थसहितसूत्रार्थमणिमञ्जर्याम् चतुर्थाध्यायस्य द्वितीयः पादः ॥

## ॥ इति चतुर्थाध्यायस्य द्वितीयः पादः ॥

---

१. **अग्निरिति** ॥ (गी.८-२४,२५) अत्राऽग्न्यादिपदेन अग्न्यादिदेवतालोकाः, अहरादिपदेन अहराद्यभिमानिदेवतालोका ग्राह्याः । ब्रह्मविदो जनाः तत्राऽग्न्यादिलोकेषु प्रयाताः सन्तः ब्रह्म गच्छन्तीत्यर्थः प्रथममग्निः अग्निलोकः, ततो ज्योतिः, ततोऽहः, ततः शुक्लपक्षः ततः षण्मासाः, प्रत्येकं प्रत्येकं तत उत्तरायणम्, एते मार्गे तिष्ठन्ति । शुक्लपक्षलोकानन्तरं पूर्णिमालोकः, मासलोकानन्तरं मेषतुलाख्यविष्वभिमानिलोकश्च ग्राह्यः । धूमादिपदेनापि अभिमानिदेवतालोका ग्राह्याः । धूमः प्रथमं, ततो रात्रिः ततः कृष्णपक्षः, अथ षण्मासाः, अथ दक्षिणायनमस्ति । तत्र प्रयातो योगी काम्यकर्मी चान्द्रमसं ज्योतिः प्राप्य निवर्तते, पुनर्भूमौ जायते इत्यर्थः ।

२. **गतीति** ॥ ज्ञानी गत्यनुस्मरणादुक्तमार्गानुस्मरणात् ब्रह्म गच्छति । योगी कर्मयोगी गत्यनुस्मरणात् चन्द्रं गच्छति । वाशब्दो व्यवस्थितविकल्पे । अननुस्मरतो ज्ञानिनो योगिनो वा काले जन्मान्तरे स्मरणं प्राप्य गतिर्भवेदित्यर्थः ॥ २२ ॥ अ. १ ॥

# ॥ अथ चतुर्थाध्यायस्य तृतीयः पादः ॥

## १. अर्चिराद्यधिकरणम्

**(ब्रह्मप्राप्तिमार्गः अर्चिरादिः)**

एतत्पादार्थं दर्शयन्ति- **मार्गो गम्यं चेति** ॥ ब्रह्मनाड्योत्क्रान्तानामर्चिरादिलोकाः तदभिमानिमुख्यवाय्वन्तदेवताश्च मार्गः, तेषां गम्यं कार्यं ब्रह्म देवादीनां प्राप्यं परब्रह्म चेत्यर्थः । **उच्यत इति** ॥ अर्चिरादिर्मार्गत्वेन पञ्चाधिकरण्या, ब्रह्मप्राप्यत्वेन षष्ठनयेनोच्यत इति ज्ञेयम् । अत्र नयेऽर्चिषः प्रथमप्राप्यत्वसमर्थनम् । मार्गानिर्णये तदनुस्मृत्ययोगेन 'तदोकोऽग्र' इति (४.२.१७) सूत्रोक्तमयुक्तं स्यादिति तेन नयेन सङ्गतिः । ब्रह्मप्राप्तिमार्गो विषयः । अर्चिरादिर्वा वाय्वादिर्वेति संशयः । श्रुतिविगानं तद्बीजम् । अधिकारिभेदेनोभयोः प्राथम्यमिति पूर्वपक्षः ॥ १-सू.अ. ॥

**मार्गो गम्यं चास्मिन् पाद उच्यते—**

**॥ ॐ अर्चिरादिना तत्प्रथितेः ॐ ॥ १ ॥**

अर्चिरादिर्यस्येति बहुव्रीहिः । तदिति भिन्नं पदं च । चेति वर्तते । स एवार्थे । गच्छतीति शेषः । प्रकृतत्वादुत्क्रान्त इति लभ्यते । अयमर्थः- **उत्क्रान्तः** ब्रह्मनाड्योत्क्रान्तो ज्ञानी **अर्चिरादिना** च तेनैव **मार्गेण तत् ब्रह्म** गच्छति प्राप्नोति न वाय्वादिमार्गेण **तत्प्रथितेः** तस्योक्तार्थस्य 'तेऽर्चिषमभिसम्भवन्ति' इति श्रुतौ 'द्वावेव मार्गौ' इति स्मृतौ च प्रसिद्धत्वादिति ॥ ननु 'तेऽर्चिषम्' इति श्रुतेः भाष्ये संशयकोटिप्रापकत्वेनोदाहृतत्वात् तत्र प्रथितत्वं कथं प्रकृतसाध्यसाधकं स्यादिति चेन्न- 'द्वावेव मार्गौ' इति स्मृत्युपोद्बलितत्वेन 'तेऽर्चिषम्' इति श्रुतेः प्राबल्यात् ।

**'तेऽर्चिषमभिसम्भवन्त्यर्चिषोऽहरह्न अपूर्यमाणपक्षम्'** (छा.५.१०.१) **इत्यर्चिषः प्राथम्यं श्रूयते ।**

**'यदा ह वै पुरुषोऽस्माल्लोकात् प्रैति स वायुमागच्छति'** (बृ.७.१०.१) **इति वायोः । तत्रार्चिःप्राप्तिरेव प्रथमा ॥**

**'द्वावेव मार्गौ प्रथितावर्चिरादिर्विपश्चिताम् ।**
**धूमादिः कर्मिणां चैव सर्ववेदविनिर्णयात् ।।**
**अग्निर्ज्योतिरिरिति द्वेधैवार्चिषः सम्प्रतिष्ठितिः ।**
**अग्निं गत्वा ज्योतिरेति प्रथमं ब्रह्म संव्रजन् ।।' इति ।**

**'एकस्मिंस्तु पुरे संस्थो द्विरूपोऽग्नेः सुतो महान्' ।। इति ब्रह्मतर्के ।**

**।। इत्यर्चिराद्यधिकरणम् ।।**

**भा.** ।। संशायकश्रुती आहुः- **'तेऽर्चिषमित्यादि** ।। **प्राथम्यं**- प्रथमप्राप्यत्वम् ।। **वायोरिति** ।। प्राथम्यं श्रूयत इति वर्तते । इति शङ्कायामुच्यत इति शेषः । **तत्रेति** ।। अर्चिर्वाय्वोर्मध्ये इत्यर्थः । **प्रथमेति** ।। तथाचोक्तश्रुतिद्वयबलात् ब्रह्मप्राप्तौ उभयोः प्राथम्यं मार्गद्वयमिति प्राप्ते एक एव मार्गः स च अर्चिरादिरेवेति सिद्धान्त इति ज्ञेयम् । उक्तार्थे मानमाहुः- **'द्वावेवेति** ।। **ब्रह्मतर्के इति** ।। तत्रेत्युक्तेश्चेत्यर्थः । चेन एतत्स्मृत्युपोद्बलित'तेऽर्चिषम्' इति श्रुतेश्चेति ज्ञेयम् ।। १ ।। अ. १ ।।

**।। इति अर्चिरधिकरणम् ।।**

---

१. **तेऽर्चिषमिति** ।। (छा.४.१५.५ बृ.८-२-१५) छान्दोग्ये अर्चिषमिति पठ्यते । (बृ.) **तेऽर्चिरिति** ।। ते तपोरूपब्रह्मोपासकाः अर्चिषं तन्नामकाग्निपुत्रम् अभिसम्भवन्ति प्राप्नुवन्ति अर्चिषः सकाशादहः तदभिमानि-देवम् आपूर्यमाणपक्षं शुक्लपक्षाभिमानिदेवमित्यर्थः । **यदाहेति** ।। (बृ.८.१०.१) यदायं पुरुषोऽस्माल्लोकाच्छरीरात् प्रैति उत्क्रान्तो भवति स वायुं प्रवहाख्यं गच्छतीत्यर्थः ।।

२. **द्वाविति** ।। विपश्चिताम् उत्क्रान्तज्ञानिनाम् अर्चिरादिः कर्मिणां काम्यकर्मिणां धूमादिरिति द्वावेव मार्गौ प्रथितौ नत्वेकः नापि त्रयः । ननु 'अग्निर्ज्योतिः' इति स्मृतावग्नेः प्राथम्यं श्रूयते तत्कथमर्चिषो ज्योतिश्शब्दवाच्यस्य द्वितीयप्राप्यस्य प्राथम्यमुच्यते इत्यत आह- **अग्निरिति** ।। अर्चिषोऽग्निपुत्रस्यार्चिषः अग्निर्ज्योतिरिरिति द्वेधैव सम्प्रतिष्ठितिः अवस्थानं भवति । ब्रह्म संव्रजन् ज्ञानी प्रथममग्निं गत्वा ततो ज्योतिरेति । तथापि तेऽर्चिषमिति श्रुतौ पृथक् किं नोच्यते इत्यत आह- **एकस्मिन्निति** ।। द्विरूपो महान् पूज्योऽग्नेः सुतः एकस्मिन्नगरे संस्थो यतो अतः 'तेऽर्चिषम्' इति श्रुतौ पृथक् नोच्यते इत्यर्थः । शिष्टं स्पष्टम् ।। १ ।। अ.१ ।।

## २. वायुशब्दाधिकरणम्

**(अर्चिर्मार्गेण गतस्य वायुलोकः प्राप्य इति निरूपणम्)**

अत्र नये वायोः द्वितीयप्राप्यत्वसमर्थनम् । पूर्वोक्तावेव सङ्गतिविषयौ । वायुर्द्वितीयप्राप्य अहर्वेति संशयः । श्रुतिविगानं तद्वीजम् । अधिकारिभेदेन उभयोरपि द्वितीयप्राप्यत्वामिति पूर्वपक्षः ॥

**॥ ॐ वायुशब्दादविशेषविशेषाभ्याम् ॐ ॥ २ ॥**

उत्क्रान्तो, गच्छतीति, अर्चिरित्येकदेशश्च, वर्तते । वाय्विति लुप्तद्वितीयान्तं पृथक्पदं च । अर्चिष इति विपरिणम्यते । अयमर्थः- **उत्क्रान्तो** ज्ञानी **अर्चिषः** सकाशात् वायुं गच्छति **अविशेषविशेषाभ्यां** 'स वायुमागच्छति' इति अवध्यनिर्देशेन सामान्यरूपात् 'स इतो गतः' इति अवध्यादिनिर्देशेन विशेषरूपात् **वायुशब्दात्** वायोर्द्वितीयप्राप्यत्वबोधक'स इतः' इति श्रुतेरिति ॥ तथा च द्वितीयप्राप्यत्वबोधक 'स इतो गतः' इति विशेषश्रुत्येकवाक्यतया 'स वायुमागच्छति' इति श्रुतेः वायोर्द्वितीयप्राप्यत्वपरत्वं वक्तव्यम् । एतदर्थमेव, एतदधिकरणारम्भः अन्यथा विशेषश्रुत्या वायोर्द्वितीयप्राप्यत्वे सिद्धे किमनेनेति भावः । न चैवमपि अह्नोऽपि द्वितीयप्राप्यत्वमधिकारिभेदेन स्यादेवेति वाच्यं 'वायोरहः' इति विशेषवचनेन बाधात् । एवं च अर्चिष अह इत्यनयोर्मध्ये वायुमिति शेषः 'तेऽर्चिषम्' इति श्रुतौ कार्य इति भावः ॥

**अर्चिषो वायुं गच्छति । 'स वायुमागच्छति' इति सामान्यवचनात् । 'स इतो गतो द्वितीयां गतिं वायुमागच्छति वायोरहरह्न आपूर्यमाणपक्षम्' इति विशेषवचनाच्च ॥ २ ॥**

॥ इति वायुगत्यधिकरणम् ॥ २ ॥

भा. ॥ सूत्रं व्याचक्षते- **अर्चिष इति** ॥ श्रुतिमाहुः- **'स वायुमित्यादि** ॥ २ ॥ अ.२ ॥

**॥ इति वायुशब्दाधिकारणम् ॥ २ ॥**

---

१. **स वायुमिति** ॥ (बृ.७.१०.१) व्या. (पृ. २८२) **स इत इति** ॥ स ज्ञानी इतोऽस्माच्छरीरात् गत उत्क्रान्तः इतोऽर्चिर्लोकात् गतो निष्क्रान्तो वा द्वितीयां गतिं द्वितीयप्राप्यमित्यर्थः । स्पष्टमन्यत् ॥ २ ॥ अ. २ ॥

## ३. तटिदधिकरणम्

**(संवत्सराभिमानिलोकप्राप्त्यनन्तरं तटिल्लोकप्राप्तिः)**

अत्र नये संवत्सरप्राप्त्यनन्तरं तटितो लोकस्य प्राप्यत्वसमर्थनम् । अर्चिष आरभ्य संवत्सरपर्यन्तं क्वचिन्निर्णीतत्वात् क्वचिद्विवादाभावात् तदनन्तरमेव विवादप्राप्तेः । सङ्गतिविषयौ प्राग्वत् । संवत्सरलोकप्राप्त्यनन्तरं वरुणलोकः प्राप्यः तटिल्लोको वेति संशयः । श्रुतिविगानं तद्बीजम् । अधिकारिभेदेनोभयं प्राप्यमिति पूर्वपक्षः ॥ १ १.सू.अ. ॥

**॥ ॐ तटितोऽधि वरुणः सम्बन्धात् ॐ ॥ ३ ॥**

उत्क्रान्त इति वर्तते । प्राप्य इति शेषः । यथायथमावृत्तिविपरिणामौ । अयमर्थः- **तटितः** तटिल्लोकात् **अधि** उपरि तत्प्राप्त्यनन्तरमिति यावत् । **वरुणो** वरुणलोकः उत्क्रान्तेन ज्ञानिना प्राप्यः तटितोऽधि वरुणस्य **सम्बन्धात्** वरुणसम्बन्धबोधक'तटिता ह्यूह्यते' इति श्रुतेरिति ॥

**'मासेभ्यः संवत्सरं संवत्सराद्वरुणलोकं वरुणलोकात् प्रजापतिलोकम्' इति कौण्डिन्यश्रुतिः । 'संवत्सरात्तटितमागच्छति तटितः प्रजापतिलोकम्' इति च गौपवन-श्रुतिः । 'तत्र तटितो वरुणं गच्छति । तटिता ह्यूह्यते वरुणलोकस्तटिदुपरि मुक्तामयो राजते तत्रासौ वरुणो राजा सत्यानृते विविश्वति' इत्युपरिसम्बन्धत्वश्रुतेः ॥**

॥ इति तटिदधिकरणम् ॥ ३ ॥

भा.॥ संशायकश्रुती उदाहरन्ति- **'मासेभ्य इत्यादि** ॥ **श्रुतिरिति** ॥ उभयत्राप्यस्तीति शेषः । **तत्रेति** ॥ तथापीत्यर्थः । संशयप्रापकश्रुतिद्वयसत्त्वेऽपीति यावत् । संशयाकारस्तु- संवत्सरानन्तरं वरुणलोकं गच्छति वा तटिल्लोकं गच्छति वेति ॥ **गच्छतीति** ॥ इति सिद्धान्त इति शेषः । ननूक्तसंशयस्य तटितो वरुणं गच्छतीति सिद्धान्तेन कथं निवृत्तिः सिद्धान्तीयज्ञानस्य संशयकोटिप्रकारकत्वाऽभावादिति चेन्न । तटिल्लोकादेव वरुणं गच्छति न संवत्सरादिति एकस्याः

---

१. **मासेभ्य इति** ॥ स्पष्टम् । **संवत्सरादिति** ॥ स्पष्टम् ।

कोटेः निषेधेन संशयनिवृत्तिसम्भवात् । सिद्धान्ते मानमाहुः- **'तटिता हीति । उपरिसम्बन्धश्रुतेरिति ॥** तटिदुपरि वरुणस्य सम्बन्धबोधकश्रुतेरित्यर्थः । 'संवत्सराद्वरुणलोकम्' इति श्रुतिस्तु तटिद्द्वारा वरुणस्य प्राप्यत्वबोधिकेति भावः ॥ ३ ॥ अ.३ ॥

**॥ इति तटिदधिकरणम् ॥ ३ ॥**

---

१. **तटितेति ॥** हि यतः तटिता लोकेन वरुणलोक ऊह्यते धार्यते तटिदुपरि उपरितने लोके असौ वरुणो राजा मुक्तामयो वीतरोगो विराजते तत्र वरुणलोकेऽसौ वरुणः सत्यानृते प्रजाकृते सत्यानृते विविश्चति विवेचयतीत्यर्थः । स्पष्टमन्तत् ॥ ३ ॥ अ.३ ॥ सू.४ ॥

## ४. आतिवाहिकाधिकरणम्

**(पूर्वोक्तवायुलोकः आतिवाहिकनामकवायुलोकः)**

अत्र नये द्वितीयप्राप्यस्य वायोरातिवाहिकत्वसमर्थनम् । अन्यथा प्रधानवायोरुत्तमत्वाऽसिद्ध्या 'इयदामननात्' (३.३.३५) इति सूत्रोक्तमयुक्तं स्यादिति तेन नयेन सङ्गतिः । द्वितीयप्राप्यो वायुः विषयः । मुख्यवायुरमुख्यवायुर्वेति संशयः । वायुशब्दः तद्बीजम् । मुख्यवायुरिति पूर्वपक्षः ॥

**॥ ॐ आतिवाहिकस्तल्लिङ्गात् ॐ ॥ ४ ॥**

वाय्विति लुप्तप्रथमाक एकदेशो वर्तते । अयमर्थः- वायुः द्वितीयप्राप्यो वायुः **आतिवाहिकः** तन्नामको मुख्यवायुपुत्रः **तल्लिङ्गात्** पूर्वप्राप्यत्वलिङ्गादिति ॥

**पूर्वत्रोक्तस्त्वातिवाहिको वायुः । पूर्वगमनलिङ्गात् । कुतः—**

भा. ॥ सूत्रं व्याचक्षते- **पूर्वेति** ॥ **पूर्वगमनलिङ्गादिति** ॥ मुख्यवाय्वपेक्षया पूर्वप्राप्यत्वलिङ्गादित्यर्थः ॥ ४ ॥

ननु प्रथमप्राप्यत्वममुख्यवायुत्वे कथं लिङ्गं प्रथमप्राप्यस्य मुख्यत्वे बाधकाऽभावादिति पृच्छन्ति- **कुत इति** ॥ कस्मान्मानादित्यर्थः ॥ प्रथमप्राप्यस्यामुख्यत्वमिति शेषः । उत्तरतया सूत्रं पठन्ति-

**॥ ॐ उभयव्यामोहात्तत्सिद्धेः ॐ ॥ ५ ॥**

तल्लिङ्गादिति वर्तते । व्यामोहादिति पञ्चमी सप्तम्यर्थे । तदिति लुप्तसप्तम्यन्तं पृथक् पदं च । यथायथमावृत्तिविपरिणामौ । अयमर्थः- **उभयव्यामोहे** पूर्वोक्तवायुः मुख्यो वा, आतिवाहिको वेति, संशये सति **तल्लिङ्गात्** 'दिवस्पतिः' (बृ.७.१०.१) इति विशेषरूपलिङ्गात् **तत्सिद्ध्या** तस्मिन् उत्तरप्राप्ये वायौ मुख्यत्वसिद्ध्या तस्मिन् पूर्वप्राप्ये वायौ **तत्सिद्धेः** आतिवाहिकत्वसिद्धेरिति ॥

**'स वायुमागच्छति' इति प्रथममुच्यते । 'उत्क्रान्तो विद्वान् परमभिगच्छन् विद्युतमेवान्तत उपगच्छति द्यौर्वाव विद्युत्तत्पतिं वायुमुपगम्य तेनैव ब्रह्म गच्छति' इत्यन्तेऽपि वायुगमनश्रुतेः । पूर्वोक्त आतिवाहिकः परो वेति व्यामोहे उत्तरे दिवस्पतिरिति विशेषणात् पूर्वत्राऽतिवाहिकस्यैव सिद्धेः ॥**

**ब्रह्मतर्के च—**

**'उत्क्रान्तस्तु शरीरात् स्वाद्गच्छत्यर्चिषमेव तु ।**
**ततो हि वायोः पुत्रं च योऽसौ नाम्नाऽऽतिवाहिकः ॥**

**ततोऽहः पूर्वपक्षं चाप्युदक्संवत्सरं तथा ।**
**तटितं वरुणं चैव प्रजापं सूर्यमेव च ॥**

**सोमं वैश्वानरं चेन्द्रं ध्रुवं देवीं दिवं तथा ।**
**ततो वायुः परं प्राप्य तेनैति पुरुषोत्तमम् ॥' इति ॥**

**॥ इत्यातिवाहिकाधिकरणम् ॥ ४ ॥**

भा. ॥ व्यामोहश्रुती आहुः- [1]**'स वायुमित्यादि ॥ प्रथममिति ॥** प्रथमप्राप्यत्वमित्यर्थः । **उच्यत इति ॥** अत इति शेषः ॥ **सिद्धेरिति ॥** ननु चरमप्राप्यः मुख्यवायुरेवास्तु तथापि पूर्वप्राप्यः आतिवाहिक इति निर्णयो नास्त्येव । मुख्यस्यैवोभयत्रावस्थानसम्भवादिति शङ्कां परिहर्तुं सर्वं मार्गं स्मृत्याऽऽहुः- **ब्रह्मतर्के च** - [2]**'उत्क्रान्त इति ॥ इतीति ॥** तत्रेत्युक्तेश्चेत्यर्थः ॥ ५ ॥ अ.४ ॥

**॥ इति अतिवाहिकाधिकरणम् ॥ ४ ॥**

---

१. **स वायुमिति ॥** व्या. (६७२-पु.) **उत्क्रान्त इति ॥** अन्ततः अन्ते द्यौः वार्णीत्यर्थः । शिष्टं स्पष्टम् ॥
२. **उत्क्रान्त इति ॥** अर्चिषमेव तु इति तुशब्देन 'अर्चिषोऽग्निर्ज्योतिः' इति द्विरूपत्वविशेषो द्योत्यते । उदक् उत्तरायणम् । प्रजापं दक्षं तन्नामकदेवतान्तरं वा, सोमं चन्द्रं, वैश्वानरं मूलाग्निं, शिंशुमारप्राप्तेरुपलक्षणमेतत् । ध्रुवं ध्रुवराजं, दिवं देवीं भारतीं, ततोऽनन्तरं, वायुं प्रधानवायुं, तेन मुख्यवायुना तद्द्वारेति यावत् पुरुषोत्तममेतीत्यर्थः। शिष्टं स्पष्टम् ॥ ५ ॥ अ.४ ॥

# ५. वैद्युताधिकरणम्

**(ब्रह्मप्राप्तिमार्गे मुख्यवायुलोक एव अन्तिमप्राप्यः)**

अत्र नये मुख्यवायोरन्ते प्राप्यत्वसमर्थनम् । तदनन्तरमन्यस्य प्राप्यत्वे मुख्यवायोरतिप्राधान्यासिद्ध्या 'इयदामननात्' (३.३.३५) इति सूत्रोक्तमयुक्तं स्यादिति तेन नयेन सङ्गतिः । मार्गो विषयः । तत्र मुख्यवायोरनन्तरं ब्रह्मणोऽर्वाग्गन्तव्योऽन्योऽस्ति न वेति संशयः । उभयथापि सम्भवस्तद्बीजम् । अस्तीति पूर्वपक्षः ॥

**॥ ॐ वैद्युतेनैव ततस्तच्छ्रुतेः ॐ ॥ ६ ॥**

विद्युत् भारती तस्या अयं वैद्युतः । तत्पतिर्मुख्यवायुः । उत्क्रान्तो गच्छतीति वर्तते । 'वैद्युतेन' इत्यस्यावृत्तिविपरिणामौ । अयमर्थः- **वैद्युतेनैव** मुख्यवायुनैव । **तच्छ्रुतेः** तस्य ब्रह्मगमनस्य श्रुतेः 'स एनान्' इति श्रुतौ श्रवणात् उत्क्रान्तो ज्ञानी ततोऽन्ते वैद्युतमेव गच्छति मार्गत्वेन प्राप्नोति नान्यमिति ॥

**प्रकारान्तरेण तत्र तत्रोच्यमानत्वाद्वायोरपि परतो ब्रह्मणोऽर्वाग्गन्तव्योऽस्तीति नाऽशङ्कनीयम् । विद्युत्पतिना वायुनैव 'स एनान् ब्रह्म गमयति' (छां.४.१५.६) इति ब्रह्मगमनश्रुतेः ॥**

**'विद्युत्पतिर्वायुरेव नयेद्ब्रह्म न चापरः ।**
**कुतोऽन्यस्य भवेच्छक्तिस्तमृते प्राणनायकम् ॥' इति बृहत्तन्त्रे ॥ ६ ॥**

॥ इति वैद्युताधिकरणम् ॥ ५ ॥

भा. ॥ सूत्रं व्याचक्षते- **प्रकारान्तरेणेति** ॥ तत्र श्रुत्यादौ मार्गविषये प्रकारान्तरेण तारतम्यक्रमं विहाय सोमानन्तरं तदवरस्याग्नेः इन्द्रानन्तरं ध्रुवस्य प्राप्तेः प्रतिपादनादित्यर्थः । **गन्तव्यः**- प्राप्यः । कश्चनेति शेषः । **अस्तीति** ॥ अधिकरणपूर्वपक्षोऽयं सूत्राद्बहिरेव बोध्यः । वैद्युतेनेति सूत्रस्थपदस्यार्थविवरणम्- **विद्युत्पतिनेति** ॥ विशेष्यांशकथनं- **वायुनेति** । सूत्रसूचितश्रुतिमाहुः- [1]**स एनानिति** ॥ श्रुतेरित्युपलक्षणं मत्वा उक्तार्थे स्मृतिं चाहुः- **विद्युत्पतिरिति** ॥ बृहत्तन्त्र इति । तत्रेत्युक्तेरित्यर्थः ॥६॥

॥ इति वैद्युताधिकरणम् ॥

१. **स एनानिति** ॥ (छा.५.१.२) स मुख्यवायुः एनानप्रतीकालम्बनान् परं ब्रह्म, प्रतीकालम्बनान् कार्यब्रह्म गमयतीत्यर्थः । **विद्युत्पतिरिति** ॥ भारतीपतिः प्राणनायकम् इन्द्रियस्वामिनमित्यर्थः । शिष्टं स्पष्टम् ॥ ६ ॥

## ६. कार्याधिकरणम्

**(वायुः व्याप्तोपासकान् परं ब्रह्म नयति, अन्यांस्तु कार्यं ब्रह्म)**

अत्र नये अर्चिरादिना गतानां, देवानां च, गम्यनिरूपणम् अन्यथा गत्यनुस्मृतिर्न स्यादिति 'तदोकोऽग्र' (४-२.१७) इति सूत्रेण सङ्गतिः। प्राप्यं ब्रह्म विषयः। कार्यं ब्रह्म वा परं ब्रह्म वा उभयं ब्रह्म वेति संशयः। ब्रह्मशब्दस्तद्बीजम्। उभयमिति पक्षे क्रममपेक्ष्योभयं गम्यमनपेक्ष्य वेति संशयः। क्रमोऽपि योग्यतारूपो वा तदन्यो वेति संशयः । सर्वथापि सम्भवस्तद्बीजम् । कार्यमेवेत्येकः पूर्वपक्षः। परमेवेत्यन्यः, उभयमित्यपरः, उभयपक्षेऽपि क्रममनपेक्ष्योभयं गम्यमितीतरः, क्रमपक्षेऽपि क्रमो योग्यतापेक्षयाऽन्य एवेति पूर्वपक्षः ॥

पूर्वं वायोर्ब्रह्मप्रापकत्वमुक्तं तच्च प्राप्यं ब्रह्म कार्यमुत परमुतोभयं वेति सन्देहे आद्यसूत्रेण कार्यं प्राप्यमित्युच्यते-

**॥ ॐ कार्यं बादरिरस्य गत्युपपत्तेः ॐ ॥ ७ ॥**

नयतीत्यपकृष्यते। वैद्युतः तच्छ्रुतेरिति वर्तते। अर्थो गतानितीति शेषः। अयमर्थः- **वैद्युतो** मुख्यवायुः गतान् स्वंगतान् ज्ञानिनः **कार्यं ब्रह्म** चतुर्मुखं नयतीति **तच्छ्रुतेः** 'स एनान् ब्रह्म गमयति' इति श्रुतेः अर्थः। **अस्यैव गत्युपपत्तेः** कार्यब्रह्मण एव प्राप्यत्वोपपत्तेरिति **बादरिः** शुकाचार्यः मन्यत इति ॥ अयं भावः- 'तथापि प्रकृतेर्बन्धो ब्रह्मणा सह भिद्यते' इत्यादिना चतुर्मुखमुक्तिपर्यन्तं बन्धस्य सन्ततत्वात् ततोऽर्वाक् चतुर्मुखस्यैव प्राप्यत्वमुपपन्नम् 'ऋते देवान्' इत्यध्यात्मवचनाच्चेति ॥

**'स एनान् ब्रह्म गमयति' (छा.५.१०.२) इति कार्यं ब्रह्म गमयतीति बादरिर्मन्यते।**

**'ऋते देवान् परं ब्रह्म कः पुमान् प्राप्नुयात् क्वचित्।**
**यद्यपि ब्रह्मदृष्टिः स्याद् ब्रह्मलोकमवाप्नुयात् ॥'**

**इत्यध्यात्मवचनात्तस्यैव गत्युपपत्तेः ॥ ७ ॥**

भा.॥ श्रुत्युपन्यासेन सूत्रं व्याचक्षते- **'स एनानिति** ॥ **गमयतीति** ॥ इत्यर्थ इति शेषः । ननु

१. **स एनानिति** ॥ व्या. ॥ (पृ. २८७) ऋते इति ॥ देवानृते विना कः पुमान् ज्ञानी परं ब्रह्म प्राप्नुयात् कचित्कालेऽपि । यद्यपि देवेतरेषां ब्रह्मदृष्टिर्ब्रह्मापरोक्षं स्यात् अस्ति तथापि तेन ब्रह्मलोकं चतुर्मुखलोकमवाप्नुयादित्यर्थः । एवं च चतुर्मुखमुक्तिपर्यन्तं देवेतरेषां परब्रह्मप्राप्तिर्नेति भावः ॥ ७ ॥

ब्रह्मशब्दस्य परब्रह्मणि मुख्यत्वात्कथमयमर्थ इत्यत आहुः- **ऋते इति** ॥ **तस्यैवेति** ॥ कार्यब्रह्मण एवेत्यर्थः ॥ ७ ॥

**युक्तिमात्रेण श्रुतेरर्थान्तरकल्पनं न किन्तु विशेषश्रुतेश्चेत्यर्थप्रतिपादनाय सूत्रम्-**

**॥ ॐ विशेषितत्वाच्च ॐ ॥ ८ ॥**

**अनुवृत्त्यादिसहितं पूर्वसूत्रं पञ्चम्यन्तं विनाऽनुवर्तते । अयमर्थः- वैद्युतः स्वं गतान् कार्यं नयतीति तच्छ्रुतेरर्थः अस्य प्राप्यस्य विशेषितत्वाच्च 'यदि ह वाव' इति श्रुत्यन्तरे चतुर्मुखमिति विशेषितत्वाच्चेति बादरिर्मन्यत इति ॥**

**'यदि ह वाव परमभिपश्यति प्राप्नोति ब्रह्माणं चतुर्मुखं प्राप्नोति ब्रह्माणं चतुर्मुखम्' इति कौषारवश्रुतौ ॥**

भा. ॥ श्रुतिमाहुः- [1]**यदिहेति** ॥ **श्रुताविति** अस्य विशेषितत्वाच्चेति सूत्रेऽन्वयः ॥ ८ ॥

**ज्ञानिनः चतुर्मुखप्राप्तिरयुक्ता 'ब्रह्मविदाप्नोति परम्' इति श्रुतौ परब्रह्मप्राप्तेरेवोक्तत्वादित्याशङ्का-परिहाराय सूत्रम्-**

**॥ ॐ सामीप्यात्तु तद्व्यपदेशः ॐ ॥ ९ ॥**

**स चासौ व्यपदेशश्चेति विग्रहः । प्रवृत्त इति शेषः । अयमर्थः- तद्व्यपदेशस्तु ज्ञानी परंब्रह्म प्राप्नोतीत्यर्थपर'ब्रह्मविदाप्नोति परम्' इति श्रुतिस्तु सामीप्यात्तु चतुर्मुखप्राप्त्यनन्तरम् अन्यप्राप्तिव्यवधान-शून्यकालप्राप्यत्वाऽभिप्रायेणैव प्रवृत्तो न तु चतुर्मुखप्राप्त्यभावाऽभिप्रायेणेति ॥**

**'ब्रह्मविदाप्नोति परम्' (तै.२.१) इति तद्व्यपदेशस्तु समीपत एव परमपि प्राप्नोतीत्येतदर्थमेव ॥ ९ ॥**

**भा.**॥ श्रुत्युपन्यासपूर्वं सूत्रं व्याचक्षते- [2]**ब्रह्मविदिति** ॥ **एतदर्थ एवेति** ॥ एषोऽर्थः यस्य स एतदर्थः ॥ ९ ॥

---

१. **यदीति** ॥ यदि ह वाव यद्यपि परंब्रह्म परमात्मानं बन्धकाले इति शेषः । अभिपश्यति । तथापि चतुर्मुखं ब्रह्माणं प्राप्नोति । द्विरुक्तिस्तात्पर्यार्था । एवं च प्रमाणबलेनाऽन्यज्ञानादपि द्वारभूताऽन्यप्राप्तिर्युक्तेति भावः॥

२. **ब्रह्मविदिति** ॥ व्या. (सं.१. पृ. ९६) ॥ ९ ॥

ननु समीपे ब्रह्मप्राप्तिः प्रलयात्पूर्वं वा, प्रलय एव वेति संशयादवधिं पृच्छन्ति- **कदेति** ॥ ज्ञानिनः परब्रह्म गच्छन्तीति शेषः । तच्छङ्कापरिहाराय सूत्रम्-

**कदा—**

**॥ ॐ कार्यात्यये तदध्यक्षेण सहाऽतः परमभिधानात् ॐ ॥ १० ॥**

ज्ञानी गच्छतीति प्रकृतत्वाल्लभ्यते । कार्याणामत्ययो नाशो यस्मिन् स **कार्यात्ययः** प्रलयकालः । अयमर्थः- ज्ञानी **कार्यात्यये** प्रलये **तदध्यक्षेण** सकलकार्यस्वामिना चतुर्मुखेन(ण) **सह अतः** चतुर्मुखसाहाय्यात् **परं** ब्रह्म गच्छति **अभिधानात्** 'ते ह' इति सौपर्णश्रुतौ तथोक्तत्वादिति ॥

**ते ह ब्रह्माणमभिसम्पद्य यदैतद्विलीयतेऽथ सह ब्रह्मणा परमभि गच्छन्ति' इति सौपर्णश्रुतेर्महाप्रलये तदध्यक्षेण ब्रह्मणा सह गच्छन्ति ॥ १० ॥**

भा. ॥ श्रुतिमुपन्यस्य सूत्रार्थमाहुः- [1]**ते हेति** ॥ १० ॥

स्मृत्याप्येतदर्थसमर्थनाय सूत्रम्-

**॥ ॐ स्मृतेश्च ॐ ॥ ११ ॥**

अभिधानपदरहितं सानुवृत्त्यादिकं पूर्वसूत्रमनुवर्तते । अयमर्थः- ज्ञानी कार्यात्यये तदध्यक्षेण सहातः परं गच्छति **स्मृतेश्च** 'ब्रह्मणा सह ते सर्वे' इति स्मृतेश्चेति ॥

**'ब्रह्मणा सह ते सर्वे सम्प्राप्ते प्रतिसञ्चरे ।**
**परस्यान्ते परात्मानः प्रविशन्ति परं पदम् ॥' इति ॥ ११ ॥**

भा.॥ स्मृतिमाहुः- [2]**ब्रह्मणेति** ॥ **पदमिति** ॥ अस्य सूत्रेऽन्वयः ॥ ११ ॥

---

१. **ते हेति** ॥ ते देवेतरज्ञानिनः ब्रह्माणं चतुर्मुखम् अभिसम्पद्य प्राप्य, यदा एतत् कार्यं ब्रह्म विलीयते अथ तदा प्रलयकाले कार्यब्रह्मणा सह परं ब्रह्म अभिगच्छन्ति प्राप्नुवन्तीत्यर्थः ॥ १० ॥

२. **ब्रह्मणेति** ॥ परे परमात्मनि आत्मा मनो येषां ते परात्मनः सर्वे ते ज्ञानिनः परस्य ब्रह्मायुषोऽन्ते ब्रह्मणः शतसंवत्सरानन्तरमिति यावत् । प्रतिसञ्चरे प्रलये सम्प्राप्ते सति तदा ब्रह्मणा चतुर्मुखेन(ण) सह परं पदं ब्रह्म प्रविशन्तीत्यर्थः ॥ ११ ॥ १२ ॥ १३ ॥

अथ साक्षादेव परब्रह्मप्राप्तिप्रतिपादनाय सूत्रम्-

**॥ ॐ परं जैमिनिर्मुख्यत्वात् ॐ ॥ १२ ॥**

'कार्यं बादरिः' इति सूत्रेऽनुवृत्तं सर्वमध्याहृतं चानुवर्तते । तत्रेव विपरिणामश्च । अयमर्थः- वैद्युतः स्वं गतान् ज्ञानिनः **परं ब्रह्म** नयति इति तच्छ्रुतेः 'स एनान्' इति श्रुतेरर्थः, **मुख्यत्वात्** ब्रह्मशब्दस्य तत्रैव मुख्यत्वादिति जैमिनिर्मन्यत इति ॥

**॥ ब्रह्मशब्दस्य तत्रैव मुख्यत्वात् परमेव ब्रह्म गमयतीति जैमिनिर्मन्यते ॥ १२ ॥**

भा. ॥ सूत्रं व्याचक्षते- **ब्रह्मशब्दस्येति** ॥ **गमयतीति** ॥ 'स एनान्' इति श्रुतेरर्थ इति शेषः ॥ ॥ १२ ॥

मुख्यार्थग्रहणे बाधकसत्त्वादमुख्यार्थग्रहणमिति शङ्कावारणाय सूत्रम्-

**॥ ॐ दर्शनाच्च ॐ ॥ १३ ॥**

मुख्यत्वादिति पदरहितसानुवृत्तिपूर्वसूत्रं वर्तते । परमित्यस्यावृत्तिविपरिणामौ । अयमर्थः- **वैद्युतो** गतान् परं नयतीति तच्छ्रुतेः 'स एनान्' इति श्रुते अर्थः । परस्यैव **दर्शनाच्च** अपरोक्षीकृतत्वाच्च न कार्यस्येति जैमिनिर्मन्यते इति ॥

**दृष्टत्वाच्च परब्रह्मणः ॥ १३ ॥**

भा.॥ **दृष्टत्वाच्चेति** ॥ अस्य 'परमेव गमयति' इति पूर्वभाष्येऽन्वयः ॥ १३ ॥

हेत्वन्तरेणोक्तार्थसाधनाय सूत्रम् -

**॥ ॐ न च कार्ये प्रतिपत्त्यभिसन्धिः ॐ ॥ १४ ॥**

पूर्वे सूत्रेऽनुवृत्तं सर्वं वर्तते । प्रतिपत्तिरुपासना तत्सहितोऽभिसन्धिः । प्राप्नुवानीति इच्छा प्रतिपत्त्यभिसन्धिः । चस्यावृत्तिः । अयमर्थः- **च** यस्मात् **कार्ये** च कार्य एव ज्ञानिनः **प्रतिपत्त्यभिसन्धिः** उपासना इच्छा च नास्ति उक्तोभयाभाव इति यावत् न परे उभयाभावः किन्तूभयमस्त्येवेति यावत् । अतश्च वैद्युतः स्वं गतान् परमेव नयतीति तच्छ्रुतेः 'स एनान्' इति श्रुतेः अर्थ इति जैमिनिर्मन्यते इति ॥

**न हि कार्ये प्रतिपत्तिः प्राप्रवानीत्यभिसन्धिश्च ।**

**'यदुपास्ते पुमाञ्जीवन् यत्प्राप्तुमभिवाञ्छति ।**
**यच्च पश्यति तृप्तः संस्तत्प्राप्नोति मृतेरनु ॥' इति हि पाद्मे ॥**

भा. ॥ सूत्रं व्याचक्षते- **न हीति** ॥ हि यतः कार्ये कार्य एव प्रतिपत्तिरभिसन्धिश्च न नतु परे अतः परमेव नयतीत्यन्वयः ॥ दर्शनप्रतिपत्त्यभिसन्धीनां हेतूनामप्रयोजकत्वशङ्कावारणार्थं स्मृतिमाहुः- **[1]यदुपास्ते इति** ॥ **पाद्मे इति** ॥ तत्रेत्युक्तेरित्यर्थः ॥ हेतूनामप्रयोजकत्वं नेति शेषः ॥ १४ ॥

उभयप्राप्तिपक्षस्याधिकारिभेदेन प्रतिपादनाय सूत्रम्-

**॥ ॐ अप्रतीकालम्बनान्नयतीति बादरायण उभयथा च दोषात्तत्क्रतुश्च ॐ ॥ १५ ॥**

वैद्युतः तच्छ्रुतेरर्थः, इति मन्यते, परं, कार्यमिति, वर्तते । प्रतीकं देहादिः तदेवालम्बनमपरोक्षज्ञानावच्छेदकं येषां ते प्रतीकालम्बनाः स्वहृदय एव भगवदपरोक्षिणः तेन भवन्तीति अप्रतीकालम्बना व्याप्तोपासका । अन्यानिति शेषः । अयमर्थः- वैद्युतः **अप्रतीकालम्बनान्** परं **ब्रह्म नयति** । अन्यान् प्रतीकालम्बनान् कार्यं ब्रह्म नयति इति, तच्छ्रुतेरर्थः । **उभयथा च** उक्तव्यवस्थां हित्वा सर्वेषामन्यतरप्राप्त्यङ्गीकारेऽपि दोषात् अन्यतरपक्षोक्तदोषापातात् **च** यतः **तत्क्रतुः** तत्क्रतुशब्दघटित **'स यथाकामो भवति'** इति श्रुतिरस्ति अतश्चेति **बादरायण** आचार्यो मन्यत इति ॥

**'प्रतीकं देह उद्दिष्टो येषां तत्रैव दर्शनम् ।**
**न तु व्याप्ततया क्वापि प्रतीकालम्बनास्तु ते ॥**
**अप्रतीका देवतास्तु ऋषीणां शतमेव च ।**
**राज्ञां च शतमुद्दिष्टं गन्धर्वादिशतं तथा ॥**
**एतेऽधिकारिणो व्याप्तदर्शिनोऽन्ये न तु क्वचित् ।**
**अयोग्यदर्शने यत्नाद्भ्रंशः पूर्वस्य चापि तु ॥**

---

१. **यदिति** ॥ जीवन् देहयुक्तः **पुमान् यदुपास्ते** उत्क्रान्तिकाले यत् प्राप्तुमभिवाञ्छति तृप्तः सन् तृप्ततया यत्पश्यति दर्शनसमये परमानन्दमग्नत्वादन्यत्रालंबुद्धिमान् पश्यतीति यावत् मृतेरनु मृत्यनन्तरं तत् प्राप्नोतीत्यर्थः ॥ १४ ॥

**अप्रतीकाश्रया ये हि ते यान्ति परमेव तु ।**
**स्वदेहे ब्रह्मदृष्ट्यैव गच्छेद् ब्रह्मसलोकताम् ।**
**ब्रह्मणा सह सम्प्राप्ते संहारे परमं पदम् ॥' इति गारुडवचनात् ॥**

**उभयत्रोक्तदोषाच्चाप्रतीकालम्बनान्परं नयति । 'स यथाकामो भवति तत्क्रतुर्भवति यत्क्रतुर्भवति तत्कर्म कुरुते यत्कर्म कुरुते तदभिसम्पद्यत इति श्रुतेश्च ॥ अत्र कर्मोपासनमेव । अन्यान्कार्यं नयतीति भगवन्मतम् ॥**

भा.॥ सूत्रं सप्रमाणं व्याचक्षते- **'प्रतीकमिति ॥ उभयत्रेति** ॥ सर्वेषामन्यतरप्राप्तिपक्ष इत्यर्थः । **उक्तदोषादिति** ॥ कार्यप्राप्तिपक्षे ब्रह्मशब्दस्यामुख्यत्वमपरोक्षज्ञानादेः प्राप्तेश्च भिन्नविषयकत्वं चेति दोषापत्तेः, परब्रह्मप्राप्तिपक्षे परस्य गत्यनुपपत्तिविशेषितत्वाच्चेत्यादिदोषापत्तेः । न चोभयप्राप्तिपक्षे पक्षद्वयोक्तदोषप्रसङ्ग इति वाच्यं, कार्यप्राप्तिपक्षे पूर्वोक्तगारुडवचनेन 'यान्ति देवं परं केचित्पूर्वं केचिल्लये विभुम्' इति वचनेन च ब्रह्मशब्दामुख्यत्वस्य सोढव्यत्वात् कार्यविषयकदर्शनादेश्चाङ्गी-कारणोपासनादेः प्राप्तेश्च भिन्नविषयकत्वाभावत्, परप्राप्तिपक्षे परप्राप्तियोग्यानां बद्धत्वेऽपि 'अप्रतीकालम्बना ये हि ते यान्ति परमेव तु' इति प्रमाणेन गत्युपपत्तेः, चतुर्मुखमिति विशेषणस्य पक्षान्तराभिप्रायकत्वात् ।

ननु 'यत्प्राप्तुमभिवाञ्छति तत्प्राप्नोति' इति वचनादिच्छानुसारेण प्राप्तिः न तूपासनादिक्रमेण

---

१. **प्रतीकमिति** ॥ देहो देहादिः प्रतीकमुद्दिष्टः प्रतीकशब्दवाच्यः । येषामधिकारिणां तत्रैव देहादावेव दर्शनं ब्रह्मदर्शनं क्वापि काले व्याप्ततया ब्रह्मदर्शनं नास्ति ते प्रतीकालम्बनाः तच्छब्दिताः, अप्रतीकास्तु अप्रतीकालम्बनास्तु । तथेत्यनेनाप्सरसां शतं ग्राह्यम् अन्ये ऋषयो नरोत्तमाद्याः क्वचित्कालेऽपि व्याप्तदर्शने योग्या न भवन्ति । अयोग्यदर्शने स्वायोग्यं यद्दर्शनं तस्मिन् अयोग्यदर्शनार्थं यत्नात् श्रवणादिरूपात् । पूर्वस्य पूर्वोत्पन्नस्यपि दर्शनस्य । भ्रंशः तत्फलाभावो भवेत् । ये अप्रतीकाश्रयाः अप्रतीकालम्बनाः हि प्रसिद्धाः ते परमेव वैकुण्ठस्थमेव यान्ति न कार्यमात्रम् । प्रतीकालम्बनास्तु स्वदेह एव ब्रह्मदृष्ट्या ब्रह्मसलोकतामेव परब्रह्मसमानलोकत्वमेव गच्छेत् गच्छेयुः । परब्रह्मणश्चतुर्मुखादिलोकेष्वप्यवस्थानात् । अथ संहारे सर्वकार्योपरमरूपप्रलये प्राप्ते तु ब्रह्मणा चतुर्मुखेन(ण) सह परमं पदं ब्रह्म गच्छेयुरित्यर्थः । शिष्टं स्पष्टम् ॥

नापि प्रतीकालम्बनः कार्यं प्राप्नोति अप्रतीकालम्बनः परमिति क्रमेणेत्यत आहुः- [1]**स यथेति ॥ श्रुतेश्चेति ॥** अत्र श्रुतावुपासनं न श्रूयत इत्यत आहुः- **अत्र कर्मेति ॥** अत्र श्रुतावुपासनादिक्रम उक्त इति भावः । श्रुतेश्चेति चेन 'सप्रतीकाश्चतुर्मुखमप्रतीकाः परमु हैत गच्छन्ति' इति प्रमाणस्य ग्रहणम् । मुनिमतयोर्विरोधस्तु न, कार्यमेव नयति परमेव नयतीति इतरव्यावृत्तेरनङ्गीकारात्, बादरायणाचार्यैर्व्यवस्थाया उक्तत्वाच्चेति ॥ १५ ॥

**ननु प्रतीकालम्बनाऽप्रतीकालम्बनभेदसिद्धौ पूर्वोक्तं युक्तं स्यात् तदेव कुत इति शङ्कावारणाय सूत्रम्-**

**॥ ॐ विशेषं च दर्शयति ॐ ॥ १६ ॥**

**श्रुतिरिति वर्तते । विशेषपदमावर्त्य विपरिणम्यते । युक्त इति शेषः । अयमर्थः-** च यतः श्रुतिः **'अन्तःप्रकाशाः'** इति श्रुतिः **विशेषं** देवा एव व्याप्तोपासका इत्यादिविशेषं **दर्शयति** अतो विशेषः **पूर्वोक्तव्यवस्थाविशेषः** युक्त इति ॥

**'अन्तःप्रकाशा बहिःप्रकाशाः सर्वप्रकाशाः । देवा वाव सर्वप्रकाशाः ऋषयोऽन्तः-प्रकाशाः मानुषा एव बहिःप्रकाशाः' इति चतुर्वेदशिखायाम् ॥**

॥ इति कार्याधिकरणम् ॥ ६ ॥

भा.॥ श्रुतिमाहुः- [2]**अन्तःप्रकाशा इति ॥ चतुर्वेदशिखायामिति ॥** विशेषं दर्शयतीति सूत्रेण सम्बन्धः। वेदपुरुष इति भावः ॥ १६ ॥ अ.६ ॥

॥ इति कार्याधिकरणम् ॥ ६ ॥

**॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितश्रीमद्ब्रह्मसूत्राभाष्यस्य व्याख्यायां भाष्यार्थसहितसूत्रार्थमणिमञ्जर्यां चतुर्थाध्यायस्य तृतीयः पादः ॥**

---

१. **स यथेति ॥** (बृ.६.४.५) स ईश्वरो यथाकामो यदिच्छावान् भवति जीवोऽपि तथाकामो भवति, तत्क्रतुर्भवति इत्थं करिष्याम्येवेति निश्चयवान् भवति स जीवो यत्क्रतुर्यन्निष्ठावान् भवति तत् तादृशं तद्विषयकं कर्म उपासनं कुरुते तदभिसम्पद्यते तदापरोक्ष्यवान् भवति तत् प्राप्नोति चेत्यर्थः ॥ १५ ॥

२. **अन्तःप्रकाशा इति ॥** अन्तः प्रकाशा अन्तर्दृष्टयः । बहिःप्रकाशाः बहिर्दृष्टयः । सर्वप्रकाशाः सर्वत्र भगवद्दर्शनवन्त इत्यर्थः । शिष्टं स्पष्टम् ॥ १६ ॥ अ.६ ॥

# ।। अथ चतुर्थाध्यायस्य चतुर्थः पादः ।।

## १. सम्पद्याधिकरणम्

**(जीवः परमात्मानं प्राप्य तम् अविहाय स्वस्वरूपेण सर्वान् भोगान् अनुभवति)**

**भोगमाहास्मिन् पादे ।**

एतत्पादार्थं दर्शयन्ति- **भोगमिति** ।। चतुर्मुखेन(ण)सह परब्रह्म प्राप्तानां क्रमप्राप्तं भोगमाह सूत्रकार इत्यर्थः । अत्र नये परमात्माऽनतिरेकेण भोगानुभवसमर्थनम् । अन्यथा परब्रह्मणोऽगम्यत्वापत्त्या 'परं जैमिनिः' (४.३.१२) इति सूत्रोक्तमयुक्तं स्यादिति तेन नयेन सङ्गतिः । मुक्तो विषयः । ब्रह्मानतिक्रमेण भोगान् भुङ्क्ते समीप एव वेति संशयः । अर्चिराद्यतिक्रमोक्तिः गम्यत्वोक्तिश्च तद्बीजम् । समीप एवेति पूर्वपक्षः ।।

**।। ॐ सम्पद्याविहाय स्वेन शब्दात् ॐ ।। १ ।।**

ज्ञानीति प्रकृतम्, एव परमिति वर्तते । आवर्तते च । स्थितो भोगान् भुङ्क्ते इति शेषः । अयमर्थः- ज्ञानी परं ब्रह्म **सम्पद्य** प्राप्य **परमविहायैव** अनतिक्रम्यैव **स्वेन** स्वस्वरूपेण स्थितः सन् भोगान् भुङ्क्ते शब्दात् 'स एवं वित्' इति श्रुतेः, 'परंज्योतिरुपसम्पद्य' इति श्रुतेश्चेति ।।

**'स य एवंविदेवंमन्वान एवं पश्यन्नात्मानमभिसम्पद्यैतेनात्मना यथाकामं सर्वान् कामाननुभवति' इति सौपर्णश्रुतेः । 'परञ्ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते' (छा.८.३.८) इति च । एतं सेतुं तीर्त्वाऽन्धस्सन्ननन्धो भवति' (छां.८.४.२) इति च । तत्र तरणं नाम तत्प्राप्तयेऽन्यतरणमेव । 'इमां घोरामशिवां नदीं तीर्त्वैतं सेतुमाप्यैतेनैव सेतुना मोदते प्रमोदत आनन्दी भवति' इति मौद्गल्यश्रुतेः ।।**

भा.।। श्रुत्युपन्यासपूर्वं सूत्रभावमाहुः- **'स इत्यादि** ।। ननूदाहृतश्रुतौ स्वस्वरूपाविर्भावो न श्रूयतेऽत

---

१. **स य इति** ।। सोऽधिकारी एवमुक्तप्रकारेण परमात्मानं जानन् एवं मन्वानः अथ विचारयन् अथ पश्यन् आत्मानम् अभिसम्पद्य प्राप्य एतेनात्मना परमात्मना सह सर्वान् कामान् काम्यान् यथाकाममनुभवतीत्यर्थः ।

आहुः- [1]**'परञ्ज्योतिरिति ॥ इति चेति ॥** श्रुतेरिति वर्तते । इति श्रुतेश्चेत्यर्थः । अत्र सौपर्णश्रुतेरिति श्रुतेश्चेति पञ्चम्यन्तद्वयस्य सौत्रशब्दादिति पदस्यार्थविवरणरूपत्वात् नान्वयापेक्षेति ज्ञेयम् । ननु ब्रह्मानतिक्रमेण स्वस्वरूपाविर्भावेण भोग इत्यङ्गीकारे 'एतं सेतुं तीर्त्वा' इति श्रुत्यनन्तरविरोधः एतं सेतुं परमात्मानं तीर्त्वा हित्वा अनन्धो भवतीति तच्छ्रुतेरर्थादित्याशङ्क्य परिहरन्ति- [2]**'एतमिति ॥ भवतीति चेति ॥** च इत्यर्थे ॥ यद्यप्यस्ति तथापीति शेषः । यद्यपि 'भवति' इति श्रुतिरस्ति तथापि तत्र 'एतं सेतुम्' इति श्रुतौ तत्प्राप्तये भगवत्प्राप्तये तरणं नाम तीर्त्वेति तॄधातुवाच्यतरणं तु भगवतोऽन्यकर्मकतरणमेव विवक्षितमित्यर्थः । 'एतं सेतुम्' इति श्रुतेरुक्तेऽर्थे मानमाहुः- [3]**'इमामिति ॥ श्रुतेरिति ॥** अस्यान्यतरणमेवेत्यत्रान्वयः ॥ एवं च 'एतम्' इति श्रुतिविरोधो नेति भावः ॥ १ ॥ अ.१ ॥

**॥ इति सम्पद्याधिकरणम् ॥ १ ॥**

---

१. **परञ्ज्योतिरिति ॥** व्या. (२०८-पु.)

२. **एतमिति ॥** (छा.८.४.२) **अन्धः सन्** अविद्यावृतः सन् जीवः **एतं सेतुं** जगदाश्रयं हरिं गन्तुमन्यदविद्यादिकं तीर्त्वा **अनन्धः** अदोषवान् भवतीत्यर्थः ।

३. **इमामिति ॥ अशिवाम्** अमङ्गलां दुष्करत्वात् **घोरां** भवाख्यनदीं तीर्त्वा **सेतुं** विश्वाश्रयम् एनं परमात्मानम् **आप्य** प्राप्य **एतेन** सेतुनैव सह तमविहायैवेति यावत् । **मोदते** अप्रकृष्टविषयोत्थं सुखमाप्नोति **प्रमोदते** प्रकृष्टविषयोत्थं सुखमाप्नोति **आनन्दीभवति** अभिव्यक्तस्वरूपसुखवान् भवतीत्यर्थः ॥ १ ॥ अ. ॥ १ ॥

## २. मुक्ताधिकरणम्

**(ब्रह्म प्राप्य तदविहायैव मुक्तः भोगभाक् भवति)**

अत्र नये ब्रह्माविहायैव भोगभोक्तुर्मुक्तत्वसमर्थनम् । अन्यथा पूर्वोक्तभोगो न स्यादिति पूर्वनयेन (४.३.१) सङ्गतिः, 'स तत्र पर्येति' इति श्रुत्युक्तो विषयः, मुक्तो न वेति संशयः, उभयथापि सम्भवस्तद्बीजं, नेति पूर्वपक्षः ॥

**॥ ॐ मुक्तः प्रतिज्ञानात् ॐ ॥ २ ॥**

शब्दा इति वर्तते । उच्यत इति शेषः । यथायथमावृत्तिविपरिणामौ । अयमर्थः- **शब्दे** 'स तत्र पर्येति' इति श्रुतौ **मुक्त** एवोच्यते न संसारी । शब्दे **प्रतिज्ञानात्** 'अहरहः' इति श्रुत्यन्तरे मुक्तस्यैवेतादृश-भोगभोक्तृत्वेन प्रतिपादनादिति ॥ यद्यपि 'उत्तराच्चेदाविर्भूतस्वरूपस्तु' (१.३.१९) इति सूत्रेणैव 'स तत्र पर्येति' इति श्रुत्युक्तस्य मुक्तत्वमुक्तम्- तथापि अत्र नये मुक्तपरत्वस्य सहेतुकं निर्णयात् एतत्सिद्धमुक्तपरत्वमेव तत्रोक्तमत एव तत्र मुक्तपरत्वे हेतुर्नोक्त इति ज्ञेयम् । न च तत्सूत्रं व्यर्थमिति वाच्यम् । अपहतपाप्मत्वादिकममुक्तजीवनिष्ठमिति शङ्कावारणार्थत्वात् ।

**मुक्त एवं चात्रोच्यते । 'अहरहरेनमनुप्रविशत्युपसङ्क्रमे च न तत्र मोदते न प्रमोदते न कामाननुभवति बद्धो ह्येष तदा भवत्यथ यदैनं मुक्तोऽनुप्रविशति मोदते च प्रमोदते च कामांश्चैवानुभवति' इति बृहच्छ्रुतौ प्रतिज्ञानात् ॥**

भा.॥ सूत्रं व्याचक्षते- **मुक्त इति** ॥ **अत्रेति** ॥ स तत्र पर्येतीति श्रुतावित्यर्थः । हेतौ श्रुतिमाहुः- [1]**अहरहरिति** ॥ २ ॥ अ.२ ॥

॥ इति **मुक्ताधिकरणम्** ॥ २ ॥

१. **अहरिति** ॥ एष जीवः अहरहः प्रतिदिनमेनं परमात्मानं उपसङ्क्रमे सुप्तौ अनुप्रविशति हि यतः सुप्तिकाले एष जीवो बद्धो भवति । तत्र सुप्तौ न मोदते न प्रमोदते न कामाननुभवति अथ देहनाशानन्तरं मुक्त एनमीश्वरमनुप्रविशति तदा मोदते प्रमोदते कामांश्चानुभवतीत्यर्थः । अत्र सुप्तिकाले सुखानुभवसत्त्वेऽपि मुक्तिकालिकदिव्यभोगो नास्तीति अभिप्रायेण न मोदते इत्याद्युक्तमिति बोध्यम् ॥ २ ॥ अ.२ ॥

## ३. आत्माधिकरणम्

**(मुक्तप्राप्यः परंज्योतिः परमात्मैव)**

अत्र नये मुक्तप्राप्यज्योतिषो ब्रह्मत्वसमर्थनम् । अन्यथा ब्रह्मप्राप्तिर्न स्यादिति 'परं जैमिनिः' (४.३.१२) इति सूत्रेण सङ्गतिः । 'परंज्योतिः' इति श्रुत्युक्तं परञ्ज्योतिर्विषयः । विष्णुरन्यद्वेति संशयः । उभयत्र (ज्योतिः) शब्दवृत्तिस्तद्बीजम् । अन्यदिति पूर्वपक्षः ॥

**॥ ॐ आत्मा प्रकरणात् ॐ ॥ ३ ॥**

शब्दे परमेवेति वर्तते । अयमर्थः- शब्दे 'परञ्ज्योतिरुपसम्पद्य' इति छन्दोगश्रुतौ परं परञ्ज्योतिःशब्द-वाच्यम् आत्मैव परमात्मैव न सूर्यः, प्रकरणात् 'य आत्मा अपहतपाप्मा' इत्यारभ्याधीतत्वेन परमात्म-प्रकरणादिति ।

**परञ्ज्योतिःशब्देन परमात्मैवोच्यते । तत्प्रकरणत्वात् ।**

**'परञ्ज्योतिः परम्ब्रह्म परमात्मादिका गिरः ।**
**सर्वत्र हरिमेवैकं ब्रूयुर्नान्यं कथञ्चन ॥' इति च ब्रह्माण्डे ॥ ३ ॥**

॥ इत्यात्माधिकरणम् (आत्मसम्पत्त्यधिकरणम्) ॥ ३ ॥

**भा.** ॥ सूत्रार्थमाहुः- **परञ्ज्योतिः॰ ॰नेति** ॥ 'परञ्ज्योतिरुपसम्पद्य' इति श्रुतिस्थेनेति भावः । नन्वस्य परमात्मप्रकरणत्वेऽपि प्रसङ्गादन्यस्योक्तिः किं न स्यादत आहुः - **'परञ्ज्योतिरिति ॥ ब्रह्माण्ड इति** ॥ तत्रेत्युक्तेरित्यर्थः । य ॰ 'इतरपरामर्शात्' (१.३.१८) इति सूत्रेणैतच्छ्रुतिस्थपरञ्ज्योतिः-शब्दः परमात्मपर इति निर्णीतं – तथापि तत्र परञ्ज्योतिः जीवसामान्यमिति शङ्का परिहृता अत्र तु श्रुत्यन्तरसमाख्यया प्राप्तसूर्यपरत्वशङ्का निराक्रियत इति भेदः ॥ ३ ॥ अ.३ ॥

॥ इति आत्माधिकरणम् ॥ ३ ॥

---

१. **परमिति** ॥ परञ्ज्योतिरित्येकं पदं एव परब्रह्मेति च ततो द्वन्द्वः ततो बहुव्रीहिः । गिरः शब्दाः सर्वत्र सर्वागमेषु स्थिताः । एकं मुख्यवाच्यं कथञ्चन केनापि निमित्तेनेत्यर्थः । शिष्टं स्पष्टम् ॥ ३ ॥ अ.३ ॥

## ४. अविभागाधिकरणम्

**(परमात्मनि प्रविष्टः जीवः परमात्मभुक्तभोगानेव अनुभवति)**

अत्र नये सायुज्यभाजां भगवद्भुक्तभोगभोक्तृत्वसमर्थनम् । अन्यथा गुहानयोक्तं भगवतः सारभोक्तृत्वं न स्यादिति तेन नयेन(१.२.३) सङ्गतिः । सायुज्यभाजां भोगा विषयः । परमात्मना भुक्ता एव तैर्भुज्यन्ते अन्ये वेति संशयः । उभयथापि सम्भवस्तद्बीजम् । अन्ये एवेति पूर्वपक्षः ॥

**॥ ॐ अविभागेन दृष्टत्वात् ॐ ॥ ४ ॥**

शब्दे, भोगान्, भुङ्क्ते, एव परं, मुक्तः, इति वर्तते । यथायथं विपरिणामः । अयमर्थः- मुक्तः सायुज्यमुक्तिमान् परस्य परमात्मनः भोगानेव तद्भुक्तभोगानेव **अविभागेन** अविरोधेन स्वयोग्यतानुसारेणेति यावत् । भुङ्क्ते न तु भगवदभुक्तभोगान् । शब्दे चतुर्वेदशिखायां **दृष्टत्वात्** दर्शनादिति ॥ अत्र एवशब्देन भगवदभुक्तभोगभोक्तृत्वं व्यावर्त्यते न तु भगवद्भुक्तयावद्भोगभोक्तृत्वं सम्पाद्यत इति ज्ञेयम् ॥

**ये भोगाः परमात्मना भुज्यन्ते त एव मुक्तैर्भुज्यन्ते । 'यानेवाहं शृणोमि यान् पश्यामि याञ्जिघ्रामि तानेवैत इदं शरीरं विमुच्यानुभवन्ति' इति दृष्टत्वाच्चतुर्वेदशिखायाम् ।**

**भविष्यत्पुराणे च–**

**'मुक्ताः प्राप्य परं विष्णुं तद्भोगान् लेशतः क्वचित् ।**
**बहिष्ठान् भुञ्जते नित्यं नाऽनन्दादीन् कथञ्चन ॥' इति ।**

॥ इत्यविभागाधिकरणम् ॥ ४ ॥

भा.॥ सूत्रं व्याचक्षते- **भोगा इति** ॥ **एवेति** ॥ लेशा इति शेषः । भगवद्भुक्ता लेशा एव भोगा यत्किञ्चिद्भोगा एवेत्यर्थः । दृष्टत्वादिति सूचितां श्रुतिमाहुः- **'यानिति** ॥ ननु श्रुतौ सामान्यत एव

१. **यानिति** ॥ ईश्वरवाक्यमेतत् । एते सायुज्यभाजो मुक्ताः इदं शरीरं कर्मारब्धं देहमित्यर्थः । स्पष्टम् अन्यत् ।

भगवद्भुक्तभोगानुभवश्रवणेन सर्वभोगभोक्तृत्वमेव मुक्तानां न तु यत्किञ्चिद्भोगभोक्तृत्वमित्यत आहुः- भविष्यत्पुराणे च- **'मुक्ता इति ॥** तत्रेत्युक्तेश्चेत्यर्थः ॥ ४ ॥ अ.४ ॥

**॥ इति अविभागाधिकरणम् ॥ ४ ॥**

१. **मुक्ता इति ॥** तद्भोगान् ईश्वरभोग्यान् विषयान् बहिष्ठान् ईश्वरस्वरूपबहिर्भूतान्, कचित् कांश्चिद्विषयान्, आनन्दादीन् ईश्वरस्वरूपानन्दादीन्, कथञ्चन केनापि निमित्तेन इत्यर्थः । शिष्टं स्पष्टम् । अत्र कचिदित्यनेन लक्ष्म्यानन्दादिव्यावृत्तिः 'लेशत इत्यनेन प्राकृतानामपि सर्वेषां भोगव्यावृत्तिश्चोक्ता भवति ॥ ४ ॥ अ.४ ॥

## ५. ब्राह्माधिकरणम्

**(परमात्मनि प्रविष्टः सायुज्ययोग्यमुक्तजीवः स्वस्वरूपदेहेन परमात्मदेहेनापि भोगाननुभवति)**

अत्र नये मुक्तानां भोगे साधनसमर्थनम् । अन्यथा (४.४) आद्यनयोक्तोऽविहायभोगः, पूर्व(४.४.४)नयोक्त भगवद्भुक्तभोगश्च, न सम्भवतीति ताभ्यां सङ्गतिः । भोगो विषयः मुक्तानां युक्तो न वेति संशयः । विप्रतिपत्तिः तद्बीजम् । साधनाभावात् नेति पूर्वपक्षः ।

**॥ ॐ ब्राह्मेण जैमिनिरुपन्यासादिभ्यः ॐ ॥ ५ ॥**

मुक्तो, भोगान् भुङ्क्ते, एवेति वर्तते । मन्यत इति शेषः । अयमर्थः- मुक्तो **ब्राह्मेणैव** ब्रह्मसम्बन्धिदेहेनैव भोगान् भुङ्क्ते **उपन्यासादिभ्यः**, 'स वा एषः' इति तदर्थोपन्यासरूपमाध्यन्दिनायनश्रुतेः, 'आदत्ते हरिहस्तेन' इति स्मृतेः, 'गच्छामि विष्णुपादाभ्याम्' इति बृहत्तन्त्रोक्तयुक्तेश्चेति जैमिनिर्मन्यत इति ।

**सर्वदेहपरित्यागेन मुक्ताः सन्तो ब्राह्मेणैव देहेन भोगान् भुञ्जत इति जैमिनिर्मन्यते ।**

**स वा एष ब्रह्मनिष्ठ इदं शरीरं मर्त्यमतिसृज्य ब्रह्माभिसम्पद्य ब्रह्मणा पश्यति ब्रह्मणा शृणोति ब्रह्मणैवेदं सर्वमनुभवति' इति माध्यन्दिनायनश्रुतावुपन्यासात् ॥**

**'आदत्ते हरिहस्तेन हरिदृष्ट्यैव पश्यति ।**
**गच्छेच्च हरि(पादेन) पादाभ्यां मुक्तस्यैषा स्थितिर्भवेत् ॥' इति स्मृतेः ॥**

**'गच्छामि विष्णुपादाभ्यां विष्णुदृष्ट्या च दर्शनम् ।**
**इत्यादिपूर्वस्मरणान्मुक्तस्यैतद्भविष्यति ॥' इति बृहत्तन्त्रोक्तयुक्तेश्च ॥ ५ ॥**

भा. ॥ सूत्रार्थमाहुः- सर्वेति ॥ (स्थूलदेहस्य लिङ्गदेहस्य च परित्यागेनेत्यर्थः ।) मुक्ताः- सायुज्यभाजः उपन्यासश्रुतिमाहुः- **'स वा इति** ॥ नन्वत्र श्रुतौ भोगो ब्रह्मणा भवतीति श्रूयते न

---

१. **स वा इति ॥ मर्त्यं** मरणशीलं विनाश्यमिति यावत् । **इदं शरीरं** स्थूलसूक्ष्मरूपं देहम् **अतिसृज्य** त्यक्त्वा अभिसम्पद्य प्राप्य ब्रह्मणा तद्देहेनेत्यर्थः । स्पष्टमन्यत् ।

तु तद्देहेनेतीत्यत आहुः- [1]**आदत्त इति** ॥ ननु स्वतो देहशून्यस्य कथं परदेहेन भोगो युज्यते प्रलयादावभावादत आहुः- [2]**गच्छामीति** ॥ ५ ॥

**देहमनङ्गीकृत्य भोगः समर्थितः देहाङ्गीकारेणापि भोगसमर्थनाय सूत्रम्-**

## ॥ ॐ चितिमात्रेण तदात्मकत्वादित्यौडुलोमिः ॐ ॥ ६ ॥

**तदात्मकत्वात् तत् चिन्मात्रमात्मा स्वरूपं यस्य स तदात्मकम्, तस्य आत्मकं तदात्मकमिति च विग्रहः तस्य भावस्तस्मात् । मुक्तो, भोगान्, भुङ्क्ते, एव, मन्यते, शब्दादिति वर्तते । यथायथमावृत्ति-विपरिणामौ । अयमर्थः- मुक्तः चितिमात्रेणैव केवलज्ञानरूपेणैव देहेन भोगान् भुङ्क्ते मुक्तस्य तदात्मकत्वात् केवलज्ञानात्मकदेहरूपत्वात् चितिमात्रस्य तदात्मकत्वात् मुक्तस्वरूपत्वात् शब्दात् 'सर्वं वा एतत्' इत्यौद्दालकश्रुतेरिति औडुलोमिः मन्यते इति ॥ प्रथमतदात्मकत्वादित्यनेन मुक्तस्य देहवत्त्वे संसारित्वापत्तिर्वारिता द्वितीयेन चितिमात्रदेहस्याऽपि संसारित्वापत्तिभियाऽनङ्गीकारे स्वरूपस्यैवाऽसिद्धिरुक्ता भवति । एवं च कृत्रिमदेहस्य संसारापादकत्वमिति बोध्यम् ।**

**चितिमात्रो देहो मुक्तानां पृथग्विद्यते तेन भुञ्जते । 'सर्वं वा एतदचित्परित्यज्य चिन्मात्र एवैष भवति चिन्मात्र एवावतिष्ठते तामेतां मुक्तिरित्याचक्षते' इत्युद्दालक-श्रुतेश्चिदात्मकत्वादित्यौडुलोमिर्मन्यते ॥ ६ ॥**

**भा.** ॥ सूत्रं व्याचक्षते- **चितिमात्र इति** ॥ **पृथगिति** ॥ ब्रह्मदेहाऽपेक्षया पृथगित्यर्थः । उक्तार्थे मानमाहुः- [3]**सर्वमिति** ॥ **चिदात्मकत्वादिति** ॥ देहस्येति शेषः ॥ ६ ॥

**नन्वेतौ परिहारौ न युक्तौ देह-तदभावयोर्विरोधात् वस्तुविकल्पायोगादिति शङ्कापरिहाराय सूत्रम्-**

---

१. **आदत्ते इति** ॥ हरिदृष्ट्या हरिचक्षुषेत्यर्थः । शिष्टं स्पष्टम् ।

२. **गच्छामीति** ॥ अहं मुक्तौ गच्छामि गमिष्यामि । दर्शनं भविष्यतीति शेषः । इत्यादिपूर्वस्मरणात् इत्यादिविषयकसंसारकालिकस्मरणरूपोपासनात् मुक्तस्य सायुज्यमुक्तस्य एतत् अन्यदेहेन भोजनं भविष्यतीत्यर्थः ॥ ५ ॥

३. **सर्वमिति** ॥ एतत् प्रत्यक्षसिद्धं सर्वमचित् जडात्मकं स्थूलसूक्ष्मशरीरं परित्यज्य एष जीवः चिन्मात्र एव भवति तथाभिव्यज्यते तामेतां दशामित्यर्थः । शिष्टं स्पष्टम् । चिन्मात्र एवावतिष्ठत इत्यनेन अभिव्यक्तचिन्मात्रत्वस्य तिरोधानं नेति बोधितम् ॥ ६ ॥

**॥ ॐ एवमप्युपन्यासात्पूर्वभावादविरोधं बादरायणः ॐ ॥ ७ ॥**

जैमिनिरौडुलोमिरित्यनुवर्त्य षष्ट्या विपरिणम्यते । मन्यत इति वर्तते । अयमर्थः- **एवम्** औडुलोम्युक्तप्रकारेण **उपन्यासात्** 'स वा एषः' इति श्रुतौ स्पष्टमुक्तत्वात् **पूर्वभावादपि** पूर्वस्मिन् जैमिन्युक्तेऽर्थेऽपि प्रमाणसद्भावात् जैमिनेरौडुलोमेश्च **अविरोधं** मतद्वयस्य विरोधाभावं मन्यते बादरायण आचार्य इति ।

**'स वा एष एतस्मान्मर्त्याद्विमुक्तश्चिन्मात्रीभवत्यथ तेनैव रूपेणाभिपश्यति अभिशृणोति अभिमनुतेऽभिविजानाति तामाहुर्मुक्तिः' इति सौपर्णश्रुतौ चिन्मात्रेणाप्युपन्यासाज्जैमिन्युक्तस्य भावादुभयत्राप्यविरोधं बादरायणो मन्यते ॥**

**नारायणाध्यात्मे च–**

**'मर्त्यं देहं परित्यज्य चितिमात्रात्मदेहिनः ।**
**चितिमात्रेन्द्रियाश्चैव प्रविष्टा विष्णुमव्ययम् ॥**
**तदङ्गानुगृहीतैश्च स्वाङ्गैरेव प्रवर्तनम् ।**
**कुर्वन्ति भुञ्जते भोगांस्तदन्तर्बहिरेव वा ।**
**यथेष्टं परिवर्तन्ते तस्यैवानुग्रहेरिताः ॥' इति ॥ ७ ॥**

॥ इति ब्राह्माधिकरणम् ॥ (चितिमात्राधिकरणम्) ॥ ५ ॥

**भा.॥ उपन्यासात्** (मध्यमपदलोपी समासः । उपन्यासपदसूचितश्रुतेरित्यर्थः ।) उपन्यासश्रुतिम् उपन्यस्य सूत्रार्थमाहुः - [1]**स वा इति** ॥ अविरोधप्रकारं स्मृत्या दर्शयन्ति- [2]**मर्त्यं देहमिति ॥ इतीति** ॥ अध्यात्मे इत्युक्तेश्चेत्यर्थः ॥ ७ ॥ अ.५ ॥

**॥ इति ब्राह्माधिकरणम् ॥ ५ ॥**

१. **स वा एष इति ॥** स मुक्तः मर्त्याद्विनाश्यात् एतस्मात्कर्मारब्धशरीरात् विमुक्तः चिन्मात्रः चिदात्मकदेहवान् व्यक्तो भवति । अथानन्तरं तेनैव रूपेण चित्स्वरूपेणैवेन्द्रियेणाऽभिपश्यति मनुते सामान्यज्ञानी विजानाति विशेषज्ञानवान् तां दशामित्यर्थः । शिष्टं स्पष्टम् ।

२. **मर्त्यमिति ॥** विष्णुप्रविष्टा इत्यनेन सायुज्यमुक्तिभाग्विषयमिदमिति सूचितम् । तदङ्गानुगृहीतैः भगवदङ्गानुगृहीतैः प्रवर्तनं व्यापारमित्यर्थः । तदन्तः विष्णुदेहान्तः बहिः तद्देहाद्बहिः । स्पष्टमन्यत् ॥ ७ ॥ अ.५ ॥

## ६. सङ्कल्पाधिकरणम्

**(मुक्तः स्वसङ्कल्पमाणेण भोगाननुभवति)**

अत्र नये ब्रह्मप्राप्तमुक्तस्य स्वीययत्नं विना स्वेच्छासाध्यभोगसमर्थनम्। मुक्तभोगस्य तत्तत्साधनसाध्यत्वे सांसारिकभोगवैलक्षण्यानापत्त्या मुक्तेः पुरुषार्थत्वं न स्यादिति पूर्वोक्तं सर्वं व्यर्थमिति (जिज्ञासादिनयैः) सङ्गतिः । मुक्तभोगो विषयः । तत्तदुपायसाध्यसाधनसाध्यो वा सङ्कल्पमात्रसाध्यो वेति संशयः । लोकदृष्टिरलौकिकत्वं च तद्बीजम् । तत्तत्साधनसाध्य इति पूर्वः पक्षः ॥

**॥ ॐ सङ्कल्पादेव च तच्छ्रुतेः ॐ ॥ ८ ॥**

मुक्तो, भोगान्, भुङ्क्ते इति वर्तते । एवः टीकापक्षे बलवदित्यर्थे । बलवत्त्वं च अप्रतिहतत्वम् । च एवार्थे । प्रदीपपक्षे तु एवः अवधारणे । चः अनिष्टभोगव्यावर्तने । पक्षद्वयानुरोधेनायमर्थः- मुक्तो भोगांश्च अनिष्टेतरभोगान् भुङ्क्ते सङ्कल्पादेव अप्रतिहतस्वकामादेव न तु स्वप्रयत्नसहितात् तच्छ्रुतेः तस्योक्तार्थस्य 'स यदि पितृलोककामो भवति' इत्यादिश्रुतौ श्रवणादिति ॥

**न तेषां भोगादिषु प्रयत्नापेक्षा । 'स यदि पितृलोककामो भवति सङ्कल्पादेवास्य पितरः समुत्तिष्ठन्ति' इत्यादिश्रुतेः ॥ ८ ॥**

॥ इति सङ्कल्पाधिकरणम् ॥ ६ ॥

भा.॥ अवधारणव्यावर्त्यमाहुः- **न चेति** ॥ तेषां- मुक्तानां भोगानिष्टनिवृत्त्यादिषु प्रयत्नापेक्षा नेत्यर्थः । किन्तु स्वेच्छापेक्षाऽस्तीति शेषः । श्रुतिमाहुः- **'स यदीति** ॥ ८ ॥ अ.६ ॥

॥ इति सङ्कल्पाधिकरणम् ॥ ६ ॥

---

१. **स यदीति** ॥ (छा.८.२.१) 'तेन पितृलोकेन सम्पन्नो महीयते' इति वाक्यशेषः । स मुक्तो यदि पितृलोककामः पितृणां लोकः विष्णुलोकः भूयादिति कामनावान् भवति अनन्तरं तदवलोकनमपि भूयादिति कामनावांश्च भवति तदास्य मुक्तस्य सङ्कल्पादेव अपेक्षावशादेव अस्य मुक्तस्य पितरः समुत्तिष्ठन्ति स्वयोग्यसाधनमनुष्ठाय संसारान्मुक्ताः सन्तः पुरःस्थिता भवन्ति । तेन पितृलोकेन तद्दर्शनेन सम्पन्नो युक्तः सन् महीयते स्वावरैः पूज्यते इत्यर्थः । अत्र 'चरमे तु यथा निजम्' इति प्रमाणोक्तदिशा पित्रादयः चरमशरीरपित्रादयः योग्या एवेति विज्ञेयाः ॥ ८ ॥ अ.६ ॥

## ७. अनन्याधिपत्यधिकरणम्

**(मुक्तानां स्वाधमा अधिपतयः न सन्ति)**

अत्र नये मुक्तानां स्वाधमनियम्यत्वनिराकरणम् । अन्यथा मुक्तेः संसारतुल्यत्वापत्त्या पूर्वनयवत्सङ्गतिः । मुक्तो विषयः । क्रमपतिभ्योऽन्यपतिनियुक्तो न वेति संशयः । उभयथापि सम्भवस्तद्बीजम् । अन्यपतिनियुक्त इति पूर्वपक्षः ॥

**॥ ॐ अत एव चाऽनन्याधिपतिः ॐ ॥ ९ ॥**

एवः प्राबल्यद्योतकः । **चः** **टीकापक्षे** शङ्काव्यावर्तने, समुच्चये च । प्रदीपपक्षे स्मृतिसमुच्चये । न विद्यतेऽन्योऽधिपतिर्यस्येति बहुव्रीहिः । मुक्त इति वर्तते । अतः चेति द्वयमप्यावर्तते । अयमर्थः- मुक्तः **अत एव** प्रबलात् सत्यसङ्कल्पात् अहमियतामेव नियतः स्यामिति सङ्कल्पाद्वा अयमस्माकमेव नियतस्स्यादित्यधिपतीनां सङ्कल्पाद्वा **अनन्याधिपतिः** स्वकीयस्वोत्तमेभ्योऽन्यनियामकरहितो भवति । 'परमोऽधिपतिः' इति स्मृतेः । अतो मुक्तः स्वावरादिनियम्यः परगृहप्रविष्टत्वात् राजगृह-प्रविष्टामात्यादिवदिति शङ्का न कार्येति ॥

**सत्यसङ्कल्पत्वादेव ।**

**'परमोऽधिपतिस्तेषां विष्णुरेव न संशयः ।**
**ब्रह्मादिमानुषान्तानां सर्वेषामविशेषतः ॥**

**ततः प्राणादिनामान्ताः सर्वेऽपि पतयः क्रमात् ।**
**आचार्याश्चैव सर्वेऽपि यैर्ज्ञानं सुप्रतिष्ठितम् ।**
**एतेभ्योऽन्यः पतिर्नैव मुक्तानां नात्र संशयः ॥' इति हि वाराहे ॥ ९ ॥**

॥ इत्यनन्याधिपत्यधिकरणम् (अनन्याधिपतित्वाधिकरणम्) ॥ ७ ॥

**भा.॥** सौत्र'अत एवेति पदस्यार्थमाहुः- **सत्यसङ्कल्पादेवेति** ॥ अनन्याधिपतिशब्दस्य स्मृत्याऽर्थमाहुः- **[1]परम इति ॥ वाराह इति** ॥ सौत्रानन्याधिपतिपदार्थ उक्त इति शेषः ॥ ९ ॥ अ.७ ॥

**॥ इत्यनन्याधिपत्यधिकरणम् (अनन्याधिपतित्वाकरणम्) ॥ ७ ॥**

---

१. **परम इति** ॥ मायाः लक्ष्म्याः परः परमः इति **दीपिका** । तेषां मुक्तानाम् । ततोऽनन्तरं पतयोऽधिपतयः । क्रमात् विरिञ्चेतरेषां विरिञ्चः विरिञ्चवाणीतरेषां वाणीति क्रमेण यैः ब्रह्मादिभिः ज्ञानं सुप्रतिष्ठितमुत्पादितम्, यतः अतः ते ब्रह्मादयः क्रमादाचार्याश्च एतेभ्यो ब्रह्मादिभ्योऽन्यः पतिरधिपतिरित्यर्थः । शिष्टं स्पष्टम् । अत्र परम इत्यनेन लक्ष्म्या अपि समग्रमुक्ताधिपतित्वं सूचितम् ॥ ९ ॥ अ.७ ॥

## ८. उभयविधभोगाधिकरणम्

**(मुक्ताः शुद्धसत्त्वात्मकदेहेन चिद्रूपदेहेन वा भोगाननुभवन्ति)**

अत्र नये मुक्तानां भोगानुपपत्तिनिवारणम् । अन्यथा मुक्तेः पुरुषार्थत्वं न स्यादिति पूर्व(नय)वत् सङ्गतिः । मुक्तभोगो विषयः । तस्य युज्यते न वेति संशयः । वादिविप्रतिपत्तिः तद्बीजम् । नेति पूर्वपक्षः ॥

**॥ ॐ अभावं बादरिराह ह्येवम् ॐ ॥ १० ॥**

मुक्तः, श्रुतेः, मन्यत, इति वर्तते । यथायथं विपरिणामः । अयमर्थः- **बादरिः** आचार्यः, मुक्तस्य **अभावं** ज्योतिर्मयदेहाभावं मन्यते **हि** यतः श्रुतिः'अशरीरो वाव तदा भवति' इति श्रुतिः **एवं** मुक्तस्योक्त-देहाभावमाहात इति । बाह्यदेहाभावेऽपि चिन्मात्रदेहोऽस्त्येवेति भोग उपपद्यत इति भावः ॥

**चिन्मात्रं विनाऽन्यो देहस्तेषां न विद्यत इति बादरिः । 'अशरीरो वाव तदा भवत्यशरीरं वाव सन्तं न प्रियाप्रिये स्पृशतो याभ्यां ह्येष उन्मथ्यते' इत्येवं कौण्ठरव्यश्रुतावाह हि ॥ १० ॥**

भा. ॥ (सूत्रार्थमाहुः- **चिन्मात्रमिति** ॥ मात्रपदेन व्यावर्त्यम् अन्य इत्यादि ।) श्रुतिमाहुः- [1]**अशरीर इति** ॥ **आह हीति** ॥ हि यतः श्रुतावाहाऽतो न विद्यते इत्यन्वयः ॥ १० ॥

बाह्यदेहसद्भावप्रतिपादनाय सूत्रम्-

**॥ ॐ भावं जैमिनिर्विकल्पाम्नानात् ॐ ॥ ११ ॥**

मुक्तस्य मन्यत इति वर्तते । अयमर्थः- **जैमिनिः** आचार्यो मुक्तस्य **भावं** ज्योतिर्मयदेहसत्त्वं मन्यते **विकल्पाम्नानात्** 'स वा एषः' इत्युद्दालकश्रुतौ विकल्पस्य चिन्मयाचिन्मयान्यतरदेहवत्त्वस्य प्रतिपादनादिति ॥

---

१. **अशरीर इति** ॥ तदा मुक्तिकाले एष मुक्तः अशरीरो वाव प्राकृतदेहशून्य एव भवति यतोऽत एनं प्रियाप्रिये सुखदुःखे न स्पृशतः । याभ्यां प्रियाप्रियाभ्याम् एष जीव उन्मथ्यते पीडितो भवति ते प्रियाप्रिये इत्यन्वय इत्यर्थः । शिष्टं स्पष्टम् ॥ १० ॥

**'स वा एष एवंवित्परमभिपश्यत्यभिशृणोति ज्योतिषैव रूपेण चिता वाऽचिता वा नित्येन वाऽनित्येन वाऽथाऽनन्दी ह्येवैष भवति नानानन्दं कश्चिदुपस्पृशति' इत्यौद्दालकश्रुतौ विकल्पाम्नानादन्यदेहस्यापि भावं जैमिनिर्मन्यते ॥ ११ ॥**

भा.॥ श्रुत्युपन्यासेन सूत्रभावमाहुः- **'स वा इति ॥ अन्यदेहस्येति ॥** चिन्मयातिरिक्त-ज्योतिर्मयदेहस्यापीत्यर्थः ॥ ११ ॥

**स्वमतप्रतिपादनाय सूत्रम्-**

**॥ ॐ द्वादशाहवदुभयविधं बादरायणोऽतः ॐ ॥ १२ ॥**

**सङ्कल्पान्मन्यते इति वर्तते । शरीरमिति शेषः । अयमर्थः- द्वादशाहवत्** तन्नामकसत्रवत् **सङ्कल्पात्** मुक्तेच्छावशात् **शरीरं** मुक्तशरीरम् **उभयविधं** प्रकारद्वयोपेतम् **अतः** उभयत्र प्रमाणसत्त्वादिति **मन्यते बादरायण** आचार्य इति ॥

**अयमाशयः- यथा दिनसमूहसाध्यः कश्चन यागविशेषः तत्रैकादशाहपर्यन्तमहीनः त्रयोदशादारभ्य सत्रात्मकः तत्र द्वादशाहस्य सत्रात्मकत्वं क्रत्वात्मकत्वञ्चेति प्रकारद्वयमविरुद्धं यजमानेच्छया एकयजमानकत्वे क्रतुत्वस्य, अनेकयजमानकत्वे सत्रत्वस्य च, सम्भवात् तथा मुक्तेच्छया ज्योतिर्मयदेहस्यापि भावोऽभावश्चेति प्रकारद्वयमविरुद्धम् । कालभेदेनोभयोरपि सम्भवादिति ॥**

**यथा द्वादशाहः क्रत्वात्मकः सत्रात्मकश्च भवति, एवं मुक्तभोगो बाह्यशरीर-कृतश्चिन्मात्रकृतश्च भवति' इति बादरायणो मन्यते ॥ १२ ॥**

**भा.॥** सूत्रं व्याचक्षते- **यथेति ॥ क्रत्वात्मकः-** अहीनात्मक इत्यर्थः । 'श्रेष्ठयज्ञो वा एष य द्वादशाहः' इति श्रुतौ यज्ञशब्देन महान् अनेकाहेषु अस्य श्रेष्ठत्वादित्यादौ क्रतुशब्देन च, द्वादशाहस्य

---

१. **स वा इति ॥ परं** परमात्मानम् **एवं** पूर्वोक्तप्रकारेण **वित्** अपरोक्षज्ञानी स एव मुक्तः नित्येन **चिता** चैतन्यात्मकेन । **अनित्येनाचिता** शुद्धसत्त्वात्मकेन **ज्योतिषा** प्रकाशमानेन रूपेण शरीरेणैव अभिपश्यति अभिशृणोति एतदुपलक्षितसकलज्ञानी भवति । **आनन्द्येव** व्यक्तसुखवानेव **हि** यतः **अनानन्दं** दुःखं किञ्चित् मुक्तं **नोपस्पृशति** अत आनन्द्येवेत्यन्वयः । अत्र दर्शनद्वयम्- मुक्तसम्बन्ध्यचिच्छरीरादिकमपि नित्यमेव । अनित्यत्वं तु स्वेन परिग्रहमात्रेणेत्येकम्, अन्यत्तु - अचिच्छरीरादिकमुत्पत्तिविनाशवदेवेति ॥ ११ ॥१२॥

व्यवहारात् । **शरीरकृतश्चेति** ॥ इदं सूत्रस्य फलितार्थकथनम् । ननु देहाऽभावे कथं भोग इत्यत आहुः- **उपपत्तिश्चेति** ॥ पक्षद्वयेऽपीति शेषः । देहपक्षे तदभावपक्षे च मुक्तभोगस्योपपत्तिरस्त्येवेत्यर्थः ॥ १२ ॥

**देहाभावे भोगोपपत्तिबोधनाय सूत्रम्-**

**उपपत्तिश्च–**

**॥ ॐ तन्वभावे सन्ध्यवदुपपत्तेः ॐ ॥ १३ ॥**

**मुक्त इत्यस्ति मुक्तस्येति विपरिणम्यते । न दोष इति शेषः । अयमर्थः- मुक्तस्य तन्वभावे बाह्यशरीराभावे सन्ध्यवत् स्वप्नावस्थायामिव उपपत्तेः भोगोपपत्तेः न दोषः देहाभावे भोगाभाव इति दोषो नेति ॥**

**सन्ध्यं स्वप्नः । 'सन्ध्यं तृतीयं स्वप्नस्थानम्' (बृ.६.३.९) इति श्रुतेः ॥ २३ ॥**

**भा. ॥** **'सन्ध्यमिति** ॥ सन्ध्यपदार्थः स्वप्न इत्यर्थः । तत्र मानमाहुः- **सन्ध्यमिति** ॥ यद्यपि स्वप्ने देहोऽस्ति तथापि तदभिमानाऽभावादविद्यमानत्वेन व्यवहारः ॥ १३ ॥

देहपक्षे उपपत्त्यर्थं सूत्रम्-

**॥ ॐ भावे जाग्रद्वत् ॐ ॥ १४ ॥**

**जाग्रद्वदित्यत्र अधिकरणकालस्य कर्तृत्वविवक्षया लट्, शतृप्रत्ययश्च । मुक्तस्योपपत्तेरिति वर्तते । प्रथमया विपरिणम्यते । अयमर्थः- मुक्तस्य भावे बाह्यदेहसत्त्वे जाग्रद्वत् जाग्रदवस्थायामिव उपपत्तिः मुक्तौ भोगोपपत्तिरिति ॥ ननु बाह्यदेहपक्षे भोगाभावशङ्कैव नेतीदं सूत्रं कुत इति चेत् उच्यते- उत्तरसूत्रे वक्ष्यमाणस्य देहसत्त्वे जाग्रद्वत् दुःखभोगोऽपि स्यादिति शङ्कारूपदूषणस्य प्रस्तावायेति ॥**

**ब्रह्मवैवर्ते च–**

**'स्वप्नस्थानां यथा भोगो विना देहेन युज्यते ।**
**एवं मुक्तावपि भवेद्विना देहेन भोजनम् ॥**

---

१. **सन्ध्यमिति** ॥ (बृ.६.३.९) जाग्रत्सुषुप्त्योः सन्धौ भवं सन्ध्यं तृतीयं जाग्रत्सुषुप्त्यपेक्षया तृतीयं स्वप्नाख्यं स्थानमित्यर्थः ॥ १३ ॥

**स्वेच्छया वा शरीराणि तेजोरूपाणि कानिचित् ।**
**स्वीकृत्य जागरितवद्भुक्त्वा त्यागः कदाचन ॥' इति ॥ १४ ॥**

भा.॥ ननु तन्वभावे सुप्त्यादाविव मुक्तावपि भोगाभावः किं न स्यात् इति शङ्कावारणायोक्तसूत्रद्वयार्थे स्मृतिमाहुः- **ब्रह्मवैवर्ते च** - **'स्वप्नस्थानामिति** ॥ सूत्रद्वयार्थ उक्त इति शेषः ॥ १४ ॥

देहसत्त्वे जाग्रद्वत्सुखस्येव दुःखस्यापि भोगः स्यादिति शङ्कावारणाय सूत्रम्-

**॥ ॐ प्रदीपवदावेशस्तथाहि दर्शयति ॐ ॥ १५ ॥**

मुक्तस्येति वर्तते । प्रकृतत्वाद्देहे श्रुतिरिति लभ्यते । अयमर्थः- मुक्तस्य देहे बाह्यदेहे **आवेशः** प्रवेशः **प्रदीपवत्** प्रदीपस्य दीपिकादौ प्रवेश इव भवतीति शेषः । **हि** यतः श्रुतिः 'तीर्णो हि' इति श्रुतिः **तथा** दुःखाऽभावं **दर्शयति** अत इति ॥ अयं भावः- यथा दीपिकाप्रविष्टः प्रदीपः दीपिकागतं शुभतैलाद्येव भुङ्क्ते, न तु तद्गतकार्ष्ण्यादिदोषं तथा मुक्तोऽपि देहप्रयुक्तशुभमेव भुङ्क्ते न दोषमिति ॥

**शरीरमनुविश्यापि तत्प्रकाशयन्तः पुण्यानेव भोगाननुभवन्ति न तु दुःखादीन् । यथा प्रदीपो दीपिकादिषु प्रविष्टस्तत्स्थं तैलाद्येव भुङ्क्ते न तु कार्ष्ण्यादि । 'तीर्णो हि तदा सर्वाञ्छोकान्हृदयस्य भवति' (बृ.६.३.२२) इति हि दर्शयति ॥ १५ ॥**

भा.॥ सूत्रार्थमाहुः- **शरीरमिति** ॥ तत्प्रकाशयन्तः- तद्विवेकवन्तः । दीपिका- वर्तिका । अत्रैव श्रुतिमाहुः- [2]**तीर्णो हीति ॥ इतीति** ॥ इति श्रुतिः हि यतः दर्शयति अतो न दुःखादीनित्यन्वयः । ननु ज्योतिर्मयशरीरे दोषाभावेन मुक्ते तद्देहप्रयुक्तदुःखाप्रसक्त्या कथमियं शङ्केति चेदुच्यते । एतत्

---

१. **स्वप्नस्थानामिति ॥** देहेन देहाभिमानेन मुक्तावपि देहेन प्राकृतदेहेन शरीराणि प्राकृतशरीराणि कदाचन भोगानन्तरकाले त्याग उक्तशरीराणामित्यर्थः । शिष्टं स्पष्टम् । **स्वप्ने देहसत्त्वेऽपि अभिमानाभावः मुक्तावुभयाभाव इति ज्ञेयम्** । षष्ठे बृहद्भाष्ये तु- मुक्तिकाले स्वरूपदेहस्य सूक्ष्मस्यापि वृद्ध्या भोग उक्तः। स च 'अल्पं तेजस्तथैवाल्पं जीवरूपं हि संसृतौ । तथापि च सुमहत्तेजः करोति भगवान् महत् । अतो नवतरं चैतत् ब्रह्मादीनाम्' इत्युक्तवचनपर्यालोचनया ब्रह्माद्युत्तमाधिकारिविषय इति भाति । **अत्र स्वरूप-देहस्योक्तमहत्त्वं** स्वस्वचरमदेहसमत्वेन तूलपिण्डवत् प्रचय एव न तु विकार इति ध्येयम् ॥ १४ ॥

२. **तीर्णो हीति** ॥ व्या.(पृ. १२२) **न चेति** ॥ (का. १-१२) स्पष्टम् ॥ १५ ॥

सूत्राकरणे तच्छरीरे दोषवत्त्वशङ्का स्यात् । एतत्सूत्रकरणे तु - मुक्ते दुःखाभावसिद्ध्या तच्छरीरेऽपि दोषो नेति सिध्यतीति ॥ १५ ॥

**न च 'स्वर्गे लोके न भयं किञ्चनास्ति' (कठ.१.१२) इत्यादिना स्वर्गादिस्थस्यैतदिति वाच्यम् । यतः —**

ननु 'तीर्णो हि' इति वाक्यं स्वर्गादिस्थविषयकं किं न स्यात् बाधकाभावात् 'स्वर्गे लोके न भयं किञ्चित्' इति मानसत्त्वाच्चेति शङ्कते- **न चेति ॥ एतत्** - 'तीर्णो हि' इति वाक्यम् । **स्वर्गादिस्थस्य**-तद्विषय इत्यर्थः । तथा च - मुक्तानां दुःखाद्यभावे न मानमिति भावः । कुतो न वाच्यमिति पृच्छन्ति- **यत इति ॥** 'यतश्चोदेति सूर्यः' इत्यादाविव प्रश्नार्थे यतश्शब्दः कुतो न वाच्यम् इत्यर्थः । प्रश्नस्योत्तरतया सूत्रं पठन्ति-

**॥ ॐ स्वाप्ययसम्पत्त्योरन्यतरापेक्षमाविष्कृतं हि ॐ ॥ १६ ॥**

स्वाप्ययः सुप्तिः सम्पत्तिर्मुक्तिः । एवेति वर्तते । प्रकृतत्वात् 'तीर्णो हि' इति वाक्यमिति लभ्यते । अन्यतरमपेक्षत इति अन्यतरापेक्षं भावप्रधानम् । यथायथमावृत्तिः । अयमर्थः- 'तीर्णो हि तदा सर्वान्' इति वाक्यं **स्वाप्ययसम्पत्त्योरन्यतरापेक्षमेव** अन्यतरपरमेव न स्वर्गपरं हि यतोऽन्यतरापेक्षत्व-माविष्कृतम् 'अत्र ह पिताऽपिता भवति' इत्यादि वाक्तेन स्पष्टीकृतमत इति ॥ स्वाप्ययसम्पत्त्यपेक्षमिति वक्तव्ये अन्यतरपदोपादानमुभयोरप्यर्थयोर्मुख्यत्वाद्यथारुचि अर्थो ग्राह्यः इति सूचनायेति **तन्त्रदीपिका** ॥

**सुप्तौ मोक्षे वा तदुच्यते । 'अत्र पिताऽपिता भवत्यनन्वागतं पुण्येनानन्वागतं पापेन' (बृ.६.३.२२) इत्याद्याविष्कृतत्वात् ।**

**ब्रह्मवैवर्ते च—**

**'ज्योतिर्मयेषु देहेषु स्वेच्छया विश्वमोक्षिणः ।**
**भुञ्जते सुसुखान्येव न दुःखादीन् कदाचन ॥**
**तीर्णा हि सर्वशोकांस्ते पुण्यपापादिवर्जिताः ।**
**सर्वदोषनिवृत्तास्ते गुणमात्रस्वरूपिणः ॥' इति ॥ १३ ॥**

॥ इत्युभयविधभोगाधिकरणम् ॥ ८ ॥

**भा.॥** सूत्रभावमाहुः- **सुप्ताविति ॥** यत इति वर्तते । यतः कारणात् एतत् 'तीर्णो हि' इति वाक्यं सुप्तौ मोक्षे वा विषये उच्यते पठ्यते अतो न वाच्यमिति सम्बन्धः । 'तीर्णो हि' इति वाक्यस्य मुक्तविषयकत्वे मानमाहुः - **[1]अत्र ह पितेति ॥ इत्याद्याविष्कृतत्वादिति ॥** इत्यादिना 'तीर्णो हि' इति वाक्यमन्यतरपरमित्यर्थस्य स्पष्टीकृतत्वादित्यर्थः । अस्य 'तदुच्यते' इत्यनेनान्वयः । 'अत्र ह' इति वाक्यस्य स्वर्गादिस्थपरत्वे अपितृत्वादिकमुच्यमानमसङ्गतं स्यात् स्वर्गादिस्थस्य श्राद्ध-भोजित्वादिना पितृत्वादेरेव सम्भवादिति भावः । अधिकरणार्थे स्मृतिं चाहुः- **ब्रह्मवैवर्ते च-[2]ज्योतिरिति ॥ इति चेति ॥** इत्युक्तेश्च न च वाच्यमिति सम्बन्धः । 'स्वर्गे लोके न भयं किञ्चन' इति वाक्यमपि मुक्तपरमेवेति ज्ञेयम् ॥ १६ ॥ अ.७ ॥

**॥ इति अभावाधिकरणम् ॥ ८ ॥**

---

१. **अत्र हेति ॥** (बृ. ६.३.२२) भगवता परिष्वक्तो जीवः पिता स्वपुत्राणां पिता सन्नपि अत्र सुप्तौ मुक्तौ च अपिता भवति पितृत्वप्रयुक्तदायदानादिरूपधर्मशून्यो भवतीत्यर्थः । अनन्वागतमिति ॥ पुण्येन अनिष्टपुण्येन पापेन चानन्वागतम् अन्वागमनं न भवतीत्यर्थः ॥

२. **ज्योतिर्मयेष्विति ॥** विश्वमोक्षिणः सर्वे मुक्ताः गुणमात्रस्वरूपिणः ज्ञानानन्दादिगुणैकस्वरूपिणः तीर्णाः तरणकर्तारः ज्योतिर्मयेषु शुद्धसत्त्वात्मकेषु सुसुखानि दुःखाद्यसम्भिन्नसुखानि निवृत्तसर्वदोष इत्यनुवादः, दोषाभावानामितरविशेषणैरेव सिद्धत्वादित्यर्थः । शिष्टं स्पष्टम् ॥ १६ ॥ अ.८ ॥

## ९. जगद्व्यापाराधिकरणम्

### (मुक्ताः जगत्सृष्ट्यादिव्यतिरिक्तान् कामाननुभवन्ति)

अत्र नये भोगे इयत्तासमर्थनम् । अन्यथा हरेः सर्वोत्तमत्वं न स्यादिति 'व्यतिहारो विशिंषन्ति' (३.३.२२) इति नयेन सङ्गतिः । मुक्तो विषयः । जगद्व्यापारवान् न वेति संशयः । जगद्व्यापारस्य भगवल्लक्षणत्वोक्तिः, मुक्तस्य सत्यकामत्वं चातद्बीजम् । जगद्व्यापारवानिति पूर्वपक्षः ॥

### ॥ ॐ जगद्व्यापारवर्जम् ॐ ॥ १७ ॥

मुक्तो, भोगान् श्रुतेरुपपत्तेर्भुङ्क्ते इति वर्तते । जगद्व्यापारान् वर्जयित्वेति विग्रहे द्वितीयायां चेति णमुल् । अयमर्थः- मुक्तो **जगद्व्यापारवर्जं** जगत्कर्मकसृष्ट्यादिव्यापारान् वर्जयित्वा भोगान् सर्वकामान् भुङ्क्ते अनुभवति श्रुतेः 'सर्वान् कामानाप्त्वा' इति श्रुतेरुपपत्तेः सर्वशब्दार्थ-सङ्कोचेनोपपत्तेस्तद्विरोधाभावादिति यावदिति ॥

**'सर्वान् कामानाप्त्वाऽमृतः समभवत्' (ए.आ.२.५.४) इत्युच्यते । तत्र सृष्ट्यादिभ्योऽन्यान् व्यापारानाप्नोति ॥ १७ ॥**

भा. ॥ [1]**सर्वान् कामानिति** ॥ यद्यपीति आदौ शेषः । **तत्रेति** ॥ इदमावर्तते ॥ तत्र तथापि तत्र सर्वकामेषु मध्ये इत्यर्थः । तथा च सिद्धान्ते 'सर्वान्' इति श्रुतौ सर्वशब्दसङ्कोच इति भावः ॥ १७ ॥

**कुतः—**

उक्तसर्वशब्दसङ्कोचे मानं पृच्छन्ति- **कुत इति** ॥ कुतो मानात्सर्वशब्दसङ्कोच इत्यर्थः । उत्तरतया सूत्रं पठन्ति-

---

१. **सर्वान् कामानिति** ॥ (ए.आ. २.५.४) 'स एवं विद्वानस्माच्छरीरभेदादूर्ध्व उत्क्रम्याऽमुष्मिन् स्वर्गे लोके' इति वाक्यशेषः । अयमर्थः- एवं विद्वान् यः सोऽधिकारी अस्माच्छरीरभेदात् शरीरविशेषात् ऊर्ध्वः सन् उत्क्रम्य अमुष्मिन् स्वर्गे लोके आनन्दादिरूपविष्णुलोके वैकुण्ठादौ अमृतो मुक्तः सन् सर्वान् कामानाप्त्वा स्वीकृत्य समभवत् अनुभवतीति पूर्वपक्षे । सिद्धान्ते तु- जगद्व्यापारातिरिक्तसर्वकामानाप्त्वेत्यर्थः ॥ १७ ॥

**॥ ॐ प्रकरणादसन्निहितत्वाच्च ॐ ॥ १८ ॥**

**जीवप्रकरणत्वाज्जीवानां तादृक्सामर्थ्यविदूरत्वाच्च ।**

जगद्व्यापारेत्येकदेशः, मुक्तस्य, श्रुतेरिति वर्तते । सङ्कोच इति शेषः । जगद्व्यापारे इति विपरिणम्यते । अयमर्थः- **श्रुतेः** 'सर्वान् कामान्' इति श्रुतेः **प्रकरणात्** शरीरभेदादूर्ध्वम् उत्क्रम्य इत्यारभ्याधीतत्वेन जीवप्रकरणत्वात् **मुक्तस्य** मुक्तजीवस्य जगद्व्यापारे **असन्निहितत्वाच्च** दूरस्थत्वात् तच्छक्त्यभावाच्चेति यावत् । सङ्कोच इति सङ्कोचपदार्थानन्तर्भावेण पूर्वसूत्रोक्तजगद्व्यापारवर्जने अस्य सूत्रस्य हेतुसमर्पकत्वेन व्याख्याने योगविभागो व्यर्थः स्यादिति बोध्यम् । अयमत्र प्रयोगः- 'न मुक्तो जगद्व्यापारशक्तिमान् जीवत्वात्सम्प्रतिपन्नवत्' इति ॥

**वाराहे च–**

**'स्वाधिकानन्दसम्प्राप्तौ सृष्ट्यादिव्यापृतिष्वपि ।**
**मुक्तानां नैव कामः स्यादन्यान् कामांस्तु भुञ्जते ॥**

**तद्योग्यता नैव तेषां कदाचित्क्वापि विद्यते ।**
**न चायोग्यं विमुक्तोऽपि प्राप्नुयान्न च कामयेत् ॥' इति ॥ १८ ॥**

भा.॥ **विदूरत्वाच्चेति** ॥ इदं भाष्यं सूत्रस्थपदार्थप्रतिपादनपरमतो नान्यत्रान्वयः । ननु संसारिणां तादृशशक्त्यभावेऽपि मुक्तानां तत्सम्भवः ? तथा चोक्तानुमानस्यामुक्तत्वमुपाधिरित्यत आहुः- **वाराहे चेति** ॥ अयमर्थ उक्त इति शेषः । **'स्वाधिकेति** ॥ तथाचोक्तोपाधिः प्रमाणेन निश्चितसाध्यवति पक्षे नास्तीति साध्यव्यापक इति भावः ॥ १८ ॥

मुक्तस्य जगदैश्वर्य(भाव)माक्षिप्य समाधानार्थं सूत्रम्-

**॥ ॐ प्रत्यक्षोपदेशादिति चेन्नाधिकारिकमण्डलस्थोक्तेः ॐ ॥ १९ ॥**

---

१. **स्वाधिकेति** ॥ स्वाधिकानन्दसम्प्राप्तौ स्वयोग्याधिकानन्दसम्प्राप्तिविषये स्वापेक्षयाऽधिका उत्तमाः तेषामानन्दसम्प्राप्तिविषये वा व्यापृतिषु व्यापारेषु अन्यान् उक्तान्यान् स्वयोग्यान् क्वापि पुरुषे 'न चायोग्यम्' इति निगमनम्, इत्यर्थः । शिष्टं स्पष्टम् ॥ १८ ॥

अधिकारे नियुक्ता आधिकारिकाः 'तत्र नियुक्ते' इति ठञ्। तेषां मण्डले नियामकतया तिष्ठतीति आधिकारिकमण्डलस्थः । मुक्तो जगद्व्यापारे श्रुताविति वर्तते । यथायथमावृत्तिविपरिणामौ । अयमर्थः- मुक्तानां जगद्व्यापारोऽस्ति श्रुतौ 'ता यो वेद' इति श्रुतौ मुक्ते जगद्व्यापारस्य तत्प्रयोजक-सर्वदेवपूज्यत्वस्य प्रत्यक्षोपदेशात् साक्षात्प्रतिपादनात् **इति चेन्न- श्रुतौ** उक्तश्रुतौ **आधिकारिक-मण्डलस्थोक्तेः** मुक्तदेवादिषु नियामकत्वेन स्थितमुक्तचतुर्मुखस्यैव तत्प्रतिपादनादिति ॥ सूत्रे चतुर्मुखोक्तेरितिवक्तव्ये आधिकारिकमण्डलस्थोक्तेरित्युक्त्या चतुर्मुखेतरदेवानामप्याधिकारिकाणां स्वावरमुक्तनियामकत्वमस्तीति द्योतितम् ।

**'ता यो वेद, स वेद ब्रह्म, सर्वेऽस्मै देवा बलिमावहन्ति' (तै.१.५) इति प्रत्यक्षोपदेशाज्जगदैश्वर्यमप्यस्तीति चेन्न । आधिकारिकमण्डलाधिपतिर्ब्रह्मा हि तत्रोच्यते ।**

**गारुडे च–**

**'आत्मेत्येव परं देवमुपास्य हरिमव्ययम् ।**
**केचिदत्रैव मुच्यन्ते नोत्क्रामन्ति कदाचन ॥**
**अत्रैव च स्थितिस्तेषामन्तरिक्षे तु केचन ।**
**केचित् स्वर्गे महर्लोके जने तपसि चापरे ॥**
**केचित्सत्ये महाज्ञाना गच्छन्ति क्षीरसागरम् ।'**

**'तत्रापि क्रमयोगेन ज्ञानाधिक्यात्समीपगाः ॥**
**सालोक्यं च सरूपत्वं सामीप्यं योग(एव)मेव च ।**
**इमामारभ्य सर्वत्र यावत्सु क्षीरसागरे ॥**
**पुरुषोऽनन्तशयनः श्रीमान्नारायणाभिधः ।'**

**'मानुषा वर्णभेदेन तथैवाऽश्रमभेदतः ॥**
**क्षितिपा मनुष्यगन्धर्वा देवाश्च पितरश्चिराः ।**
**आजानजाः कर्मजाश्च तात्त्विकाश्च शचीपतिः ॥**

**रुद्रो ब्रह्मेति क्रमशस्तेषु चैवोत्तमोत्तमाः ।**
**नित्यानन्दे च भोगे च ज्ञानैश्वर्यगुणेषु च ।**
**सर्वे शतगुणोद्रिक्ताः पूर्वस्मादुत्तरोत्तरम् ॥**
**पूज्यन्ते चावरैस्ते तु सर्वपूज्यश्चतुर्मुखः ।**
**स्वजगद्व्यापृतिस्तेषां पूर्ववत्समुदीरिता ॥**
**सयुजः परमात्मानं प्रविश्य च बहिर्गताः ।**
**चिद्रूपान् प्राकृतांश्चापि विना भोगांस्तु कांश्चन ।**
**भुञ्जते मुक्तिरेवं ते विस्पष्टं समुदाहृता ॥' इति ॥**

भा.॥ पूर्वपक्षे श्रुतिमाहुः- **'ता य इति ॥ जगदैश्वर्यमिति** ॥ मुक्तानामिति शेषः । **हि तत्रेति** ॥

---

१. **ता य इति** ॥ (तै.१-१४) 'ता वा एताश्चतस्रश्चतुर्धा । चतस्रश्चतस्रो व्याहृतयः' इति वाक्यशेषः । अयमर्थः- ताः भूर्भुवःसुवरित्यत्र निर्दिष्टाः एताः 'भूरिति वा अयं लोकः' इत्यादिना लोकज्योतिर्वेदप्राणेषु प्रत्येकं चतुरात्मकस्थानेषु उक्ताः चतस्रो व्याहृतयः 'भूर्भुवःसुवर्मह इति व्याहृतिचतुष्टयवाच्याः अनिरुद्ध-प्रद्युम्न-सङ्कर्षण-वासुदेवाख्याः मूर्तयः ताश्च प्रत्येकं चतुर्धा अनिरुद्धानिरुद्ध-प्रद्युम्नानिरुद्ध-सङ्कर्षणानिरुद्ध-वासुदेवानिरुद्धादिभेदेन चतुर्धा भवन्ति । ततश्च चतस्रश्चतस्रः षोडशसङ्ख्याकाः व्याहृतयो निष्पन्नाः, ताः षोडशमूर्तीः यो वेद स एव ब्रह्म वेद अस्मै षोडशात्मविदे चतुर्मुखाय मुक्ताय सर्वे देवाः मुक्तदेवाः बलिं पूजामाहरन्ति कुर्वन्तीत्यर्थः । **आत्मेत्येवेति** ॥ केचिदेकगुणोपासनायोग्याः अत्यल्पा मानुषाः अव्ययं परं देवं हरिम् आत्मेत्येव आत्मत्वरूपैकगुणेनैवोपास्य अथ दृष्ट्वा प्रारब्धं कर्म भोगेन क्षपयित्वा च अत्रैव भूम्यादावेव मुच्यन्ते देहबन्धाद्विमुक्ता भवन्ति स्वरूपानन्दं चानुभवन्ति, ते कदापि नोत्क्रामन्ति ब्रह्मनाड्या नाड्यन्तरेण वा उत्क्रमणं न प्राप्नुवन्ति किन्तु देहनाशपर्यन्तं देह एव स्थित्वा अथ मुक्तिं गच्छन्तीति यावत् । अत्रैव स्थितिः भूम्यादावेव वासोऽपि तेषामत्रैव मुक्तानाम् ।

न चैकगुणोपासनेन मुक्त्यङ्गीकारे 'आनन्दादयः प्रधानस्य'(३.३.१२) इति चतुर्गुणोपासनापरसूत्रविरोध इति वाच्यम् । तादृशोपासनस्य कर्मक्षयोत्क्रान्तिमार्गभोगरूपसम्पूर्णमोक्षाङ्गत्वेन प्रकृते उत्क्रान्तिमार्गयोरभावेन तद्विरोधाभावात् । न चैवमपि 'तदोकोऽग्रज्वलनम्' (४.२.१७) इति सूत्रविरोधः, तत्र मुक्तिं प्रति अङ्गत्वेनोत्क्रमणस्योक्तत्वादिति वाच्यम् । तस्यानेकगुणोपासकमुक्तिविषयत्वात् । न चैवमपि 'यावच्छ्रुतं न गच्छति योगी तावन्न मुक्तः स्यात्' इति वचनविरोधः । मुक्तत्वेऽप्यत्रैव स्थित्यङ्गीकारादिति वाच्यम् ।

सकृच्छ्वेतद्वीपगमनाङ्गीकारात् । सकृत् श्वेतद्वीपं गत्वा तत्र वासुदेवं दृष्ट्वा तदनुज्ञया ततो निवृत्य भूमावागत्य वसतीत्यङ्गीकारादिति यावत् । न चैवं 'महाज्ञानाः क्षीरसागरम्' इति वक्ष्यमाणविरोधः बहुकालापरोक्षवतामेव क्षीरसागरान्तःस्थित श्वेतद्वीपगमनाङ्गीकारादिति वाच्यम् । तत्र स्थितावेव महाज्ञानस्य कारणत्वाङ्गीकारात् न तु सकृद्गतावपि ।

केचन पूर्वोक्ताधिकार्यपेक्षया एकगुणोपासकेष्वेवोत्तमाः मनुष्याः अन्तरिक्षे लोके मुच्यन्ते नोत्क्रामन्ति तेषां तत्रैव स्थितिः, केचिदेकगुणोपासकाः पूर्वापेक्षयोत्तमा मनुष्याः स्वर्गे लोके मुच्यन्ते तेषां तत्रैव स्थितिः, केचित् पूर्वोक्तत्रिविधमनुष्योत्तमापेक्षयाऽधिकाः महर्लोके मुच्यन्ते तेषां तत्रैव स्थितिः, अपरे पूर्वोक्तादुत्तमाः जने लोके मुच्यन्ते तेषां तत्रैव स्थितिः, अपरे तदपेक्षयोत्तमाः तपसि लोके मुच्यन्ते तेषां तत्रैव स्थितिः, केचित् तदपेक्षयाऽधिकाः सत्ये लोके मुच्यन्ते तेषां तत्रैव स्थितिः, महाज्ञानाः बहुकालं ब्रह्मदर्शिनः अप्रतीकालम्बनाख्याः अनेकगुणोपासकास्तु क्षीरसागरं तत्रस्थश्वेतद्वीपं गच्छन्ति तत्र तिष्ठन्ति च । तत्रापि श्वेतद्वीपेऽपि महाज्ञानिष्वपि क्रमयोगेन तारतम्यरूपोपायेन ज्ञानाधिक्यात्समीपगा भवन्ति । भूम्यादिस्थितानां मुक्तानां चातुर्विध्यं दर्शयति- **सालोक्यमिति ॥ यावत्सु क्षीरसागर इति ॥** इमां भूमिमारभ्य क्षीरसागरोपलक्षितश्वेतद्वीपपर्यन्तेषु लोकेषु उक्तेषु यावत्सु स्थानेषु श्रीमान् नारायणाभिधः अनन्तशयनः पुरुषोऽस्ति तावत्सु सर्वत्रोक्तस्थानेषु सालोक्ये भगवत्समानलोकत्वं सरूपत्वं चतुर्भुजत्वादिभगवत्समानरूपवत्त्वम् । सामीप्यं समीपवृत्तित्वं योगः सायुज्यं च भवत्येव । केचित्तु सुक्षीरसागर इति पदं विभज्य यावत्कालं शोभने क्षीरसागरे नारायणाऽभिधोऽस्ति तावदिमामारभ्येत्याद्यर्थं वर्णयन्ति । **सायुज्य-सामीप्य-सारूप्याणि भूम्यादावेव मुच्यमानानां न सन्ति किन्तु यदा चतुर्मुखाद्या भूम्यादावागच्छन्ति तदा तेषामेव तन्मुक्तिसम्भव इति तत्त्वम्** । ननु मानुषाणां सर्वेषां समत्वात् भूम्यादिस्वर्गपर्यन्तस्थानत्रयम्, अन्येषां स्थानान्तरं कथं तारतम्येनोक्तमत आह- **मानुषा इति ॥** वर्णभेदेन ब्राह्मणादिवर्णभेदेन आश्रमभेदतश्च ब्रह्मचर्याद्याश्रमभेदतश्च मुक्तौ सन्तीति शेषः । क्षितिपाश्चक्रवर्तिनः, देवाः देवगन्धर्वाः, चिराः पितरः इति समानाधिकरणम् । आजानजाः, अनाख्यातदेवाः, कर्मजाः कर्मणा देवत्वं प्राप्ताः बल्याद्याः, कार्तवीर्यार्जुनाद्याश्च, तत्वाभिमानिनो बृहस्पत्यादयो देवाः, शचीपतिरिन्द्रः, रुद्रः शेषः, ब्रह्मा हिरण्यगर्भः, इत्येते सन्ति । तेषु चोक्ताधिकारिष्वपि उत्तरोत्तराः उत्तरोत्तरं निर्दिष्टाः पूर्वस्मात् पूर्वपूर्वं निर्दिष्टात् क्रमशस्तारतम्येन अधिकाः सन्ति । ते च सर्वे उत्तरोत्तरं निर्दिष्टाः, नित्यानन्दे भोगे ज्ञानैश्वर्यादिगुणेषु च पूर्वस्मात् पूर्वं पूर्वं निर्दिष्टात् शतगुणोद्रिक्ताः बहुगणनाविशिष्टोद्रेकवन्तः सन्ति, ते तु अवरैः स्वाधमैः पूज्यन्ते च । चतुर्मुखः सर्वपूज्यः वाण्यादिभिः सर्वैर्मुक्तैः पूज्यः । तेषां मुक्तानां स्वजगद्व्यापृतिः प्रतिबिम्बभूतमुक्तेषु नियमनादिश्च पूर्ववत् संसारावस्थायामिव समुदीरिता व्यापारश्च बहिस्थत्वानियमनम् । अन्तःप्रवेशेन नियमनं तु मुख्यप्राणस्यैवेति ज्ञेयम् । सयुजः परमात्मना विलक्षणसंयोगरूपसायुज्यमुक्तिभाजः, ते ब्रह्मादयः परमात्मानं प्रविश्य कदाचित् बहिर्गताश्च सन्तः कांश्चन स्वायोग्यान् भोगान्विना चिद्रूपान् स्वस्वरूपभूतानन्दादीन् प्राकृतांश्च शुद्धसत्त्वात्मकान् भुञ्जते इत्येवं मुक्तिः मुक्तिस्वरूपं ते तुभ्यं विस्पष्टं समुदाहृता उपदिष्टेत्यर्थः । नारदं प्रति ब्रह्मवाक्यमेतत् ॥ १९ ॥

हि यतः तत्र उक्तश्रुतौ ब्रह्मा चतुर्मुख उच्यते अतो नेत्यन्वयः । मुक्तसर्वदेवानां स्वावर-मुक्तनियामकत्वं मुक्तहिरण्यगर्भस्य तु सर्वमुक्तनियामकत्वमित्यत्र स्पष्टप्रमाणमाहुः- **गारुडे चेति** ॥ मुक्तचतुर्मुखादेः स्वावरमुक्तनियाकत्वादिकमुक्तमिति शेषः । पुराणवचनान्याहुः- **आत्मेत्येवेति** ॥ १९ ॥

**ननु मुक्तानां स्वावरमुक्तजगन्नियमनमेव कुतः अमुक्तविषयेऽपि किं न स्यादिति शङ्कापरिहाराय सूत्रम्-**

**॥ ॐ विकारावर्ति च तथा हि दर्शयति ॐ । २० ॥**

**चेन** नेत्यनुकृष्यते । विकारं संसारमावर्तयति विषयीकरोतीति विकारावर्ति सांसारिकजगद्व्यापारः । मुक्तः, श्रुतिः, आधिकारिकेति वर्तते यथायथं विपरिणामः । अयमर्थः- मुक्तानामाधिकारिकाणां ब्रह्मादिदेवानां **विकारावर्ति** सांसारिकजगद्व्यापारः तन्नियमनादिः नास्ति **हि** यतः श्रुतिः 'इमं मानवमावर्तम्' इति श्रुतिः **तथा** उक्तप्रकारेण **दर्शयति** अत इति ॥

**विकारावर्ति व्यापारो मुक्तानां न विद्यते ।**

**'इमं मानवमावर्तं नाऽवर्तन्ते' (छा.४.१५.६) इति हि श्रुतिः ॥**

**वाराहे च–**

**'स्वाधिकारेण वर्तन्ते देवा मुक्तावपि स्फुटम् ।**
**बलिं हरन्ति मुक्ताय विरिञ्चाय (च) पूर्ववत् ॥**

**सब्रह्मकास्तु ते देवा विष्णवे च विशेषतः ।**
**न विकाराधिकारस्तु मुक्तानामन्य एव तु ।**
**विकाराधिकृता ज्ञेया ये नियुक्तास्तु विष्णुना ॥' इति ॥ २० ॥**

॥ इति सर्वकामाधिकरणम् ॥ ९ ॥

**भा.** ॥ सूत्रार्थमाहुः- **विकारेति** ॥ अत्र श्रुतिमाहुः- [1]**इमं मानवमिति** ॥ ननु मुक्तदेवानाममुक्तनियमाद्यभावे संसारस्यावस्थितिरेव न स्यात्प्रवर्तकान्तराभावादित्यत आहुः- **वाराहे च** - [2]**स्वाधिकारेणेति** ॥ **इतीति** ॥ यतः श्रुतिरस्ति अतः, वाराहे इत्युक्तेश्च न विद्यत इति सम्बन्धः ॥ २० ॥ अ.९ ॥

**॥ इति जगद्व्यापाराधिकरणम् ॥ ९ ॥**

१. **इममिति** ॥ (छा.४.१५.६) एतेन ब्रह्मपथेन प्रतिपद्यमानाः इमं मानवमावर्तं संसारं नावर्तन्ते संसारविषयकावृत्तिशून्या भवन्तीत्यर्थः । मानवा मनुष्या आवर्तन्तेऽस्मिन्निति विग्रहेऽधिकरणे घञ् । मानवशब्दस्य मुमागमः छान्दसः । केचित्तु आवर्तमित्यधिकरणे घञ् । मानवस्यावर्तमिति विग्रहः । षष्ठ्यर्थे द्वितीया तस्या अलुक्छान्दस इति वदन्ति । **पण्डिताचार्यास्तु** मानवं मानवसम्बन्धिं आवर्तमावृत्त्यधिकरणं संसारमित्याहुः ॥

२. **स्वाधिकारेणेति** ॥ स्वाधिकारेण स्वस्वयोग्याधिपत्येन स्वस्वयोग्यतानुसारेण वा स्फुटं प्रत्यक्षं न तु रहस्यतया बलिं हरन्ति करं पूजां वा प्रयच्छन्ति कुर्वन्ति वा पूर्ववत् संसारे इव विशेषतः आधिक्येन बलिं हरन्ति । विकाराधिकारः संसारप्रवर्तकत्वम् । अन्ये मुक्तेभ्योऽन्ये ये विष्णुना नियुक्ताः त एव विकाराधिकृताः संसारे नियमनाधिकारिणो ज्ञेया इत्यर्थः । शिष्टं स्पष्टम् ॥ २० ॥ अ.९ ॥

## १०. स्थित्यधिकरणम्

**(मौक्तानन्दे प्रायः वृद्धिह्रासौ न स्तः । भगवदुपासना तु सुखरूपिणी न साधनभूता)**

अत्र नये मुक्तानां भोगादिना वृद्धिह्रासनिराकरणम् । अन्यथा मुक्तेः संसारसाम्यापत्त्या पुरुषार्थत्वाभावेन पूर्वोक्तं सर्वं व्यर्थमिति (यथायोग्यं प्राचीननयैः) सङ्गतिः । मुक्तो विषयः । वृद्धिह्रासवान्न वेति संशयः । लोकदृष्टिः अलौकिकत्वं च तद्बीजम् । वृद्धिह्रासवानिति पूर्वपक्षः ॥

**॥ ॐ स्थितिमाह दर्शयतश्चैवं प्रत्यक्षानुमाने ॐ ॥ २१ ॥**

मुक्तः श्रुतिरिति वर्तते । चो हेतौ, एवार्थे च । यथायथमावृत्तिविपरिणामौ ॥ अयमर्थः - **च** यतः **श्रुतिः** 'स एष एतस्मिन्' इति श्रुतिः मुक्तानां **स्थितिम्** एकप्रकारेणावस्थानम् **आह प्रत्यक्षानुमाने** च महतां प्रत्यक्षं कारणाभावरूपानुमानं च **एवं** श्रुत्युक्तप्रकारेण **दर्शयतः** अतो मुक्तानां स्थितिश्च साम्येनावस्थानमेव नाऽनन्दादिना वृद्धिह्रासौ इति ।

**'एतत्साम गायन्नास्ते (तै.३.२०) इत्युच्यते । तत्राऽनन्दादीनां वृद्धिर्ह्रासश्च न विद्यते । किन्त्वेकप्रकारेणैव सर्वदा स्थितिः । 'स एष एतस्मिन् ब्रह्मणि सम्पन्नो न जायते न म्रियते न हीयते न वर्धते स्थित एव सर्वदा भवति दर्शन्नेव ब्रह्म दर्शन्नेवाऽत्मानं तस्यैवं दर्श(य)तो नाऽपत्तिर्न विपत्तिः' इत्याह जाबालश्रुतौ ॥**

**'यत्र गत्वा न म्रियते यत्र गत्वा न जायते ।**
**न हीयते यत्र गत्वा यत्र गत्वा न वर्धते ॥' इति मोक्षधर्मे ॥**

**विद्वत्प्रत्यक्षात् कारणाभावलिङ्गाच्च ।**

**ब्रह्मवैवर्ते च—**

**'न ह्रासो न च वृद्धिर्वा मुक्तानां विद्यते क्वचित् ।**
**विद्वत्प्रत्यक्षसिद्धत्वात्कारणाभावतोऽनुमा ॥**
**हरेरुपासना चात्र सदैव सुखरूपिणी ।**
**न तु साधनभूता सा सिद्धिरेवात्र सा यतः ॥' इति ॥ २१ ॥**

**भा.** ॥ पूर्वपक्षीयश्रुतिमाहुः- **[1]एतदिति** ॥ यद्यपीति शेषः । तत्रेत्यावर्तते । यद्यपि तत्र मुक्तौ इति सामोपासनमुच्यत इत्यर्थः । साधनानुरोधेन फले वृद्ध्यादिकं स्यादिति (पूर्वपक्षिणो) भावः । **तत्र** तथापि तत्र मुक्तावित्यर्थः । आहेति पदसूचितश्रुतिमाहुः- **[2]स एष इति** ॥ **आहेति** ॥ वेदपुरुष इति भावः । अत्र स्मृतिं चाहुः- **[3]यत्रेति** ॥ **कारणाऽभावरूपलिङ्गाच्चेति** ॥ 'मुक्तो वृद्धिह्रासशून्यः तत्कारणाभावात्' इति अनुमानप्रयोगः । ननु महतां प्रत्यक्षमस्माकं मानं कथं भवेत् तत्प्रत्यक्षस्यास्मदविदितत्वादत आहुः- **[4]न ह्रास इति** ॥ **इतीति** ॥ उक्तादिति शेषः । च यत इत्याह अतः, मोक्षधर्मे इत्युक्तेश्च, ब्रह्मवैवर्ते उक्तात् विद्वत्प्रत्यक्षाल्लिङ्गाच्च न विद्यत इति सम्बन्धः ॥ २१ ॥

**कारणाभावरूपलिङ्गमाक्षिपन्ति- न च भोगेति ॥ कारणाभावेऽङ्गीकृते इति शेषः । भोगविशेषादिबोधकश्रुतिविरोध इत्यर्थः । प्रमाणसिद्धभोगविशेषान्यथानुपपत्त्या वृद्धिह्रासौ कल्प्याविति न च वाच्यमिति भावः ।**

## ॥ ॐ भोगमात्रसाम्यलिङ्गाच्च ॐ ॥ २२ ॥

**भोगाः स्त्रिया सह रमणादयः । यावन्तो भोगा भोगमात्रम् । इदमुपलक्षणं तदभावस्यापि । साम्यमानन्दादिवृद्धिह्रासराहित्येन स्थितिः भोगमात्रे साम्यमिति विग्रहः । मुक्तानां स्थितिश्चेति वर्तते ।**

---

१. **एतत्सामेति** ॥ व्या. (पृ. १२२) ॥

२. **स एष इति** ॥ य एतस्मिन् मोक्षे ब्रह्मणि सम्पन्नः तत् प्राप्तः स एष मुक्तः यद्वा एतस्मिन् ब्रह्मणि सम्पन्नः स प्रसिद्धः एष मुक्तः हीयते क्षीयते सदा स्थित एव एकरूपेणैव स्थितो भवति यद्यपि ब्रह्म दर्शन्नेव ईश्वरमुत्कृष्टत्वेनोपासीन एवास्ते, तथापि एवं दर्शयतोऽपि उपासीनस्यापि तस्य मुक्तस्य आपत्तिर्वृद्धिः विपत्तिर्ह्रासश्च नेत्यर्थः । शिष्टं स्पष्टम् ।

३. **यत्र गत्वेति** ॥ स्पष्टम् । यच्छब्दस्य स मोक्ष इत्युत्तरत्रान्वयो मोक्षधर्मे ।

४. **न ह्रास इति** ॥ मुक्तानां मुक्तगुणानां कचित्कालेऽपि विद्वत्प्रत्यक्षसिद्धत्वात् वृद्ध्याद्यभावस्येति शेषः । कारणाभावतोऽनुमा प्रथमान्तात्तसिः, कारणाभावरूपानुमानं चोक्तविषये मानमस्ति । ननु मुक्तावपि उपासनारूपकारणसत्त्वात् वृद्धिह्रासौ कुतो न भवत इत्यत आह- **हरेरिति** ॥ अत्र मोक्षे सदा सार्वकालिकी हरेरुपासना च हरिकर्मकोपासना तु यतः सदैव सुखरूपिणी अतः सोपासनासिद्धिरेव फलभूतैव । अतः सोपासना अत्र वृद्धिह्रासविषये साधनभूता न भवतीत्यर्थः । यद्वा हरेरुपासना अत्र यतः सा भयरहिता अतः सुखरूपिणीत्यर्थः । शेषं पूर्ववत् ॥ २१ ॥

श्रुतिरित्यनुवर्त्य सप्तम्या विपरिणम्यते । अयमर्थः- मुक्तानां स्थितिश्च एकरूपेणावस्थानमेव नत्वानन्दादिना वृद्धिह्रासौ श्रुतौ 'एतमानन्दमयम्' इति श्रुतौ **भोगमात्रसाम्यलिङ्गाच्च** भोगविशेष-तदभावयोः सतोरपि वृद्धिह्रासाभावरूपं यत्साम्यं तद्रूपलिङ्गश्रवणाच्चेति । अयं भावः- यदि भोगविशेष आनन्दादिवृद्ध्यादौ कारणं स्यात् तर्हि भोगोपरमे ह्रासः स्यादेव ह्रासाभावश्च श्रूयते, अतो भोग-तदभावौ आनन्दादिवृद्धिह्रासौ प्रति न कारणमिति कल्प्यम् । एवं च भोगो नाऽनन्दादिकारणं किन्त्वानन्दादिकार्यम्, इत्थं च 'मुक्तो वृद्धिह्रासवान्न भवति तत्कारणशून्यत्वात्' इत्यनुमानं सिद्ध-मिति ॥ इदं बोध्यम्- इदं च सूत्रमेकैकस्य मुक्तस्याऽनन्दे वृद्धिह्रासाभावप्रतिपादनाय प्रवृत्तं न तु मुक्तानामानन्दे परस्परं ईश्वरानन्दे च वैलक्षण्याभावप्रतिपादनाय, तथा च सर्वमुक्तानां मुक्तावानन्द-साम्यबोधकमिदं सूत्रमिति वक्तुं न शक्यते इति ।

**'न च भोगविशेषादिविरोधः। 'एतमानन्दमयमात्मानमनुविश्य न जायते न म्रियते न ह्रसते न वर्धते यथाकामं चरति यथाकामं पिबति यथाकामं रमते यथाकाममुपरमते' (तै.२.८) इति भोगमात्रसाम्यलिङ्गात् ।**

**'अवृद्धिह्रासरूपत्वं मुक्तानां प्रायिकं भवेत् ।**
**कादाचित्कविशेषस्तु नैव तेषां निषिध्यते ॥' इति च कौर्मे ॥**

**'प्रवाहतस्तु वृद्धिर्वा ह्रासो वा नैव कुत्रचित् ।**
**नाप्रियं किञ्चिदपि तु मुक्तानां विद्यते क्वचित् ॥**

**कुत एव तु दुःखं स्यात्सुखमेव सदोदितम् ।**
**भोगानां तु विशेषे (षु) तु वैचित्र्यं लभ्यते क्वचित् ॥'**
**इति च नारायणतन्त्रे ॥ २२ ॥**

॥ इत्येकरूपस्थित्यधिकरणम् ॥ १० ॥

भा. ॥ हेतौ श्रुतिमाहुः - **'एतमानन्दमयमिति ॥ इतीति ॥** इत्यत्र लिङ्गात्- लिङ्गश्रवणाच्च-

---

१. **एतमिति ॥** सायुज्यमुक्तिमान् आनन्दमयं पूर्णानन्दं चरति भक्षयति उपरमते सर्वभोगेभ्यो निवर्तते इत्यर्थः । शिष्टं स्पष्टम् ।

त्यर्थः । ननु भोगस्य वृद्ध्यहेतुत्वेऽपि भोगो व्यर्थो न क्रीडार्थत्वादिति स्थिते विशेषं चाहुः- [1]**अवृद्धीति ॥ इति च कौर्म इति ॥** चो विशेषे कौर्मे विशेष उक्त इत्यर्थः । अत्र स्मृत्यन्तरं चाहुः- [2]**प्रवाहत इति ॥ तन्त्र इति ॥** च इत्यनुवर्त्य विशेष उक्त इति व्याख्येयम् ॥ २२ ॥ अ.१. ॥

॥ **इत्येकरूपस्थित्यधिकरणम्** ॥ १० ॥

---

१. **अवृद्धीति ॥** अवृद्धिह्रासभाक्त्वं वृद्धिह्रासरहितज्ञानादिमत्त्वं मुक्तानाम् । विरिञ्चेतरमुक्तानां प्रायिकं बहुकालवृत्ति भवेत्, प्रायिकमित्यस्य व्यावर्त्यमाह-**कादाचित्केति ॥** विशेषो वृद्ध्यादिरित्यर्थः । शिष्टं स्पष्टम् ।

२. **प्रवाहत इति ॥** मुक्तानां मुक्तगुणादीनां प्रवाहतः सामग्र्येण कुत्रचित् कदाचिदपि क्वचित् गुणोऽपि वृद्धिर्वा ह्रासो वा नैवास्ति सर्वथा न भवति क्वचिदपि काले मुक्तानां किञ्चिदप्यप्रियं न विद्यते कुत एव दुःखं स्यात् । किन्तु सदोदितं सर्वदाभिव्यक्तं सुखमेव स्यात् भोगानां तु विशेषेषु सत्सु सुखे आनन्दे वैचित्र्यं विशेषो लभ्यते सिद्ध्यति क्वचित्काले इत्यर्थः । न चैवं भोगविशेषरूपकारणात् वैचित्र्यमङ्गीकृतमेवेति वाच्यम् । बहुतर-वैचित्र्याभावस्यैव पूर्वं प्रसक्तत्वेन तत्र कारणं नास्तीत्युक्तं न त्वल्पवैचित्र्याभावे इत्यदोषात् ॥ २२ ॥

## ११. अनावृत्त्यधिकरणम्

### (पुनरावृत्तिरहितो मुक्तः)

अत्र नये ब्रह्मप्राप्यभोगान् भुञ्जानानां मुक्तानामपुनरावृत्तिसमर्थनम् । अन्यथा संसारतुल्यत्वेत्यादिः पूर्व(नय)वत् सङ्गतिः । मुक्तो विषयः । तस्य पुनरावृत्तिरस्ति न वेति संशयः । उभयथापि सम्भवः तद्बीजम् । अस्तीति पूर्वपक्षः ॥

**॥ ॐ अनावृत्तिः शब्दादनावृत्तिः शब्दात् ॐ ॥ २३ ॥**

मुक्तानामिति वर्तते । अयमर्थः- मुक्तानाम् **अनावृत्तिः** संसारे आवृत्तिः भ्रमणं नास्ति **शब्दात्** 'न च पुनरावर्तते' इति श्रुतेः 'सर्वान् कामानाप्त्वा अमृतः समभवत्' इति श्रुतेश्चेति ॥ सर्वशास्त्रार्थाऽवधारणार्था विशिष्टवाक्यस्य द्विरुक्तिः ।

**'न च पुनरावर्तते न च पुनरावर्तते' (छा.८.१५.२), 'सर्वान् कामानाप्त्वाऽमृतः समभवत्' (ए.आ.२.५.९.१५) इत्यादिश्रुतिभ्यः ॥ २३ ॥**

॥ इत्यनावृत्त्यधिकरणम् ॥

भा.॥ सूत्रार्थस्य स्पष्टत्वात् शब्दादित्युपात्तश्रुतीरेवाहुः- **'न च पुनरित्यादि ॥ श्रुतिभ्य इति ॥** अस्य भाष्यस्य शब्दादिति (सौत्र)पदस्यार्थविवरणपरत्वेन नान्यत्रान्वयापेक्षा । आदिना 'यो वा एतामुपनिषदं वेदापहत्य पाप्मानमनन्ते' (त.४.९) इत्यादेर्ग्रहणम् । ततश्च निखिलजगज्जन्मादिकर्ता भगवान् नारायण एव कैवल्यरूपमहापुरुषार्थसाधनीभूतभगवत्प्रसादप्रयोजकभगवत्साक्षात्कार-सम्पादनाय वैराग्यादिमता अनन्यचेतसा उपास्यः (जिज्ञास्यः) इति सिद्धम् ॥ २३ ॥ अ.११॥

॥ इत्यनावृत्त्यधिकरणम् ॥ ११ ॥

**ज्ञानानन्दादिभिः सर्वैर्गुणैः पूर्णाय विष्णवे ।**
**नमोऽस्तु गुरवे नित्यं सर्वथाऽतिप्रियाय मे ॥**

---

१. **न च पुनरिति** ॥ (छा.८.१५.१) ब्रह्मलोकमभिसम्पन्नः पुनर्नावर्तते संसारं नाप्नोतीत्यर्थः । **सर्वानिति** ॥ व्या. (पृ. ३१३) ॥ २३ ॥ अ.११ ॥

**यस्य त्रीण्युदितानि वेदवचने रूपाणि दिव्यान्यलं**
**बट् तद्दर्शतमित्थमेव निहितं देवस्य भर्गो महत् ।**
**वायो रामवचोनयं प्रथमकं पृक्षो द्वितीयं वपुः**
**मध्वो यत्तु तृतीयकं कृतमिदं भाष्यं हरौ तेन हि ॥**

**नित्यानन्दो हरिः पूर्णो नित्यदा प्रीयतां मम ।**
**नमस्तस्मैनमस्तस्मैनमस्तस्मै च विष्णवे ॥**

**॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचिते श्रीमद्ब्रह्मसूत्रभाष्ये चतुर्थाध्यायस्य चतुर्थः पादः ॥ ४ ॥ ४ ॥**

**॥ इति श्रीमद्ब्रह्मसूत्रभाष्यं सम्पूर्णम् ॥**

**भा.॥** एवं समापितग्रन्था आचार्याः समस्तशास्त्रप्रतिपाद्यं परमात्मानं देवतात्वेन गुरुत्वेन च ग्रन्थान्तेऽपि प्रणमन्ति- **ज्ञानानन्दादिभिरिति** ॥ नित्यमित्यावर्तते । सर्वैर्गुणैर्नित्यं पूर्णाय, नित्यं गुरवे, नित्यमतिप्रियायेति सम्बध्यते । नमः शब्दस्य स्वरादित्वेन सत्त्वार्थकत्वात्सत्ता क्रियाकर्तृत्वम् ॥ १ ॥

अथ स्वकृतभाष्यस्य परमाप्तिमूलकत्वसमर्थनार्थं श्रुतिप्रसिद्धं स्वस्य परमाप्तत्वं दर्शयन्ति - **यस्येति** ॥ किञ्च मुमुक्षुभिराचार्यस्वरूपमपि अवश्यं ज्ञातव्यमिति भावेनाहुः ॥

**यस्येति** ॥ यस्य वायोर्वायुनामकस्य देवस्य वेदवचने 'बळित्था' इत्यादिवेदवचनेऽलं दिव्यानि क्रीडादिगुणयुक्तानि अत्यन्तप्रकाशवन्ति स्तुत्यानि देवसेव्यानि सर्वज्ञानि आनन्दमग्नानि च त्रीणि रूपाणि उदितानि, तस्य वायोः तत् मूलरूपं बट् बलात्मकं दर्शतं ज्ञानरूपं ज्ञानात्मकं तत एव भर्गः भरणगमनशीलं महत् महनीयं च इत्थमेव मूलरूपान्यूनगुणकमेव निहितं भगवता सतां कार्यार्थमवताराय प्रेरितम् अवतीर्णं च प्रथमकं प्रथमं वपुः हनुमदाख्यं रामवचोनयं रामवचांसि सीतां प्रति नीतवत् मूलरामायणवचनानि शिष्येषु नीतवद्वा रामवचोनिष्ठन्यायविद्वा । अत्र कल्पे बहुव्रीहिः। द्वितीयं वपुः भीमनामकं पृतनाक्षयकारित्वात् पृक्षः । यत् तृतीयकं वपुः मध्वनामकं आनन्दरूपस्य

हरेः प्रतिपादकशास्त्रकृत्त्वात् तेन मध्वनामकेन तृतीयरूपेण हरौ तद्विषये इदं भाष्यं कृतं हि प्रसिद्धमित्यर्थः । अत्र 'दर्शतं' 'बटू' इति आभ्यां विवक्षितार्थतत्वज्ञानकरणपाटवरूपवक्त्रानुकूल्यं 'निहितम्' इत्यनेन श्रोत्रानुकूल्यं प्रसङ्गानुकूल्यं च बोधितमिति ज्ञेयम् ॥ २ ॥

स्वमाहात्म्यवर्णनेन ग्रन्थो न समापनीय इति भावेन पुनर्नारायणस्तुतिनतिप्रार्थनारूपं मङ्गलम् आचरन्ति- **नित्यानन्द इति** ॥ नित्यदेतिनि पातः चादित्वात्, चादेराकृतिगणत्वस्य वैयाकरण-ग्रन्थेषूक्तेः । भगवता सर्वदा प्रीतिः कुतः कर्तव्येत्यत आहुः- **नम इति** ॥ त्रिः 'नमस्तस्मै' इत्युक्तिः सदा नमस्कारकरणस्य द्योतिका । भक्त्यभावे सदा नमस्कारकरणायोगात् भक्तिपूर्वकत्वं नमस्कारे लब्धम् । तथा च भक्तिपूर्वकं सदा नमस्कारकरणात्सर्वदा भगवत्प्रीतिर्भूयादेवेति भावः । **विष्णवे इति** ॥ विष्णुशब्दस्य विष्लृ- व्याप्तौ इति धातुनिष्पन्नत्वेन व्याप्तेः परिच्छेदत्रयशून्यत्वरूपत्वेन ब्रह्म-शब्दसमानार्थत्वात् 'ब्रह्मशब्दश्च विष्णावेव' इत्युक्तेश्च ब्रह्ममीमांसाशास्त्रान्ते विष्णवे नमस्कार उचित इति बोध्यम् । तथा चादावन्ते च चतुर्विधपुरुषार्थप्रदभगवद्वाचकनारायणविष्णुशब्दाभ्यां सम्पुटीकरणेन अस्य भाष्यस्य तद्वच्चतुर्विधपुरुषार्थप्रदत्वं विष्णुशब्देन कटपयादिसङ्ख्यया सूत्राणां सङ्ख्याचतुःषष्ठ्युत्तरपञ्चशतीति च सूचयन्त्याचार्याः श्रीमन्त (इति सिद्धम्)इत्यशेषमतिमङ्गलम् ॥३॥

बलित्थेत्यादिवेदवाक्यमपि व्याख्यायते -

**वेदवचनं तु-**

**'बळित्था तद्वपुषे धायि दर्शितं देवस्य भर्गः सहसो यतोऽजनि । यदीमुपह्वरते साधते मतिर्ऋतस्य धेना अनयन्त सस्रुतः । पृक्षो वपुः पितुमान्नित्य आशये द्वितीयमा सप्तशिवासु मातृषु । तृतीयमस्य वृषभस्य दोहसे दशप्रमतिं जनयन्त योषणः । निर्यदीं बुध्नान्महिषस्य वर्पस ईशानासः श्रवसाक्रन्त सूरयः । यदीमनुप्रदिवो मध्व आधवे गुहासन्तं मातरिश्वा मथायति । प्रयत्पितुः परमान्नीयते पर्या पृक्षुधो वीरुधो दंसु रोहति ॥ उभा यदस्य जनुषं यदिन्वत आदिद्यविष्ठोऽभवद्घृणा शुचिः । आदिन्मातॄराविशद्यास्वाशुचिरहिंस्यमान उर्विया विवावृधे । अनु यत्पूर्वा अरुहत्सनाजुवो निनव्यसीष्ववरासु धावते' इति ॥**

**अस्यार्थः-** यत् वायोर्मूलरूपं यतो नारायणात् अजनि जातं तेन नारायणेन सहसः बलरूपस्य

देवस्य क्रीडादिगुणयुक्तस्य वायोः तत् मूलरूपं बट् बलात्मकं दर्शितं ज्ञानपूर्णं भर्गः पोषणगमनकर्तृ इत्था वपुषे बलाद्युपेतावताराय धायि अधायि । यद्वा यतो वायुमूलरूपात् तत् अवतारत्रयम् अजनि जातं सहसः देवस्य तत् मूलरूपं बट् दर्शितं भर्गः इत्था वपुषे धायि । अथवा सहसो देवस्य वायोः तत् मूलरूपं बट् दर्शित भर्गः इत्था वपुषे वक्ष्यमाणगुणोपेतावतारत्रयाय धायि । यतोऽवतारत्रयात् भर्गः प्रकाशरूपं ब्रह्म अजनि अभिव्यक्तमभवत् । तत्र प्रथमावतारं निरूपयति- **यदिति** ॥ यत् प्रथमं रूपं तत् मतिः मतिमान् हनुमन्नामक इति यावत् । ऋतस्य ज्ञानरूपस्य रामस्य उपह्वरते समीपे वर्तते । ई इत्थमेव एक एवेति यावत् । ऋतस्य कार्याणीति शेषः । साधते साधयति । तल्लेशतो दर्शयति- **धेना इति** ॥ सस्रुतः अमृतस्राविणीः मोक्षदा इति यावत् । ऋतस्य धेनाः रामविषयका वाचः रामायणरूपाः अनयन्त शिष्यान् प्रतीति शेषः । अथवा रामोक्ताः सुखदा वाचः सीतां प्रति अनयन्त । यद्वा सस्रुतः धेनाः सीताया वाचः ऋतं रामं प्रति अनयन्त । द्वितीयमवतार-माह - **पृक्ष इति** ॥ पृक्षः कुरुपृतनाक्षयकारी पितुमान् बह्वन्नभोक्ता नित्यः प्रलयेऽपि अविप्लुतज्ञानः द्वितीयं वपुः वायोर्द्वितीयावतारो भीमः सप्त ऋगादिवेदचतुष्टयेतिहासपुराणपञ्चरात्रेति सप्तसङ्ख्याकासु शिवासु मङ्गलरूपासु मातृषु प्रमाणेषु आ समन्तात् सम्यक् शये सुप्तो अभवत्, यथा सुप्तोऽन्तर्ज्ञान एवासक्तः एवं तासु आसक्त इति भावः । तृतीयावतारमाह- **तृतीयमिति** ॥ योषणो योषाः मध्यगेहभार्याः पूज्यत्वाद्बहुवचनम् । दशप्रमतिं पूर्णप्रज्ञं तत्सञ्ज्ञकाचार्यावासयोग्यं वृषभस्य देव-श्रेष्ठस्यास्य वायोः तृतीयं वपुः शरीरभूतं रूपं दोहसे ज्ञानदोहनाय जनयन्त अजनयन्त । अथवा योषणः योषितां सप्त मातॄणां दोहसे ज्ञानप्रकटनायाऽजनयन्त । यद्वा योषणो विद्याभिमानिन्यः श्रीभूदुर्गाख्याः । तत्प्रयोजनमाह- **निरिति** ॥ सूरयो ज्ञानिनः ईशानासः रुद्राद्या मनुष्योत्तमपर्यन्ताः लोकेशाना वा महिषस्य पूज्यगुणस्य विष्णोः वर्पसः वर्णनीयत्वेन पेयान् तत्सञ्ज्ञकान् ज्ञानबलादि-गुणान् यत् यस्मात् बुध्नात् बोधरूपात् तृतीयावतारात् ज्ञानोपदेशे मूलाचार्यरूपात् ईम् एव यत् बुध्नात् यत्कर्तृकमूलप्रमाणभूतब्रह्मसूत्रभाष्याद्वा यत् बुध्नात् यदुपदेशप्रयुक्तमूलभूतनारायणप्रसादाद्वा यत् बुध्नात् यत्कृतवायुप्रसादाद्वा निः नितरां क्रन्त आक्रमितवन्तः ज्ञानवन्त इति यावत् । तृतीयावतारगुणान्तरमाह- **यदीमन्विति** ॥ मातरिश्वा वाय्ववतारभूतः प्रदिवः प्रकृष्टज्ञानवान् यत् यो मध्वः ई सुखकरशास्त्रकर्तृत्वात् तन्नामक आचार्य एव गुहासन्तं गूहितं परमात्मानम् आधवे आ समन्तात् पतित्वार्थमनु अनुकूलेन मथायति शास्त्रेण विचारयति । गुणान्तरमाह- **प्रयदिति** ॥ यत्

तृतीयं रूपं परमात्पितुः सर्वोत्तमेन पित्रा भगवतैव प्रनीयते प्रेर्यते यत् रूपं पृक्षुधः पद्यरूपा वीरुधः लताः दंसु दन्तेषु पर्यारोहति खण्डयन्ति वल्लीं यथा खण्डयन्ति तथा खण्डयन्तीति भावः । उभा उभौ लक्ष्मीनारायणौ अस्य वायोर्जनुषं जन्म अवतारमिति यावत् । यत् ज्ञानं प्रति इन्वतः प्रेरयतः ज्ञानार्थपक्षे यदिति इण् धातोः शतरि रूपम् । यत् यो मध्व आदित् आभ्यामेव यविष्टः अत्यन्तयुवाऽभवत् । घृणा विष्णुभक्तेषु दयावान् शुचिः गर्भवासादिदोषरहितश्चाभवत् । तं दशप्रमतिमजनयन्तेति पूर्वेण सम्बन्धः । वायोर्महिमान्तरमाह- **आदिति ॥** मातरिश्वेति वर्तते, मातरिश्वा वायुः आदित् नारायणादेव तत्प्रसादेनेति यावत्, मातॄः श्रीभूदुर्गाख्याः जया-शान्त्याद्याख्याः अञ्जनाद्याख्याश्च मातॄराविशत् तासामुदरेषु प्रविष्टवान् मातरिश्वा आदित् नारायणादेव यासु मातृषु आशुचि आ समन्तात् सम्यक् शुचिः सन् उर्विया उत्कृष्टशक्त्या अहिंस्यमानः विवावृधे विशेषेण ववृधे । मातरिश्वा सनाजुवः विष्णुसेवारताः यत्पूर्वाः यासु मातृषु पूर्वाः पूर्वपूर्वाः अनुक्रमेण श्रीभूप्रभृतिमातृषु अरुहत् जातः । नव्यसीषु नवीनासु अवरासु अञ्जनादिमातृषु निधावते व्युत्क्रमेण शीघ्रजननं प्राप्नोति । यद्वा आदित् मातॄः ऋगादिसप्तप्रमाणानि आविशत् विचारयामास । यासु मातृषु उरुविया उत्कृष्टज्ञानादिमच्छक्त्या अहिंस्यमानः अज्ञानादि-दोषैरस्पृष्टः । आशुचिर्यथावस्थितज्ञानादिमान् विवावृधे रुद्रादिभ्योऽधिकज्ञानवानभवत् । तत्प्रकार-माह- **अन्विति ॥** सनाजुवः सनातनविष्णुप्रतिपादिकाः यत् यासु मातृषु मध्ये पूर्वाः ऋगाद्याश्चतस्रः अनु उपक्रमाद्यनुकूलेन अरुहत् ज्ञातवान् । नव्यसीषु नवीनासु अवरासु वेदानन्तरभूतासु इतिहासपुराणपञ्चरात्रेषु नितरां धावते शीघ्रं जानातीति ॥

सज्ज्ञानानन्दवीर्यप्रमुखगुणयुजे दोषदूराय सम्यग्-
वैराग्याज्ज्ञातभक्तिश्रवणमननजध्यानयोगेन पुंसाम् ।
प्राप्यायानन्तभोगे सुखशयनमहो कुर्वते क्षीरवार्धौ
लक्ष्म्या संवाहितश्रीचरणनळिनयुग्वि(वद्वि)ष्णवेऽस्तु प्रणामः ॥ १ ॥

भारतीश नमस्तुभ्यं रामप्रिय नमोऽस्तु ते ।
नमस्ते द्रौपदीकान्त व्यासशिष्य नमोऽस्तु ते ॥ २ ॥

व्याख्यया सूत्रभाष्यस्य प्रीतो मध्वमुनिर्मम ।
निवारयन्नप्रकाशं सुप्रकाशं ददातु मे ॥ ३ ॥

श्रीमती मध्वसिद्धान्तोन्नाहिनी राजते सभा ।
धर्माधिकारिणा तस्यामार्याचार्यकुलोद्भवा ॥ ४ ॥
प्रत्यहं मध्वसिद्धान्ते विहारान्न यतो जनिम् ।
शिष्यक्षेत्रेषु सद्विद्याबीजावापैकदीक्षितात् ॥ ५ ॥
आजानसिद्धसच्छीलात्स्थानेन मम चाग्रजात् ।
श्रीमुष्णाचार्यवंशोत्थाद्रामण्णाचार्यवर्यतः ॥ ६ ॥
श्रीमत्समीरसमयप्रवक्तृत्वे धुरन्धरात् ।
श्रीकृष्णभक्तिवैराग्यभूषणेन विभूषितात् ॥ ७ ॥
विद्यादानेन शिष्येभ्योऽन्नादिदानेन सादरम् ।
नियतब्रह्मचर्येण त्रिलोक्यां ख्यातिमीयुषः ॥ ८ ॥
श्रीमन्न्यायसुधाद्येषु ग्रन्थेषु क्रीडतोऽनिशम् ।
सार्थविद्याधीशपदात्कृष्णापुरमुनेरपि ॥ ९ ॥
अधीतनिगमान्तेन तदेकपरचेतसा ।
महीशूरसभाद्यासु सभास्वार्जितकीर्तिना ॥ १० ॥
विद्यादानेन शिष्येभ्यः प्रतिष्ठापारगामिना ।
वैयाकरणवर्येण सुब्बरायाख्यधीमता ॥ ११ ॥
श्रीमद्भाष्यार्थसहितसूत्रार्थमणिमञ्जरी ।
कृतेयं सत्कृतिर्भूयात् प्रीत्यै माधवमध्वयोः ॥

**॥ इति श्रीमदार्याचार्यकुलावतंसेन श्रीमुष्णोपनामकेन सुब्बरायाचार्याभिधेन विद्वद्वरेण विरचितायां, श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितश्रीमद्ब्रह्मसूत्रभाष्यस्य व्याख्यायां भाष्यार्थसहितसूत्रार्थमणिमञ्जर्यभिधायां चतुर्थाध्यायस्य चतुर्थः पादः ॥**

**॥ चतुर्थाध्यायश्च समाप्तः ॥**

(चतुर्थाध्याये पाद-सूत्र-अधिकरणानि)

| पा. | सू. | अ. |
|---|---|---|
| १ | १९ | ०८ |
| २ | २२ | १० |
| ३ | १६ | ०६ |
| ४ | २३ | ११ |
| (४-पा) | ८० | ३५ |

## परिशिष्टम् - १

# एतद्ग्रन्थोदाहृतप्रमाणवचनानां वर्णानुक्रमसूचिका

| प्रमाणम् | पृ.सं. |
|---|---|

## अध्याय - १

### अ

## ओ + औ



## क

**र + ल**

| प्रमाणम् | पृ.सं. |
|---|---|

# एतद्ग्रन्थोदाहृतप्रमाणवचनानां वर्णानुक्रमसूचिका

| प्रमाणम् | पृ.सं. |
|---|---|

## अध्याय - २

### अ

| प्रमाणम् | पृ.सं. |
|---|---|
| अथेन्द्रियाणि प्राणा वा - (पौत्रायणश्रुतौ) | ५०८ |
| अथैक एव सन् - (शाण्डिल्यश्रुतिः) | ४५४ |
| अथैनमाहुः - (श्रुतिः) | ३४९ |
| अथैष एव परम आनन्दः -(बृ.उ.६.३.३३) | ३६७ |
| अद्भ्यः पृथिवी - (तै. २.१) | ४३२ |
| अद्भ्यः सम्भूतः - (तै.आ.३.१३) | ३४७ |
| अद्भ्यः सम्भूतः हिरण्यगर्भः - (महा.ना.१.१२) | ३५३ |
| अद्भ्यो हीदमुत्पद्यते (कौण्डिन्यश्रुतिः) | ५१३ |
| अध्यायान्ते द्विरुक्तिः स्यात् - (गारुडे) | ५१६ |
| अनादिनिधना नित्या - (स्मृतिः) | ३२८ |
| अनादिर्वाऽयमाकाशः | ४१६ |
| अनाद्यनन्तं जगदेतद् | ३४९ |
| अनुक्तं पञ्चभिर्वेदैः - (स्का.पु.) | ३४७ |
| अनुरुपः क्रमः सृष्टौ - (पाद्मे) | ४३८ |
| अन्नं रसादिरूपेण - (स्मृतिः) | ३५७ |
| अन्यः परोऽन्यो जीवः - (काषायणश्रुतिः) | ४७० |
| अपाणिपादो जवनः - (श्वे.उ. ३.१९) | ३६५ |
| अम्मयं तु यतो मांसं - (भारते) | ५१३ |
| अवः परेण परः - (ऋ.१.१६४.१८) | ४७० |
| अविकारोऽपि भगवान् - (भागवततन्त्रम्) | ४२६ |
| असतः सदजायत - (ऋ.सं.१०.७२.२) | ३३४,४२५ |
| असत्यमप्रतिष्ठं ते - (भ.गी.१६.८) | ३४९ |
| असत्यमाहुर्जगदेतदज्ञाः | ३४९ |
| असद् वा इदमग्र आसीत् - (तै.उ. २.७) | ४२५ |
| असदेवेदमग्र आसीत् - (छा.उ.६.२.१) | ३३४ |

# एतद्ग्रन्थोदाहृतप्रमाणवचनानां वर्णानुक्रमसूचिका

**प**

ह

# एतद्ग्रन्थोदाहृतप्रमाणवचनानां वर्णानुक्रमसूचिका

## परिशिष्टम् - २

# ॥ ब्रह्मसूत्रानुक्रमणिका ॥

## तृतीयाध्यायः

## ॥ ब्रह्मसूत्रानुक्रमणिका ॥

### तृतीयाध्यायः

*******

## परिशिष्टम् - ३

# ब्रह्मसूत्राणि (मतत्रयरीत्या)

### अद्वैतमतरीत्या

प्रथमध्याऽयस्य प्रथमः पादः

**जिज्ञासाधिकरणम्**

१. अथातो ब्रह्मजिज्ञासा

**जन्माधिकरणम्**

२. जन्माद्यस्य यतः

**शास्त्रयोनित्वाधिकरणम्**

३. शास्त्रयोनित्वात्

**समन्वयाधिकरणम्**

४. तत्तु समन्वयात्

**ईक्षत्यधिकरणम्**

५. ईक्षतेर्नाशब्दम्

६. गौणश्चेन्नाऽत्मशब्दात्

७. तन्निष्ठस्य मोक्षोपदेशात्

८. हेयत्वावचनाच्च

९. स्वाप्ययात्

१०. गतिसामान्यात्

११. श्रुतत्वाच्च

**आनन्दमयाधिकरणम्**

१२. आनन्दमयोऽभ्यासात्

१३. विकारशब्दान्नेति चेन्न प्राचुर्यात्

१४. तद्धेतुव्यपदेशाच्च

१५. मान्त्रवर्णिकमेव च गीयते

१६. नेतरोऽनुपपत्तेः

### विशिष्टाद्वैतमतरीत्या

प्रथमध्याऽयस्य प्रथमः पादः

**जिज्ञासाधिकरणम्**

१. अथातो ब्रह्मजिज्ञासा

**जन्माधिकरणम्**

२. जन्माद्यस्य यतः

**शास्त्रयोनित्वाधिकरणम्**

३. शास्त्रयोनित्वात्

**समन्वयाधिकरणम्**

४. तत्तु समन्वयात्

**ईक्षत्यधिकरणम्**

५. ईक्षतेर्नाशब्दम्

६. गौणश्चेन्नाऽत्मशब्दात्

७. तन्निष्ठस्य मोक्षोपदेशात्

८. हेयत्वावचनाच्च

९. प्रतिज्ञाविरोधात्

१०. स्वाप्ययात्

११. गतिसामान्यात्

१२. श्रुतत्वाच्च

**आनन्दमयाधिकरणम्**

१३. आनन्दमयोऽभ्यासात्

१४. विकारशब्दान्नेति चेन्न प्राचुर्यात्

१५. तद्धेतुव्यपदेशाच्च

१६. मान्त्रवर्णिकमेव च गीयते

### द्वैतमतरीत्या

प्रथमाध्यायस्य प्रथमःपादः

**जिज्ञासाधिकरणम्**

१. अथातो ब्रह्मजिज्ञासा

**जन्माधिकरणम्**

२.जन्माद्यस्य यतः

**शास्त्रयोनित्वाधिकरणम्**

३.शास्त्रयोनित्वात्

**समन्वयाधिकरणम्**

४.तत्तु समन्वयात्

**ईक्षत्यधिकरणम्**

५.ईक्षतेर्नाशब्दं

६.गौणश्चेन्नाऽत्मशब्दात्

७.तन्निष्ठस्य मोक्षोपदेशात्

८.हेयत्वावचनाच्च

९.स्वाप्ययात्

१०.गतिसामान्यात्

११. श्रुतत्वाच्च

**आनन्दमयाधिकरणम्**

१२.आनन्दमयोऽभ्यासात्

१३.विकारशब्दान्नेति चेन्न प्राचुर्यात्

१४.तद्धेतुव्यपदेशाच्च

१५. मान्त्रवर्णिकमेव च गीयते

१६.नेतरोऽनुपपत्तेः

१७. भेदव्यपदेशाच्च

१८. कामाच्च नानुमानापेक्षा

१९. अस्मिन्नस्य च तद्योगं शास्ति

**अन्तरधिकरणम्**

२०. अन्तस्तद्धर्मोपदेशात्

२१. भेदव्यपदेशाच्चान्यः

**आकाशाधिकरणम्**

२२. आकाशस्तल्लिङ्गात्

**प्राणाधिकरणम्**

२३. अत एव प्राणः

**ज्योतिश्चरणाधिकरणम्**

२४. ज्योतिश्चरणाभिधानात्

२५. छन्दोभिधानान्नेति चेन्न तथा चेतोऽर्पणनिगदात् तथाहि दर्शनम्

२६. भूतादिपादव्यपदेशोपपत्तेश्चैवम्

२७. उपदेशभेदान्नेति चेन्नोभयस्मिन्नप्यविरोधात्

**प्रतर्दनाधिकरणम्**

२८. प्राणस्तथाऽनुगमात्

२९. न वक्तुरात्मोपदेशादिति चेदध्यात्मसम्बन्धभूमा ह्यस्मिन्

३०. शास्त्रदृष्ट्या तूपदेशो वामदेववत्

१७. नेतरोऽनुपपत्तेः

१८. भेदव्यपदेशाच्च

१९. कामाच्च नानुमानापेक्षा

२०. अस्मिन्नस्य च तद्योगं शास्ति

**अन्तरधिकरणम्**

२१. अन्तस्तद्धर्मोपदेशात्

२२. भेदव्यपदेशाच्चान्यः

**आकाशाधिकरणम्**

२३. आकाशस्तल्लिङ्गात्

**प्राणाधिकरणम्**

२४. अत एव प्राणः

**ज्योतिरधिकरणम्**

२५. ज्योतिश्चरणाभिधानात्

२६. छन्दोभिधानान्नेति चेन्न तथा चेतोऽर्पणनिगमात् तथाहि दर्शनम्

२७. भूतादिपादव्यपदेशोपपत्तेश्चैवम्

२८. उपदेशभेदान्नेति चेन्नोभयस्मिन्नप्यविरोधात्

**इन्द्रप्राणाधिकरणम्**

२९. प्राणस्तथाऽनुगमात्

३०. न वक्तुरात्मोपदेशादिति चेदध्यात्मसम्बन्धभूमा ह्यस्मिन्

३१. शास्त्रदृष्ट्या तूपदेशो वामदेववत्

१७. भेदव्यपदेशाच्च

१८. कामाच्च नानुमानापेक्षा

१९. अस्मिन्नस्य च तद्योगं शास्ति

**अन्तःस्थत्वाधिकरणम्**

२०. अन्तस्तद्धर्मोपदेशात्

२१. भेदव्यपदेशाच्चान्यः

**आकाशाधिकरणम्**

२२. आकाशस्तल्लिङ्गात्

**प्राणाधिकरणम्**

२३. अत एव प्राणः

**ज्योतिरधिकरणम्**

२४. ज्योतिश्चरणाभिधानात्

**छन्दोऽभिधानाधिकरणम्**

२५. छन्दोभिधानान्नेति चेन्न तथा चेतोऽर्पणनिगदात् तथाहि दर्शनम्

२६. भूतादिपादव्यपदेशोपपत्तेश्चैवम्

२७. उपदेशभेदान्नेति चेन्नोभयस्मिन्नप्यविरोधात्

**पादान्त्यप्राणाधिकरणम्**

२८. प्राणस्तथाऽनुगमात्

२९. न वक्तुरात्मोपदेशादिति चेदध्यात्मसम्बन्धभूमा ह्यस्मिन्

३०. शास्त्रदृष्ट्या तूपदेशो वामदेववत्

३१. जीवमुख्यप्राणलिङ्गान्नेति चेन्नोपासात्रैविध्यादाश्रितत्वादिह तद्योगात्

**इति प्रथमाध्यायस्य प्रथमः पादः**

| | अत्र **पादे** | **आदितः** |
|---|---|---|
| अधिकरणानि | ११ | ११ |
| सूत्राणि | ३१ | ३१ |

**द्वितीयः पादः**

**सर्वत्रप्रसिध्यधिकरणम्**

३२. सर्वत्र प्रसिद्धोपदेशात्

३३. विवक्षितगुणोपपत्तेश्च

३४. अनुपपत्तेस्तु न शारीरः

३५. कर्मकर्तृव्यपदेशाच्च

३६. शब्दविशेषात्

३७. स्मृतेश्च

३८. अर्भकौकस्त्वात्तद्व्यपदेशाच्च नेति चेन्न निचाय्यत्वादेवं व्योमवच्च

३९. सम्भोगप्राप्तिरितिचेन्न वैशेष्यात्

**अत्त्रधिकरणम्**

४०. अत्ता चराचरग्रहणात्

४१. प्रकरणाच्च

**गुहाधिकरणम्**

४२. गुहां प्रविष्टावात्मानौ हि तद्दर्शनात्

४३. विशेषणाच्च

**अन्तराधिकरणम्**

४४. अन्तर उपपत्तेः

३२. जीवमुख्यप्राणलिङ्गान्नेति चेन्नोपासात्रैविध्यादाश्रितत्वादिह तद्योगात्

**इति प्रथमाध्यायस्य प्रथमः पादः**

| | अत्र **पादे** | **आदितः** |
|---|---|---|
| अधिकरणानि | ११ | ११ |
| सूत्राणि | ३२ | ३२ |

**द्वितीयः पादः**

**सर्वत्रप्रसिद्धाधिकरणम्**

३३. सर्वत्र प्रसिद्धोपदेशात्

३४. विवक्षितगुणोपपत्तेश्च

३५. अनुपपत्तेस्तु न शारीरः

३६. कर्मकर्तृव्यपदेशाच्च

३७. शब्दविशेषात्

३८. स्मृतेश्च

३९. अर्भकौकस्त्वात्तद्व्यपदेशाच्च नेति चेन्न निचाय्यत्वादेवं व्योमवच्च

४०. सम्भोगप्राप्तिरितिचेन्न वैशेष्यात्

**अत्त्रधिकरणम्**

४१. अत्ता चराचरग्रहणात्

४२. प्रकरणाच्च

४३. गुहां प्रविष्टावात्मानौ हि तद्दर्शनात्

४४. विशेषणाच्च

**अन्तरधिकरणम्**

४५. अन्तर उपपत्तेः

३१. जीवमुख्यप्राणलिङ्गान्नेति चेन्नोपासात्रैविध्यादाश्रितत्वादिह तद्योगात्

**इति प्रथमाध्यायस्य प्रथमः पादः**

| | अत्र **पादे** | **आदितः** |
|---|---|---|
| अधिकरणानि | १२ | १२ |
| सूत्राणि | ३१ | ३१ |

**द्वितीयः पादः**

**सर्वगतत्वाधिकरणम्**

३२. सर्वत्र प्रसिद्धोपदेशात्

३३. विवक्षितगुणोपपत्तेश्च

३४. अनुपपत्तेस्तु न शारीरः

३५. कर्मकर्तृव्यपदेशाच्च

३६. शब्दविशेषात्

३७. स्मृतेश्च

३८. अर्भकौकस्त्वात्तद्व्यपदेशाच्च नेति चेन्न निचाय्यत्वादेवं व्योमवच्च

३९. सम्भोगप्राप्तिरिति चेन्न वैशेष्यात्

**अतृत्वाधिकरणम्**

४०. अत्ता चराचरग्रहणात्

४१. प्रकरणाच्च

**गुहाधिकरणम्**

४२. गुहां प्रविष्टावात्मानौ हि तद्दर्शनात्

४३. विशेषणाच्च

**अन्तराधिकरणम्**

४४. अन्तर उपपत्तेः

४५. स्थानादिव्यपदेशाच्च
४६. सुखविशिष्टाभिधानादेव च
४७. श्रुतोपनिषत्कगत्यभिधानाच्च
४८. अनवस्थितेरसम्भवाच्च नेतरः

**अन्तर्याम्यधिकरणम्**

४९. अन्तर्याम्यधिदैवादिषु तद्धर्मव्यपदेशात्
५०. न च स्मार्तमतद्धर्माभिलापात्
५१. शारीरश्चोभयेऽपि हि भेदेनैनमधीयते

**अदृश्यत्वाधिकरणम्**

५२. अदृश्यत्वादिगुणको धर्मोक्तेः
५३. विशेषणभेदव्यपदेशाभ्यां च नेतरौ
५४. रूपोपन्यासाच्च

**वैश्वानराधिकरणम्**

५५. वैश्वानरः साधारणशब्द-विशेषात्
५६. स्मर्यमाणमनुमानं स्यादिति
५७. शब्दादिभ्योऽन्तःप्रतिष्ठानाच्च नेति चेन्न तथा दृष्ट्युपदेशाद-सम्भवात् पुरुषमपि चैनमधीयते
५८. अत एव न देवता भूतं च
५९. साक्षादप्यविरोधं जैमिनिः
६०. अभिव्यक्तेरित्याश्मरथ्यः
६१. अनुस्मृतेर्बादरिः
६२. सम्पत्तेरिति जैमिनिस्तथाहि दर्शयति

४६. स्थानादिव्यपदेशाच्च
४७. सुखविशिष्टाभिधानादेव च
४८. अत एव च स ब्रह्म
४९. श्रुतोपनिषत्कगत्यभिधानाच्च
५०. अनवस्थितेरसम्भवाच्च नेतरः

**अन्तर्याम्यधिकरणम्**

५१. अन्तर्याम्यधिदैवाधि-लोकादिषु तद्धर्मव्यपदेशात्
५२. न च स्मार्तमतद्धर्माभि-लापाच्छारीरश्च
५३. उभयेऽपि हि भेदेनैनमधीयते

**अदृश्यत्वादि गुणकाधिकरणम्**

५४. अदृश्यत्वादिगुणको धर्मोक्तेः
५५. विशेषणभेदव्यपदेशाभ्यां च नेतरौ
५६. रूपोपन्यासाच्च

**वैश्वानराधिकरणम्**

५७. वैश्वानरः साधारणशब्दविशेषात्
५८. स्मर्यमाणमनुमानं स्यादिति
५९. शब्दादिभ्योऽन्तःप्रतिष्ठानाच्च नेति चेन्न तथा दृष्ट्युपदेशाद-सम्भवात्पुरुषमपि चैनमधीयते
६०. अत एव न देवता भूतं च
६१. साक्षादप्यविरोधं जैमिनिः
६२. अभिव्यक्तेरित्याश्मरथ्यः
६३. अनुस्मृतेर्बादरिः

४५. स्थानादिव्यपदेशाच्च
४६. सुखविशिष्टाभिधानादेव च
४७. श्रुतोपनिषत्कगत्यभिधानाच्च
४८. अनवस्थितेरसम्भवाच्च नेतरः

**अन्तर्याम्यधिकरणम्**

४९. अन्तर्याम्यधिदैवादिषु तद्धर्मव्यपदेशात्
५०. न च स्मार्तमतद्धर्माभिलापात्
५१. शारीरश्चोभयेऽपि हि भेदेनैनमधीयते

**अदृश्यत्वाधिकरणम्**

५२. अदृश्यत्वादिगुणको धर्मोक्तेः
५३. विशेषणभेदव्यपदेशाभ्यां च [illegible]
५४. रूपोपन्यासाच्च

**७. वैश्वानराधिकरणम्**

५५. वैश्वानरः साधारणशब्दविशेषात्
५६. स्मर्यमाणमनुमानं स्यादिति
५७. शब्दादिभ्योऽन्तःप्रतिष्ठाना-न्नेति चेन्न तथा दृष्ट्युपदेशाद-सम्भवात् पुरुषविधमपि चैनमधीयते
५८. अत एव न देवता भूतं च
५९. साक्षादप्यविरोधं जैमिनिः
६०. अभिव्यक्तेरित्याश्मरथ्यः
६१. अनुस्मृतेर्बादरिः
६२. सम्पत्तेरिति जैमिनिस्तथाहि दर्शयति

६३. आमनन्ति चैनमस्मिन्

**इति द्वितीयः पादः**

अत्र पादे आदितः

अधिकरणानि ०७ १८

सूत्राणि ३२ ६३

**तृतीयः पादः**

**द्युभ्वाधिकरणम्**

६४. द्युभ्वाद्यायतनं स्वशब्दात्

६५.मुक्तोपसृप्यव्यपदेशात्

६६. नानुमानमतच्छब्दात्

६७. प्राणभृच्च

६८. भेदव्यपदेशात्

६९. प्रकरणात्

७०. स्थित्यदनाभ्यां च

**भूमाधिकरणम्**

७१. भूमा सम्प्रसादादध्युपदेशात्

७२. धर्मोपपत्तेश्च

**अक्षराधिकरणम्**

७३. अक्षरमम्बरान्तधृतेः

७४. सा च प्रशासनात्

७५. अन्यभावव्यावृत्तेश्च

**ईक्षतिकर्मव्यपदेशाधिकरणम्**

७६. ईक्षतिकर्मव्यपदेशात्सः

**दहराधिकरणम्**

७७. दहर उत्तरेभ्यः

६४. सम्पत्तेरिति जैमिनिस्तथाहि दर्शयति

६५. आमनन्ति चैनमस्मिन्

**इति द्वितीयः पादः**

अत्र पादे आदितः

अधिकरणानि ०६ १७

सूत्राणि ३३ ६५

**तृतीयः पादः**

**द्युभ्वाद्यधिकरणम्**

६६. द्युभ्वाद्यायतनं स्वशब्दात्

६७. मुक्तोपसृप्यव्यपदेशाच्च

६८. नानुमानमतच्छब्दात्

प्राणभृच्च

६९. भेदव्यपदेशात्

७०. प्रकरणात्

७१. स्थित्यदनाभ्यां च

**भूमाधिकरणम्**

७२. भूमा सम्प्रसादादध्युपदेशात्

७३. धर्मोपपत्तेश्च

**अक्षराधिकरणम्**

७४. अक्षरमम्बरान्तधृतेः

७५. सा च प्रशासनात्

७६. अन्यभावव्यावृत्तेश्च

**ईक्षतिकर्माधिकरणम्**

७७. ईक्षतिकर्मव्यपदेशात्सः

**दहराधिकरणम्**

७८. दहर उत्तरेभ्यः

६३. आमनन्ति चैनमस्मिन्

**इति द्वितीयः पादः**

अत्र पादे आदितः

अधिकरणानि ०७ १९

सूत्राणि ३२ ६३

**तृतीयः पादः**

**द्युभ्वाद्यधिकरणम्**

६४. द्युभ्वाद्यायतनं स्वशब्दात्

६५.मुक्तोपसृप्यव्यपदेशात्

६६. नानुमानमतच्छब्दात्

६७. प्राणभृच्च

६८. भेदव्यपदेशात्

६९. प्रकरणात्

७०. स्थित्यदनाभ्यां च

**भूमाधिकरणम्**

७१. भूमा सम्प्रसादादध्युपदेशात्

७२. धर्मोपपत्तेश्च

**अक्षराधिकरणम्**

७३. अक्षरमम्बरान्तधृतेः

७४. सा च प्रशासनात्

७५. अन्यभावव्यावृत्तेश्च

**सदधिकरणम्**

७६. ईक्षतिकर्मव्यपदेशात्सः

**दहराधिकरणम्**

७७. दहर उत्तरेभ्यः

७८. गतिशब्दाभ्यां तथा हि दृष्टं लिङ्गं च
७९. धृतेश्च महिम्नोऽस्यास्मिन्नुपलब्धेः
८०. प्रसिद्धेश्च
८१. इतरपरामर्शात्स इति चेन्नासम्भवात्
८२. उत्तराच्चेदाविर्भूतस्वरूपस्तु
८३. अन्यार्थश्च परामर्शः
८४. अल्पश्रुतोरिति चेत्तदुक्तम्

**अनुकृत्यधिकरणम्**

८५. अनुकृतेस्तस्य च
८६. अपि च स्मर्यते

**प्रमिताधिकरणम्**

८७. शब्दादेव प्रमितः
८८. हृद्यपेक्षया तु मनुष्याधिकारत्वात्

**देवताधिकरणम्**

८९. तदुपर्यपि बादरायणः सम्भवात्
९०. विरोधः कर्मणीति चेन्नानेकप्रतिपत्तेर्दर्शनात्
९१. शब्द इति चेन्नातः प्रभवात्प्रत्यक्षानुमानाभ्याम्
९२. अत एव च नित्यत्वं
९३. समाननामरूपत्वाच्चाऽवृत्तावप्यविरोधो दर्शनात्स्मृतेश्च
९४. मध्वादिष्वसम्भवादनधिकारं जैमिनिः

७९. गतिशब्दाभ्यां तथा हि दृष्टं लिङ्गं च
८०. धृतेश्च महिम्नोऽस्यास्मिन्नुपलब्धेः
८१. प्रसिद्धेश्च
८२. इतरपरामर्शात्स इति चेन्नासम्भवात्
८३. उत्तराच्चेदाविर्भूतस्वरूपस्तु
८४. अन्यार्थश्च परामर्शः
८५. अल्पश्रुतेरिति चेत्तदुक्तम्
८६. अनुकृतेस्तस्य च
८७. अपि स्मर्यते

**प्रमिताधिकरणम्**

८८. शब्दादेव प्रमितः
८९. हृद्यपेक्षया तु मनुष्याधिकारत्वात्

**देवताधिकरणम्**

९०. तदुपर्यपि बादरायणः सम्भवात्
९१. विरोधः कर्मणीति चेन्नानेकप्रतिपत्तेर्दर्शनात्
९२. शब्द इति चेन्नातः प्रभवात्प्रत्यक्षानुमानाभ्याम्
९३. अत एव च नित्यत्वं
९४. समाननामरूपत्वाच्चाऽवृत्तावप्यविरोधो दर्शनात्स्मृतेश्च

**मध्वधिकरणम्**

९५. मध्वादिष्वसम्भवादनधिकारं जैमिनिः

७८. गतिशब्दाभ्यां तथा हि दृष्टं लिङ्गं च
७९. धृतेश्च महिम्नोऽस्यास्मिन्नुपलब्धेः
८०. प्रसिद्धेश्च
८१. इतरपरामर्शात्स इति चेन्नासम्भवात्
८२.उत्तराच्चेदाविर्भूतस्वरूपस्तु
८३. अन्यार्थश्च परामर्शः
८४. अल्पश्रुतेरिति चेत्तदुक्तम्

**अनुकृत्यधिकरणम्**

८५. अनुकृतेस्तस्य च
८६. अपि स्मर्यते

**वामनाधिकरणम्**

८७. शब्दादेवप्रमितः
८८.हृद्यपेक्षया तु मनुष्याधिकारत्वात्

**देवताधिकरणम्**

८९. तदुपर्यपि बादरायणः सम्भवात्
९०. विरोधः कर्मणीति चेन्नानेकप्रतिपत्तेर्दर्शनात्
९१. शब्द इति चेन्नातः प्रभवात्प्रत्यक्षानुमानाभ्याम्
९२. अत एव च नित्यत्वं
९३. समाननामरूपत्वाच्चाऽवृत्तावप्यविरोधो दर्शनात्स्मृतेश्च
९४. मध्वादिष्वसम्भवादनधिकारं जैमिनिः

९५. ज्योतिषि भावाच्च
९६. भावं तु बादरायणोऽस्ति हि

**अपशूद्राधिकरणम्**

९७. शुगस्य तदनादरश्रवणात्तदाद्रवणात्सूच्यते हि
९८. क्षत्रियत्वगतेश्चोत्तरत्र चैत्ररथेन लिङ्गात्
९९. संस्कारपरामर्शात्तदभावाभिलापाच्च
१०० तदभावनिर्धारणे च प्रवृत्तेः
१०१. श्रवणाध्ययनार्थप्रतिषेधात् स्मृतेश्च

**कम्पनाधिकरणम्**

१०२. कम्पनात्

**ज्योतिरधिकरणम्**

१०३. ज्योतिर्दर्शनात्

**अर्थान्तरत्वव्यपदेशाधिकरणम्**

१०४. आकाशोऽर्थान्तरत्वादिव्यपदेशात्

**सुषुप्त्युत्क्रान्त्यधिकरणम्**

१०५. सुषुप्त्युत्क्रान्त्योर्भेदेन
१०६. पत्यादिशब्देभ्यः

**इति तृतीयः पादः**

| | अत्र पादे | आदितः |
|---|---|---|
| अधिकरणानि | १४ | ३२ |
| सूत्राणि | ४३ | १०६ |

९६. ज्योतिषि भावाच्च
९७. भावं तु बादरायणोऽस्ति हि

**अपशूद्राधिकरणम्**

९८. शुगस्य तदनादरश्रवणात्तदाद्रवणात्सूच्यते हि
९९. क्षत्रियत्वगतेश्च
१००. उत्तरत्र चैत्ररथेन लिङ्गात्
१०१. संस्कारपरामर्शात्तदभावाभिलापाच्च
१०२. तदभावनिर्धारणे च प्रवृत्तेः
१०३. श्रवणाध्ययनार्थप्रतिषेधात्
१०४. स्मृतेश्च
१०५. कम्पनात्
१०६. ज्योतिर्दर्शनात्

**अर्थान्तरत्वादिव्यपदेशाधिकरणम्**

१०७. आकाशोऽर्थान्तरत्वादिव्यपदेशात्
१०८. सुषुप्त्युत्क्रान्त्योर्भेदेन
१०९. पत्यादिशब्देभ्यः

**इति तृतीयः पादः**

| | अत्र पादे | आदितः |
|---|---|---|
| अधिकरणानि | १० | २७ |
| सूत्राणि | ४४ | १०९ |

९५. ज्योतिषि भावाच्च
९६. भावं तु बादरायणोऽस्ति हि

**अपशूद्राधिकरणम्**

९७. शुगस्य तदनादरश्रवणात्तदाद्रवणात्सूच्यते हि
९८. क्षत्रियत्वावगतेश्चोत्तरत्र चैत्ररथेन लिङ्गात्
९९. संस्कारपरामर्शात्तदभावाभिलापाच्च
१०० तदभावनिर्धारणे च प्रवृत्तेः
१०१. श्रवणाध्ययनार्थप्रतिषेधात् स्मृतेश्च

**कम्पनाधिकरणम्**

१०२. कम्पनात्

**ज्योतिरधिकरणम्**

१०३. ज्योतिर्दर्शनात्

**आकाशाधिकरणम्**

१०४. आकाशोऽर्थान्तरत्वादिव्यपदेशात्

**सुषुप्त्यधिकरणम्**

१०५. सुषुप्त्युत्क्रान्त्योर्भेदेन

**ब्राह्मणाधिकरणम्**

१०६. पत्यादिशब्देभ्यः

**इति तृतीयः पादः**

| | अत्र पादे | आदितः |
|---|---|---|
| अधिकरणानि | १४ | ३२ |
| सूत्राणि | ४३ | १०६ |

अथ चतुर्थः पादः

**आनुमानिकाधिकरणम्**

१०७. आनुमानिकमप्येकेषामिति चेन्न शरीररूपकविन्यस्त-गृहीतेर्दर्शयति च

१०८. सूक्ष्मं तु तदर्हत्वात्

१०९. तदधीनत्वादर्थवत्

११०. ज्ञेयत्वावचनाच्च

१११. वदतीति चेन्न प्राज्ञो हि प्रकरणात्

११२. त्रयाणामेव चैवमुपन्यासः प्रश्नश्च

११३. महद्वच्च

**चमसाधिकरणम्**

११४. चमसवदविशेषात्

११५. ज्योतिरुपक्रमात्तु तथा ह्यधीयत एके

११६. कल्पनोपदेशाच्च मध्वादिवदविरोधः

**सङ्ख्योपसङ्ग्रहाधिकरणम्**

११७. न सङ्ख्योपसङ्ग्रहादपि नानाभावादतिरेकाच्च

११८. प्राणादयो वाक्यशेषात्

११९. ज्योतिषैकेषामसत्यन्ने

**कारणत्वाधिकरणम्**

१२०. कारणत्वेन चाऽकाशादिषु यथाव्यपदिष्टोक्तेः

१२१. समाकर्षात्

अथ चतुर्थः पादः

**आनुमानिकाधिकरणम्**

११०. आनुमानिकमप्येकेषामिति चेन्न शरीररूपकविन्यस्त-गृहीतेर्दर्शयति च

१११. सूक्ष्मं तु तदर्हत्वात्

११२. तदधीनत्वादर्थवत्

११३. ज्ञेयत्वावचनाच्च

११४. वदतीति चेन्न प्राज्ञो हि प्रकरणात्

११५. त्रयाणामेव चैवमुपन्यासः प्रश्नश्च

११६. महद्वच्च

**चमसाधिकरणम्**

११७. चमसवदविशेषात्

११८. ज्योतिरुपक्रमा तु तथा ह्यधीयत एके

११९. कल्पनोपदेशाच्च मध्वादिवदविरोधः

**सङ्ख्योपसङ्ग्रहाधिकरणम्**

१२०. न सङ्ख्योपसङ्ग्रहादपि नानाभावादतिरेकाच्च

१२१. प्राणादयो वाक्यशेषात्

१२२. ज्योतिषैकेषामसत्यन्ने

**कारणत्वाधिकरणम्**

१२३. कारणत्वेन चाऽकाशादिषु यथाव्यपदिष्टोक्तेः

१२४. समाकर्षात्

अथ चतुर्थः पादः

**आनुमानाधिकरणम्**

१०७. आनुमानिकमप्येकेषामिति चेन्न शरीररूपकविन्यस्त-गृहीतेर्दर्शयति च

१०८. सूक्ष्मं तु तदर्हत्वात्

१०९. तदधीनत्वादर्थवत्

११०. ज्ञेयत्वावचनाच्च

१११. वदतीति चेन्न प्राज्ञो हि

११२. प्रकरणात्

११३. त्रयाणामेव चैवमुपन्यासः प्रश्नश्च

११४. महद्वच्च

११५. चमसवदविशेषात्

**ज्योतिरुपक्रमाधिकरणम्**

११६. ज्योतिरुपक्रमात्तु तथा ह्यधीयत एके

११७. कल्पनोपदेशाच्च मध्वादिवदविरोधः

**नसङ्ख्योपसङ्ग्रहाधिकरणम्**

११८. न सङ्ख्योपसङ्ग्रहादपि नानाभावादतिरेकाच्च

११९. प्राणादयो वाक्यशेषात्

१२०. ज्योतिषैकेषामसत्यन्ने

**आकाशाधिकरणम्**

१२१. कारणत्वेन चाऽकाशादिषु यथाव्यपदिष्टोक्तेः

**बालाक्यधिकरणम्**

१२२. जगद्वाचित्वात्

१२३. जीवमुख्यप्राणलिङ्गान्नेति चेत्तद् व्याख्यातम्

१२४. अन्यार्थं तु जैमिनिः प्रश्नव्याख्यानाभ्यामपि चैवमेके

**वाक्यान्वयाधिकरणम्**

१२५. वाक्यान्वयात्

१२६. प्रतिज्ञासिद्धेर्लिङ्ग-माश्मरथ्यः

१२७. उत्क्रमिष्यत एवंभावादि-त्यौडुलोमिः

१२८. अवस्थितेरिति काशकृत्स्नः

**प्रकृत्यधिकरणम्**

१२९. प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात्

१३०. अभिध्योपदेशाच्च

१३१. साक्षाच्चोभयाम्नानात्

१३२. आत्मकृतेःपरिणामात्

१३३. योनिश्च हि गीयते

**सर्वव्याख्यानाधिकरणम्**

१३४. एतेन सर्वे व्याख्याता व्याख्याताः

**इति चतुर्थः पादः**

| | अत्र पादे | आदितः |
|---|---|---|
| अधिकरणानि | ८ | ४० |
| सूत्राणि | २८ | १३४ |

**जगद्वाचित्वाधिकरणम्**

१२५.जगद्वाचित्वात्

१२६.जीवमुख्यप्राणलिङ्गान्नेति चेत्तद् व्याख्यातम्

१२७.अन्यार्थं तु जैमिनिः प्रश्नव्याख्यानाभ्यामपि चैवमेके

**वाक्यान्वयाधिकरणम्**

१२८.वाक्यान्वयात्

१२९.प्रतिज्ञासिद्धेर्लिङ्गमाश्मरथ्यः

१३०.उत्क्रमिष्यत एवंभावादि-त्यौडुलोमिः

१३१.अवस्थितेरिति काशकृत्स्नः

**प्रकृत्यधिकरणम्**

१३२.प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात्

१३३.अभिध्योपदेशाच्च

१३४. साक्षाच्चोभयाम्नानात्

१३५.आत्मकृतेः

१३६.परिणामात्

१३७.योनिश्च हि गीयते

**सर्वव्याख्यानाधिकरणम्**

१३८.एतेन सर्वे व्याख्याता व्याख्याताः

**इति चतुर्थपादः**

| | अत्र पादे | आदितः |
|---|---|---|
| अधिकरणानि | ८ | ३५ |
| सूत्राणि | २९ | १३८ |

**समाकर्षाधिकरणम्**

१२२. समाकर्षात्

१२३. जगद्वाचित्वात्

१२४. जीवमुख्यप्राणलिङ्गादिति चेत्तद् व्याख्यातम्

१२५. अन्यार्थं तु जैमिनिः प्रश्नव्याख्यानाभ्यामपि चैवमेके

१२६. वाक्यान्वयात्

१२७. प्रतिज्ञासिद्धेर्लिङ्ग-माश्मरथ्यः

१२८. उत्क्रमिष्यत एवंभावादि-त्यौडुलोमिः

१२९. अवस्थितेरिति काशकृत्स्नः

**प्रकृत्यधिकरणम्**

१३०. प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात्

१३१. अभिध्योपदेशाच्च

१३२. साक्षाच्चोभयाम्नानात्

१३३. आत्मकृतेः परिणामात्

१३४. योनिश्च हि गीयते

**एतेनसर्वेव्याख्याताधिकरणम्**

१३५. एतेन सर्वे व्याख्याता व्याख्याताः

**इति चतुर्थः पादः**

| | अत्र पादे | आदितः |
|---|---|---|
| अधिकरणानि | ७ | ४० |
| सूत्राणि | २९ | १३५ |

अथ द्वितीयाध्यायस्य प्रथमः पादः

स्मृत्यधिकरणम्

१३५. स्मृत्यनवकाशदोषप्रसङ्ग इति चेन्नान्यस्मृत्यनवकाशदोषप्रसङ्गात्

१३६. इतरेषां चानुपलब्धेः

योगप्रत्युक्त्यधिकरणम्

१३७. एतेन योगः प्रत्युक्तः

न विलक्षणत्वाधिकरणम्

१३८. न विलक्षणत्वादस्य तथात्वं च शब्दात्

१३९. अभिमानिव्यपदेशस्तु विशेषानुगतिभ्याम्

१४०. दृश्यते तु

१४१. असदिति चेन्न प्रतिषेधमात्रत्वात्

१४२. अपीतौ तद्वत्प्रसङ्गादसमञ्जसम्

१४३. न तु दृष्टान्तभावात्

१४४. स्वपक्षदोषाच्च

१४५. तर्काप्रतिष्ठानादप्यन्यथाऽनुमेयमिति चेदेवमप्यविमोक्षप्रसङ्गः

शिष्टापरिग्रहाधिकरणम्

१४६. एतेन शिष्टापरिग्रहा अपि व्याख्याताः

भोक्त्रापत्यधिकरणम्

१४७. भोक्त्रापत्तेरविभागश्चेत्स्याल्लोकवत्

अथ द्वितीयाध्यायस्य प्रथमः पादः

स्मृत्यधिकरणम्

१३९. स्मृत्यनवकाशदोषप्रसङ्ग इति चेन्नान्यस्मृत्यनवकाशदोषप्रसङ्गात्

१४०. इतरेषां चानुपलब्धेः

योगप्रत्युक्त्यधिकरणम्

१४१. एतेन योगः प्रत्युक्तः

विलक्षणत्वाधिकरणम्

१४२. न विलक्षणत्वादस्य तथात्वं च शब्दात्

१४३. अभिमानिव्यपदेशस्तु विशेषानुगतिभ्याम्

१४४. दृश्यते तु

१४५. असदिति चेन्न प्रतिषेधमात्रत्वात्

१४६. अपीतौ तद्वत्प्रसङ्गादसमञ्जसम्

१४७. न तु दृष्टान्तभावात्

१४८. स्वपक्षदोषाच्च

१४९. तर्काप्रतिष्ठानादपि

१५०. अन्यथाऽनुमेयमिति चेदेवमप्यनिर्मोक्षप्रसङ्गः

शिष्टापरिग्रहाधिकरणम्

१५१. एतेन शिष्टापरिग्रहा अपि व्याख्याताः

भोक्त्रापत्यधिकरणम्

१५२. भोक्त्रापत्तेरविभागश्चेत्स्याल्लोकवत्

अथ द्वितीयाध्यायस्य प्रथमः पादः

स्मृत्यधिकरणम्

१३६. स्मृत्यनवकाशदोषप्रसङ्ग इति चेन्नान्यस्मृत्यनवकाशदोषप्रसङ्गात्

१३७. इतरेषां चानुपलब्धेः

१३८. एतेन योगः प्रत्युक्तः

नविलक्षणत्वाधिकरणम्

१३९. न विलक्षणत्वादस्य तथात्वं च शब्दात्

१४०. दृश्यते तु

अभिमान्यधिकरणम्

१४१. अभिमानिव्यपदेशस्तु विशेषानुगतिभ्याम्

१४२. दृश्यते च

असदधिकरणम्

१४३. असदिति चेन्न प्रतिषेधमात्रत्वात्

१४४. अपीतौ तद्वत्प्रसङ्गादसमञ्जसम्

१४५. न तु दृष्टान्तभावात्

१४६. स्वपक्षदोषाच्च

१४७. तर्काप्रतिष्ठानादप्यन्यथाऽनुमेयमिति चेदेवमप्यनिर्मोक्षप्रसङ्गः

१४८. एतेन शिष्टा अपरिग्रहा अपि व्याख्याताः

भोक्त्रधिकरणम्

१४९. भोक्त्रापत्तेरविभागश्चेत् स्याल्लोकवत्

आरम्भणाधिकरणम्

१४८.तदनन्यत्वमारम्भणशब्दादिभ्यः

१४९. भावे चोपलब्धेः

१५०. सत्त्वाच्चावरस्य

१५१. असद्व्यपदेशान्नेति चेन्न धर्मान्तरेण वाक्यशेषात्

१५२. युक्तेः शब्दान्तराच्च

१५३. पटवच्च

१५४. यथा च प्राणादि

इतरव्यपदेशाधिकरणम्

१५५.इतरव्यपदेशाद्धिताकरणादि-दोषप्रसक्तिः

१५६. अधिकं तु भेदनिर्देशात्

१५७. अश्मादिवच्च तदनुपपत्तिः

उपसंहाराधिकरणम्

१५८. उपसंहारदर्शनान्नेति चेन्न क्षीरवद्धि

१५९. देवादिवदपि लोके

कृत्स्नप्रसक्त्यधिकरणम्

१६०. कृत्स्नप्रसक्तिर्निरवयवत्व-शब्दकोपो वा

१६१. श्रुतेस्तु शब्दमूलत्वात्

१६२.आत्मनि चैवं विचित्राश्च हि

१६३. स्वपक्षदोषाच्च

सर्वोपेताधिकरणम्

१६४. सर्वोपेता च तद्दर्शनात्

१६५. विकरणत्वान्नेति चेत्तदुक्तम्

आरम्भणाधिकरणम्

१५३.तदनन्यत्वमारम्भणशब्दादिभ्यः

१५४.भावे चोपलब्धेः

१५५.सत्त्वाच्चापरस्य

१५६.असद्व्यपदेशान्नेति चेन्न धर्मान्तरेण वाक्यशेषात् युक्तेः शब्दान्तराच्च

१५७.पटवच्च

१५८.यथा च प्राणादिः

इतरव्यपदेशाधिकरणम्

१५९.इतरव्यपदेशाद्धिताकरणादिदोषप्रसक्तिः

१६०.अधिकं तु भेदनिर्देशात्

१६१.अश्मादिवच्च तदनुपपत्तिः

उपसंहारदर्शनाधिकरणम्

१६२.उपसंहारदर्शनान्नेति चेन्न क्षीरवद्धि

१६३.देवादिवदपि लोके

कृत्स्नप्रसक्त्यधिकरणम्

१६४. कृत्स्नप्रसक्तिर्निरवयवत्व-शब्दकोपो वा

१६५.श्रुतेस्तु शब्दमूलत्वात्

१६६.आत्मनि चैवं विचित्राश्च हि

१६७.स्वपक्षदोषाच्च

१६८.सर्वोपेता च तद्दर्शनात्

१६९.विकरणत्वान्नेति चेत्तदुक्तम्

प्रयोजनवत्वाधिकरणम्

१७०.न प्रयोजनवत्त्वात्

१७१.लोकवत्तु लीलाकैवल्यम्

आरम्भणाधिकरणम्

१५०.तदनन्यत्वमारम्भणशब्दादिभ्यः

१५१. भावे चोपलब्धेः

१५२. सत्त्वाच्चावरस्य

१५३. असद्व्यपदेशान्नेति चेन्न धर्मान्तरेण वाक्यशेषात्

१५४. युक्तेः शब्दान्तराच्च

१५५. पटवच्च

१५६. यथा प्राणादिः

इतरव्यपदेशाधिकरणम्

१५७.इतरव्यपदेशाद्धिताकरणादि-दोषप्रसक्तिः

१५८. अधिकं तु भेदनिर्देशात्

१५९. अश्मादिवच्च तदनुपपत्तिः

१६०. उपसंहारदर्शनान्नेति चेन्न क्षीरवद्धि

१६१. देवादिवदपि लोके

१६२. कृत्स्नप्रसक्तिर्निरवयवत्व-शब्दकोपो वा

श्रुतेस्तु शब्दमूलत्वाधिकरणम्

१६३. श्रुतेस्तु शब्दमूलत्वात्

१६४.आत्मनि चैवं विचित्राश्च हि

१६५. स्वपक्षदोषाच्च

१६६. सर्वोपेता च तद्दर्शनात्

१६७. विकरणत्वान्नेति चेत्तदुक्तम्

नप्रयोजनाधिकरणम्

१६८. न प्रयोजनवत्त्वात्

१६९. लोकवत्तु लीलाकैवल्यम्

**न प्रयोजनवत्वाधिकरणम्**

१६६. न प्रयोजनवत्त्वात्

१६७. लोकवत्तु लीलाकैवल्यम्

**वैषम्यनैर्घृण्याधिकरणम्**

१६८. वैषम्यनैर्घृण्ये न सापेक्षत्वात्, तथा हि दर्शयति

१६९. न कर्माविभागादिति चेन्नानादित्वात्

१७०. उपपद्यते चाप्युपलभ्यते च

**सर्वधर्मोपपत्त्यधिकरणम्**

१७१. सर्वधर्मोपपत्तेश्च

**इति प्रथमः पादः**

अत्र पादे आदितः

| | | |
|---|---|---|
| अधिकरणानि | १३ | ५३ |
| सूत्राणि | ३७ | १७१ |

**अथ द्वितीयाध्यायस्य द्वितीयः पादः**

**रचनानुपपत्त्यधिकरणम्**

१७२. रचनानुपपत्तेश्च नानुमानम्

१७३. प्रवृत्तेश्च

१७४. पयोम्बुवच्चेत्तत्रापि

१७५. व्यतिरेकानवस्थितेश्चानपेक्षत्वात्

१७६. अन्यत्राभावाच्च न तृणादिवत्

१७७. अभ्युपगमेऽप्यर्थाभावात्

१७८. पुरुषाश्मवदिति चेत्तथाऽपि

१७९. अङ्गित्वानुपपत्तेश्च

१७२. वैषम्यनैर्घृण्ये न सापेक्षत्वात्, तथा हि दर्शयति

१७३. न कर्माविभागादिति चेन्नानादित्वात् उपपद्यते चाप्युपलभ्यते च

१७४. सर्वधर्मोपपत्तेश्च

**इति प्रथमः पादः**

अत्र पादे आदितः

| | | |
|---|---|---|
| अधिकरणानि | १० | ४५ |
| सूत्राणि | ३७ | १७४ |

**अथ द्वितीयाध्यायस्य द्वितीयः पादः**

**रचनानुपपत्त्यधिकरणम्**

१७५. रचनानुपपत्तेश्च नानुमानं प्रवृत्तेश्च

१७६. पयोम्बुवच्चेत्तत्रापि

१७७. व्यतिरेकानवस्थितेश्चानपेक्षत्वात्

१७८. अन्यत्राभावाच्च न तृणादिवत्

१७९. पुरुषाश्मवदिति चेत्तथाऽपि

१८०. अङ्गित्वानुपपत्तेश्च

१८१. अन्यथाऽनुमितौ च ज्ञशक्तिवियोगात्

**वैषम्यनैर्घृण्याधिकरणम्**

६७०. वैषम्यनैर्घृण्ये न सापेक्षत्वात्, तथा हि दर्शयति

१७१. न कर्माविभागादिति चेन्नानादित्वात्

१७२. उपपद्यते चाप्युपलभ्यते च

**सर्वधर्मोपपत्त्यधिकरणम्**

१७३. सर्वधर्मोपपत्तेश्च

**इति प्रथमः पादः**

अत्र पादे आदितः

| | | |
|---|---|---|
| अधिकरणानि | ११ | ५१ |
| सूत्राणि | ३८ | १७३ |

**अथ द्वितीयाध्यायस्य द्वितीयः पादः**

**रचनानुपत्त्यधिकरणम्**

१७४. रचनानुपपत्तेश्च नानुमानम्

१७५. प्रवृत्तेश्च

१७६. पयोम्बुवच्चेत्तत्रापि

१७७. व्यतिरेकानवस्थितेश्चानपेक्षत्वात्

**अन्यत्राभावाधिकरणम्**

१७८. अन्यत्राभावाच्च न तृणादिवत्

**अभ्युपगमाधिकरणम्**

१७९. अभ्युपगमेऽप्यर्थाभावात्

